THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

NO. 105.

( Veda Section, No. 6 )

THE

# TĀṆḌYAMAHABRĀHMAṆA

BELONGING TO The SĀMA VEDA

WITH THE COMMENTARY OF

SĀYĀNACHĀRYA.

*Edited with Notes, Introduction, etc.,*

By

VEDAVIŚARADA, MĪMĀṂSAKESARI,

*Pandit. A. Chinnaswami S'astri*

Professor, Benares Hindu University.

PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

1935.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशी संस्कृत सीरिज़ ग्रन्थमालायाः
१०५
वेदविभागे (६) षष्ठं पुष्पम् ।

सामवेदीय-

# ताण्ड्यमहाब्राह्मणम् ।

## सायणाचार्यविरचितभाष्यसहितम् ।

श्रीकाशीहिन्दूविश्वविद्यालयप्रधानमीमांसाध्यापकेन
"वेदविशारदेन, मीमांसाकेसरिणा"
पण्डितप्रवरेण श्रीचिन्नस्वामिशास्त्रिणा भूमिकाटिप्पण्या-
दिभिस्संयोज्य संशोधितम् ॥

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

१९४१

# किञ्चिन्निवेदनम् ॥

अयमिदानीं ताण्ड्यमहाब्राह्मणाख्यस्य सामवेदादिमब्राह्मणस्य द्वादशाध्यायात्मकः प्रथमो भागः पुनर्मुद्रापितः प्रकाशं नीयते। अस्य च सभाष्यस्य प्राथमिकं मुद्रणं इतश्चतुष्षष्टेर्वर्षेभ्यः पूर्वं कलिकातानगरे Asiatic Society समाख्यया समित्या कृतं प्रकाशितञ्चेति तदर्थं धन्यवादार्हा सा समितिरतीवेति नाऽत्र संशयलेशः । तथाऽपि तदानीं समीचीनादर्शपुस्तकालाभेन यथाकथञ्चित् प्रकाशनेनाऽपि ग्रन्थसंरक्षणमभिषता तदानीन्तनेन प्रकाशकेन यथोपलम्भं प्रकाशं प्रापितः । अतश्च तत्र मूलेऽशुद्धिविशेषाभावेऽपि भाष्यमशुद्धिभरितमेव मुद्रितमासीत् । मुद्रितस्याऽपि तस्याऽप्राप्तिमिदानीं पश्यता संस्कृतग्रन्थरक्षणैकदत्तचित्तेन श्रेष्ठिकुलतिलकेन श्रीचौखम्बासंस्कृतग्रन्थावलीप्रकाशकमहोदयेन पुनर्मुद्रणमस्याऽऽरभ्य अर्धाधिकभागमुद्रणानन्तरमेवाऽस्मद्धस्तं प्रापितस्संशोधनाय । अस्माभिस्तु तदनुरोधात् स्वीकृतं यद्यपि संशोधनम्, तदर्थं चाऽऽदर्शपुस्तकद्वयमानायितं अडयार् पुस्तकालयात् बडोदापुस्तकालयाच्च, तदनुसारेण कृतमपि शोधनमग्रे यथारुचि, तथाऽपि तदाऽल्पावशिष्टमुद्रणेऽस्मिन् प्रथमभागे साऽऽस्था नाऽस्माकमजनि यया भवितव्यम् । द्वितीयभागस्तु यथामतिशक्ति परिश्रम्य सर्वाङ्गसुन्दरः प्रकाशनीय इत्यस्ति महानभिलाषः, यदि स सेत्स्यति मन्ये प्रियपाठकास्तत्पर्यन्तीति । अथ च यद्यवसरो लभ्येत पुनरपीमं भागं सर्वाङ्गरमणीयं कृत्वा प्रकाशयिष्यामः । इदानीं ग्रन्थमिममनुपलम्भयोग्यमुपलब्धिविषयं कृतवतः श्रीचौखम्बाग्रन्थावल्यधिपतीनाशीर्भिरभिपूर्य सन्तोष्टव्यमित्यभ्यर्थये विद्वन्मणीन् । ग्रन्थविषये यद्वक्तव्यं तत् सर्वं द्वितीयभागभूमिकायामभिधास्यते । अत्र त्वेतावतैव विरम्यते—

वाराणसीहनुमद्घट्टः
मार्गशीर्षकृष्णसप्तमी
व० सं० १९९१
२८-११-३४ ई०

इति विपश्चिदनुचरः
अ० चिन्नस्वामिशास्त्री ।

॥ श्रीः ॥

# ताण्ड्यमहाब्राह्मणगतानां

# विषयाणां सूची ॥

ताण्ड्यमहाब्राह्मणगतविषयसूची समाप्ता ॥

# ताण्ड्यमहाब्राह्मणप्रथमभागान्तर्गतवाक्यानां सूचीपत्रम् ॥

द

ताण्ड्यमहाब्राह्मणप्रथमभागान्तर्गतवाक्यानां सूची समाप्ता ॥

# ताण्ड्यमहाब्राह्मणपूर्वार्धगतानां लोकसिद्धार्थानुवादकानां न्यायसिद्धार्थावबोधकानाञ्चाऽऽभाणकवाक्यानां सूची ॥

| | | | |
|---|---|---|---|
| २५ तस्मादयं लोकः पुनः पुनः प्रजायते | ६ | ८ | १६ |
| २६ तस्मादवाङादित्यस्तपति | १० | ५ | २ |
| २७ तस्मादश्वः प्रस्तरेण सम्मृज्यमान उपावरमते | ६ | ७ | १८ |
| २८ तस्मादाग्नेयं चन्द्रेण ( हिरण्येन ) इच्छन्ति | ६ | ६ | ११ |
| २९ तस्मादितर आत्मा मेद्यति च कृश्यति च | ५ | १ | ७ |
| ३० तस्मादिमे लोकास्सह सन्तो नानैव | १० | १० | १ |
| ३१ तस्मादु प्रेत्य पुनरायन्ति ( पशवः ) | ७ | २ | ६ |
| ३२ तस्मादु बहुपशुः ( वैश्यः ) | ६ | १ | १० |
| ३३ तस्मादु बाहुवीर्यः ( राजन्यः ) | ६ | १ | ८ |
| ३४ तस्मादुभयतः प्राणाः पशवः | ७ | ३ | २८ |
| ३५ तस्मादूर्ध्वोऽग्निर्दीदाय | १० | ५ | २ |
| ३६ तस्मादेकरूपा आरण्याः पशवः | ६ | ८ | ८ |
| ३७ तस्मादेषा ( प्राची ) दिशां वीर्यवत्तमैतां हि भूयिष्ठाः प्रीणयन्ति | ६ | ४ | १४ |
| ३८ तस्माद्ग्राममाहृतैर्भुञ्जते | ६ | ८ | ११ |
| ३९ तस्माद्ब्राह्मणस्य च राजन्यस्य चाऽऽद्यः (वैश्यः) | ६ | १ | १० |
| ४० तस्माद्ब्राह्मणो मुखेन वीर्यं करोति | ६ | १ | ६ |
| ४१ तस्माद्ब्राह्मणो वारणेन न पिवेत् | ५ | ३ | ११ |
| ४२ तस्माद्यथर्तु वायुः पवते | १० | ९ | २ |
| ४३ तस्माद्यथर्त्वोषधयः पच्यन्ते | १० | ८ | १ |
| ४४ तस्माद्वनस्पतीन् स्वेन किष्कुणा वज्रेण ( दण्डयुक्तपरश्वादिना ) वृश्चन्ति देवशस्ता हि | ६ | ५ | १२ |
| ४५ तस्माद्वयः पुच्छेन प्रतिष्ठायोत्पतति पुच्छेन प्रतिष्ठाय निषीदति | ५ | १ | १७ |
| ४६ तस्माद्वाचा सिद्धाः (पशवः) वाचा आहूता आयान्ति तस्मादु नाम जानते | १० | ३ | १३ |
| ४७ तस्माद्वैश्योऽद्यमानो न क्षीयते | ६ | १ | १० |
| ४८ तस्मान्नानारूपा ग्राम्याः पशवः | ६ | ८ | १२ |
| ४९ तस्मान्नाभिरनवतृण्णा दशमी प्राणानां | ६ | ८ | ३ |
| ५० तस्मान्न्यञ्चोऽन्ये पशवोऽदन्ति ऊर्ध्वः पुरुषः अधिपतिर्हि सः | ६ | २ | ८ |
| ५१ तस्मान्मनुष्याः श्वः श्वः सृज्यन्ते | ६ | ९ | १८ |
| ५२ नरो वै देवानां ग्रामः | ६ | ९ | २ |
| ५३ तस्मात्समानाया नासिकायास्सत्या नाना प्राणावुच्चरतः | ८ | ५ | ४ |

| | | | |
|---|---|---|---|
| ५४ पराङ्गृहीतोऽसौ लोकः ( स्वर्गः ) | ९ | ८ | ६ |
| ५५ पक्षाभ्यां वै यजमानो वयो भूत्वा स्वर्गं लोकमेति | ५ | १ | १० |
| ५६ प्रजा वै प्रियाणि पशवः प्रियाणि | ८ | ५ | १५ |
| ५७ ब्रह्म हि पूर्वं क्षत्रात् | ११ | १ | २ |
| ५८ ब्राह्मणं पात्रे न मिमांसेत यं ब्राह्मणमिव मन्यते | ६ | ५ | ९ |
| ५९ मुखं वा एतत्संवत्सरस्य यदेतत्फाल्गुनः | ५ | ९ | ८ |
| ६० यथाऽनडुहो वाऽश्वान्वाऽश्वतरान्वोहुषस्सन्तर्पयेत् | २ | १६ | ३ |
| ६१ यथा प्रार्थस्य ( अनडुहः ) शम्या अवद्यात | ११ | १ | ६ |
| ६२ यथा मण्डूक आटूकरोति | १२ | ४ | १६ |
| ६३ यथा वै मनुष्या इमं लोकमाविष्टाः | १० | ५ | १५ |
| ६४ यथाऽऽशिष्ठान् ( भक्षणसमर्थान् ) वहिष्ठान् सम्भरेदेवमेवैतान् सम्भरन्ति गत्यै | ११ | १ | ५ |
| ६५ यदा वै पुरुषोऽन्नमत्त्यथाऽन्तरितो विष्टब्धः | १२ | ४ | १० |
| ६६ यदा वै पुरुषस्स्वमोक आगच्छति सर्वं तर्हि प्रजानाति सर्वमस्मै दिवा भवति | ५ | ८ | ९ |
| ६७ यद्धि पुत्रोऽशान्तं चरति पिता तच्छमयति | ७ | ९ | ४ |
| ६८ यद्धि मनसाऽभिगच्छति तद्वाचा वदति | ११ | १ | ३ |
| ६९ यद्वै वाचा न समाप्नुवन्ति मनसा तत्समाप्नुवन्ति | ४ | ९ | १० |
| ७० यद्वै राजानोऽश्वानो धावयन्ति येऽश्वानां वीर्यवत्तमास्तान्नियुञ्जते | ६ | ३ | १५ |
| ७१ यन्ति वा एते पथ इत्याहुर्ये मृताय कुर्वन्ति ( क्रियाकलापं ) पुनः पन्थानमपियन्ति | ९ | ८ | ११ |
| ७२ यस्माद्वडवा द्विरेताः तस्मादश्वतरी अप्रजा आत्तरेता हि | ६ | १ | ४ |
| ७३ या वै पूर्वाः प्रस्नान्ति ताः (प्रजाः) पूर्वास्तीर्थं जयन्ति | ९ | ४ | १२ |
| ७४ यो वै दीक्षितानां पापं कीर्तयति तृतीयमेवांऽशं पाप्मनो हरति अन्ना-दस्तृतीयं पिपीलिकास्तृतीयम् | ५ | ६ | १० |
| ७५ यो वै छन्दसां स्वाराज्यं वेदाऽश्नुते स्वाराज्यं प्र स्वाराज्यमाप्नोति | १० | ३ | ८ |
| ७६ विधूतमिव हि तूर्णं पशव उपावर्तन्ते | ६ | ७ | १९ |
| ७७ शकुन इव वै यजमानो वयो भूत्वा स्वर्गं लोकमेति | ५ | ३ | ५ |
| ७८ शमलं वा एतमृच्छति यमश्लीला वागृच्छति | २ | १७ | ४ |
| ७९ संवत्सरं हि प्रजाः पशवोऽनुप्रजायन्ते | १० | १ | ९ |
| ८० साचीव वै वयः पक्षौ कृत्वा पतीयः पतति | ५ | १ | १२ |

ॐ तत्सत् ।

# ताण्ड्यमहाब्राह्मणम् ।

## प्रथमाऽध्याये

### प्रथमः खण्डः ।



वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यन्नत्वा कृतकृत्याः स्युस्तन्नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलञ्जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशत्सायनाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्व्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुर्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेपि संहिता ।
व्याख्याता ब्राह्मणव्याख्याङ्करोम्यौद्गात्रबुद्धये ॥ ५ ॥
पञ्चविंशतिरध्याया महति ब्राह्मणे स्थिताः ।
आद्येऽध्याये श्रुता मन्त्रा उद्गातुर्य्यजुरात्मकाः ॥ ६ ॥
ये तु मन्त्राः स्तोत्ररूपा उत्तरासु तृचेषु ते ।
योनिबद्धानमूहित्वा पठ्यन्ते तद्विधेर्वशात् ॥ ७ ॥
यद्योन्यां गानमाम्नातं तदेवोत्तरयोर्ऋचोः ।
गायेदिति स्तोत्रक्लृप्त्यै साम्नामूहो विधीयते ॥ ८ ॥
आवृत्तियुक्तं तत्साम स्तोम इत्यभिधीयते ।
द्वयोरध्याययोः स्तोमप्रकारा बहुधा श्रुताः ॥ ९ ॥
चतुर्थाध्यायमारभ्य गवामयनिकादयः ।
क्रतूनां विधयः प्रोक्ता एषोऽस्मिन् ब्राह्मणे क्रमः ॥ १० ॥
प्रथमाध्यायगा मन्त्रा विनियोगपुरःसरम् ।
व्याख्यायन्ते सर्व्वसोमयागेष्वेतेऽङ्गताङ्गताः ॥ ११ ॥

ननु प्रथमाध्याये समाम्नातानाम्'महन्मेवोच' इत्यादीनां मन्त्राणा-ङ्क्रत्वङ्गत्वमयुक्तम्, क्रतुप्रकरणमध्ये पाठाभावात् । चतुर्थाध्यायप्रभृतीनि हि क्रतुप्रकरणानि भविष्यन्ति । चतुर्थपञ्चमाध्यायौ गवामयननामकस्य संवत्सरसत्रस्य प्रकरणम् । 'गावो वा एतत्सत्रमासते'-त्यारभ्य तयोरध्याययोराम्नातत्वात् । षष्ठाध्यायेऽग्निष्टोमप्रकरणं 'प्रजापतिरकामयत बहुस्यां प्रजायेयेति, स एतमग्निष्टोममपश्यदि'त्यारभ्य तस्याध्यायस्याम्नातत्वात् । एवमुत्तराण्यपि क्रतुप्रकरणान्यवगन्तव्यानि । नन्वेवं प्रथमाध्यायगता मन्त्रा द्वितीयतृतीयाध्यायगता विष्टुतयश्च न कञ्चित् क्रतुमारभ्याम्नाताः, अतो नैतेषां क्रत्वङ्गत्वं युज्यत इति चेत् । मैवम् । अनारभ्याधीतानां प्रकृतिगामित्वमिति न्यायेन क्रत्वङ्गत्वावगमात् । स च न्यायस्तृतीयाध्याये षष्ठपादस्य प्रथमाधिकरणे पर्णवाक्यमुदाहृत्याभिहितः—

प्रकृतौ विकृतौ वा स्याद्यस्य पर्णत्यसौ विधिः ।
प्रकृतावेव वा तुल्याद्वचनादुभयोरसौ ॥
जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः ।
चोदकेनोभयप्राप्तेर्विकृतौ विधिनात्र किम् ॥

अनारभ्य श्रूयते-'यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोती'ति । तत्राव्यभिचरितक्रतुसम्बन्धवतीं जुहूमाश्रित्य तद्धेतुः पर्णवृक्षो वाक्येन विधीयते । 'या जुहूः सा पर्णमयी'ति वाक्यञ्च प्रकृतिविकृत्योस्तुल्यमेव प्रवर्त्तते, उभयत्राश्रयभूताया जुह्वाः सत्वात् । तस्मात्प्रकृतिविकृत्योरुभयोरप्ययं विधिरिति प्राप्ते ब्रूमः ।

किमयं विधिर्विकृतौ चोदकात्पूर्वन्निविशते, पश्चाद्वा ? नाद्यः, आश्रयभूताया जुह्वाः चोदकमन्त्रेणासम्भवात् । द्वितीये तु पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते । तत्र पुनर्विधिवैयर्थ्यादयं विधिः प्रकृतिमात्रगः। एवं 'यस्य खादिरः स्रुवो भवती'त्युदाहरणीयम् । ननु का प्रकृतिः, का विकृतिरिति चेत् । उच्यते । यत्र कर्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः । यत्र विशेषरूपमेव कर्तव्यं श्रुत्योपदिश्यते इतरत्सर्वं कर्मान्तरादतिदिश्यते, सा विकृतिः । स चातिदेशः प्रत्यक्षश्रुतिवचनाद्वा साम्याद्वा लिङ्गाद्वाऽवगन्तव्यः । तत्सर्वं सप्तमाष्टमाध्यायाभ्यां बहुधा विचारितम् । प्रकृतिश्च द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति । सर्वात्मना कर्मान्तरानिरपेक्षा मूलप्रकृतिः । कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते, स्वयञ्च कैश्चित् कर्मभिरपेक्षणीया भवति, सेयमवान्तरप्रकृतिः । तत्र तिस्रो मूलप्रकृतयः, ताश्चाष्टमाध्यायस्य प्रथम-

पादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिताः—

इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता नहि ।
अस्ति वा नालौकिकत्वादियत्तानवधारणात् ॥
लोकवत् सन्निपत्यारादुपकारिद्वयश्रुतेः ।
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु ॥

अलौकिकत्वेनैतावद्भिरङ्गैः सम्पूर्ण उपकार इति निश्चेतुमशक्यत्वात् इष्ट्यादीनां नास्ति मूलप्रकृतित्वमिति चेत् । मैवम् । लौकिकसदृशत्वात् । यथा लोके भुजिक्रियायामोदनः करणं तस्य सन्निपत्योपकारिणः शाकसूपादयः आरादुपकारिणः पीठप्रदीपादयः । तथा भावनायां यागः करणम्, अवघातादयः सन्निपातिनः प्रयाजादय आरादुपकारिणः, अतो नात्यन्तिकमलौकिकत्वम् । इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयताम्, तस्मादिष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति । तासु प्रकृतिष्वेव 'महन्मेवोच' इत्यादिमन्त्राणामङ्गत्वेन प्रवेशोऽवगन्तव्यः । प्रकृतित्वस्य तत्रैव मुख्यत्वात् । तास्वप्येते मन्त्राः सोमयागे नेतुं योग्याः सोमं गमेयमित्यादिलिङ्गसम्भवात्, नानाविधब्राह्मणगतानामेतदीयविनियोगानामृषिभिः सूचितत्वाच्च । ते च विनियोगा अस्माभिस्तन्मात्रव्याख्यानावसरे प्रदर्शयिष्यन्ते । यस्य तु मतं सोमयागप्रकरणमिदं तस्य न कोपि सन्देहः ।

सोमयागे चार्षर्त्विजो वरणीयाः, तथा ह्यापस्तम्बेनोक्तम्—'सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीत' इति । आश्वलायनोऽपि दर्शपूर्णमासेष्टिपूर्वकत्वं सोमयागस्योक्त्वा पक्षान्तरोपन्यासपूर्वकमेवमाह—'प्रागपि सोमेनैके तस्यर्त्विजः चत्वारस्त्रिपुरुषाः तस्य तस्योत्तरे त्रयः होता मैत्रावरुणो च्छावाको ग्रावस्तुदध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता ब्राह्मणाच्छंस्याग्नीध्रः पोतोद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति, एतेऽहीनैकाहैर्याजयन्ति, एत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समोप्याग्नींस्तन्मुखाः सत्राण्यासते' इति । अस्यायमर्थः । दर्शपूर्णमासाभ्यामिष्ट्वा पश्चाद्वा तद्यजमानः पुरस्ताद्वा सोमेन यजेत तस्य सोमयागस्य होताध्वर्युर्ब्रह्मोद्गातेति चत्वारः ऋत्विजो मुख्याः ते च प्रत्येकं त्रिभिः पुरुषैरुपेता अतस्तस्य तस्य एकैकस्योत्तरे त्रयः पुरुषा भवन्ति, त एते होत्रादिनामकाः षोडशर्त्विजो द्विरात्रादिभिरहीनसंज्ञकैरग्निष्टोमादिभिरेकाहसंज्ञकैर्याजयन्ति । एत एव होत्रादयः षोडशर्त्विजः स्वयमप्याहिताग्नयः प्रथमयज्ञेनाग्नि-

ष्टोमेनेष्ट्वा गृहपतिसंज्ञकेन सप्तदशसंख्यापूरकेण सहिता द्वादशाहादि-सत्रार्थं दीक्षित्वा स्वस्वसम्बन्धिनोऽग्नीनेकत्र स्थापयित्वा तत्प्रधानाः सत्राण्युत्तिष्ठेयुरित्येकाहाहीनसत्रात्मकाय एते सोमयागास्तदीयस्यार्त्विजो होत्रादिरूपस्य सामान्यलक्षणं द्राह्यायणाभिधो महर्षिश्छन्दोगसूत्रकार आह—'ऋत्विगार्षेयोऽनुचानः साधुचरणो वाग्म्यन्यूनाङ्गो नातिरिक्ताङ्ग' इति ।

तादृशं ऋत्विजं वरीतुं यजमानः सोमप्रवाकं प्रेषयेत् । सोमयागवृत्तान्तमृत्विजे प्रकर्षेण वक्तीति सोमप्रवाकः । स च वरीष्यमाणस्य समीपं गत्वा प्रब्रूयात् अस्मदीयो यजमानः सोमेन यजते स त्वां प्रत्यार्त्विज्यमर्थयत इति । एवमुक्ते इतरो यद्यार्त्विज्यं कर्तुन्नेच्छेत् तदानीं सोमन्नमस्कृत्यार्त्विज्यं परिहरेत् तत्परिहारनिमित्तं प्रत्यवायमपनेतुं नमस्कारः । प्रत्यवायश्चैवं श्रूयते—'यशसा वा एषोभ्येति य आर्त्विज्येन चरति तद्यः प्रतिरुन्धे यशसा प्रतिरुन्ध' इति । अथासावार्त्विज्यं कर्तुमिच्छेत्तदा सोमप्रवाकं प्रति सोमयागविषयं कुशलं सर्वं पृष्ट्वा स्वकीयं हर्षं द्योतय'न्महन्मेवोच'· इति मन्त्रं जपेत् । तदेतद्द्राह्यायणः सूत्रयामास—'अकारिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत महन्मेवोच इति करिष्यन् प्रतिमन्त्रयेतेति' । आपस्तम्बोपि सूत्रितवान् , ऋत्विजो वृणीते यूनः स्थविरान्वाऽनूचानानूर्द्ध्ववाचो नङ्गहीनांस्तेभ्यः सोमं सोमं पृच्छन्ति क ऋत्विजः के याजयन्ति कच्चिन्नाहीनः कच्चिन्नन्यस्तमामार्त्विज्यं कच्चित् कल्याण्यो दक्षिणा' इति । छन्दोगब्राह्मणम्—'भवत्यथ जपति महन्मेवोच' इति । यद्यप्यापस्तम्ब एतन्मन्त्रजपं सर्वेषामृत्विजां साधारणमवोचत् तथाप्यत्र द्राह्यायणः स्वकीयपरिभाषानुसारेणोद्गातारमभिलक्ष्य तस्य सोमप्रवाकविषयं प्रतिमन्त्रणं विधत्ते । परिभाषा चैवमुक्ता—'एकश्रुतिविधानान्मन्त्रान् कर्माणि चोद्गातैव कुर्यादनादेश' इति । अस्यायमर्थः । महन्मेवोच इत्यादि मन्त्रानथ कर्माणि च सामवेदोक्तान्युद्गातैवानादेशे कुर्य्यात्, कुतः? एकश्रुतिविधानात् एकस्य कर्तुः श्रवणेन निर्देशेन विधानात् । प्रतिमन्त्रयेतेत्येकवचनविधानमुद्गातृलिङ्गत्वेनात्र परिभाष्यत इति ।

ननूद्गातृपुरुषाः प्रस्तोतृप्रतिहर्तृसुब्रह्मण्या अपि सामवेदोक्तकर्माधिकारिणो न तु केवलं उद्गातैव । बाढम्, तथापि न तेषां वरणन्नियतं किन्तु होत्रध्वर्य्युब्रह्मोद्गातॄणां चतुर्णामेव नियतम्, तदाहापस्तम्बः—'तान्वृणीते चतुरः सर्वान्वैकैकश' इति । तथासति प्रस्तोत्रादीनां

वरणाभावमाश्रित्य द्राह्यायण उद्गातुरेवेदं प्रतिमन्त्रणमन्यते । यदि तेषामपि वरणमङ्गीकुर्य्यात् तदा स्वकीयपरिभाषानुसारेण प्रस्तोता प्रतिमन्त्रयेतेत्येवमादिशेत्, तदादेशाभावादुद्गातुरेव वरणं प्रतिमन्त्रणं च तन्मतमित्यवगम्यते ।

ननु तस्य मन्त्रस्य महन्म इत्येष आदिरिति प्रतीकग्रहणादेवावगम्यते अन्तन्तु कथमवगम्यत इति चेत् । उत्तरमन्त्रस्यादिग्रहणादिति ब्रूमः । उत्तरादिः पूर्वान्तलक्षणमिति सूत्रकारेण परिभाषितत्वात् । अत्र सूत्रकारो 'देवो देवमेत्वि'त्युत्तरमन्त्रादि ग्रहीष्यति, तस्माद्भुक्षिषीयेत्यसौपूर्वमन्त्रस्यान्त इति द्रष्टव्यम् । मन्त्र पाठस्तु--

**ॐ महन्मे वोचो भर्गो मे वोचो यशो मे वोचः स्तोमं मे वोचो भुक्तिं मे वोचः सर्वं मे वोचस्तन्मावतु तन्माविशतु तेन भुक्षिषीय ॥ १ ॥**

हे सोमप्रवाक !'मे' मह्यमुद्गात्रे यजमानस्त्वामार्त्विज्यायार्थयत इति यद्वचनं प्रायौक्षस्तत् 'महत्'पूज्यं सर्वोत्कृष्टमेव 'अवोचः' उक्तवानसि, न खल्वेतस्मात्पूज्यतमवचनं लोकेऽस्ति । तैत्तिरीयेऽपि वाजपेयफलत्वेनार्त्विज्यप्रशंसा कृता, तस्माद्वाजपेययाज्यः ऋत्विगधीनः सर्वा ह्यस्य वाचोवरुद्धा इति । महाभाष्यकारेणापि व्याकरणाध्ययनफलतयार्त्विज्यं प्रशंसितुमिदं वाक्यमुदाहृतम्-'यो वा इमां पदशः स्वरशो वर्णशोऽक्षरशो वा वाचं विदधाति स आर्त्विजीनो भवतीति, तस्मान्महदुक्तवानसि । तथा त्वं 'भर्गः' भर्ज्जनं पापस्य विदारकं दीप्तं वा वचनं 'मे' मह्यं 'अवोचः । तथा 'यशः' यशस्करं वचनं मे मह्यं अवोचः । सोमार्त्विज्यस्य यशस्करत्वं प्रसिद्धं श्रूयते च-'सोमो वै यशः स एवं विद्वान् सोममागच्छति यश एवैनमृच्छति' इति । तथा 'सोमं' स्तुतिसाधनं त्रिवृदादिकं 'मे' मह्यं 'अवोचः' उद्गातृवरणस्य त्रिवृदादिप्रयोगार्थत्वादेवमुक्तम् । तथा 'भुक्तिं'भोगसाधनमेव वचनं 'मे'मह्यं 'अवोचः' आर्त्विज्यकरणेन हि भोगसाधनं गवादिद्रव्यं लभ्यते, अत एवोद्गात्रादिवरणसमये कश्चित्कल्याणो दक्षिणा इति पृच्छते । तथा 'सर्वम्मेवोचः' किमनया महद्भर्ग इत्यादि परिगणनया यद्यदस्मदभीप्सितं तत्सर्वमपि मह्यमवोचः । त्वयोक्तम्महत्वभर्गत्वादिगुणविशिष्टं यदार्त्विज्यमस्ति 'तन्मावतु' मां रक्षतु, रक्षार्थे 'तत्' आर्त्विज्यं 'मा' मां विशतु । 'तेन' अनुष्ठितेनार्त्विज्येन 'भुक्षिषीय' भुक्षीय भोगान् भुञ्जीय ।

भुजिधातोराशिर्लिङि बहुलमिति सिप् इडागमः, उकारादेश-श्छान्दसः ॥ १ ॥

अथ द्राह्यायणो द्वितीयमन्त्रस्य विनियोगमित्थमाह—'स्वयं व्रजेत् क्रय उपवसथ्येवोदङेव तु गृहेभ्यः प्रथमन्देवो देवमेत्विति' । यः सोम-क्रयस्य दिवसो यश्चोपवसथ्याख्यः सुत्यादिवसात् पूर्वो दिवसस्तयो-रन्यतरस्मिन्दिवसे उद्गाता स्वयमेव देवयजनदेशं गच्छेत्, न त्वन्यं प्रहिणुयात्, गमने त्वस्ति कश्चिद्विशेषः। यद्यपि स्वगृहाद्दक्षिणतो देव-यजनं स्यात्तथापि 'देवो देवमेत्वि'ति मन्त्रेण स्वगृहेभ्यो निर्गच्छन् प्रथमं कतिचित् पदान्यदृष्टार्थमुदङ्मुख एव गत्वा पश्चाद्देवयजनाभि-मुखो भवेत् । ऋत्विग्वरणसोमक्रययोर्मध्यवर्तिनमाध्वर्य्यवं प्रयोगं क्रतु-सङ्ग्रहकारः सूचयामास । ग्रन्थोऽत्र बुद्धिसमाधानायोदाह्रियते ।

अथाग्निष्टोमसंस्थेन ज्योतिष्टोमेन याजयेत् ।
स पूर्वमृत्विजो वृत्वा देवभूमिविनिश्चये ॥
दीक्षणायां निर्वपेत्सोपि पत्नीसंयाजसंस्थितिः ।
कृते प्राचीनवंशेऽथ संस्कारा वपनादयः ॥
हुत्वा दीक्षाहुतीः कार्या दीक्षा कृष्णाजिनादिभिः ।
दीक्षितो नियमैर्युक्तो भवेत् क्षीरव्रतादिभिः ॥
द्वादशाहं दीक्षितोथ भिक्षित्वा द्रव्यमानयेत् ।
सोमञ्चर्मण्यवस्थाप्य विवशेत्सोमविक्रयी ॥
शंय्वन्ता प्रायणीया स्याद्गृह्णीयात् क्रयणीपदम् ।
क्रीत्वा सोमं रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेत् ॥ इति ॥

मन्त्रपाठस्तु—

**देवो देवमेतु सोमः सोममेत्वृतस्य पथा ॥ २ ॥**

'देवः' द्योतमानः सोमः 'देवं' दानादिगुणयुक्तं इन्द्रादिकं 'ऋतस्य' यज्ञस्य 'पथा' मार्गेणाद्यावाहुतिप्राणादिनाड्या 'एतु' प्राप्नोतु । यद्वा दीव्यतिस्तुतिकर्मकादेव स्तोतोद्गाता। अथवा 'पर्जन्यो म उद्गातेति' वर-णमन्त्रे श्रवणात् पर्जन्याख्यदेवतारूप उद्गाता देवं दीप्यमानं फलप्रका-शकं वातयज्ञमृतस्य सम्बन्धिना पथा देवयजनमार्गेणैतु गच्छतु । 'सोमः' अभिषवादिसंस्कृतो रसात्मकः 'सोमं' देवतारूपममृतं द्यु-स्थानं स्वमूर्त्यन्तरं 'एतु' प्राप्नोतु रसात्मकः सोम एवामृतमयो द्युस्थानः सोमो भवत्वित्यर्थः। 'तमेव खलु देवा उपजीवन्ति यम-क्षितिमः क्षितयः पिबन्ति' इति श्रुतेः ॥ २ ॥

द्राह्यायणः-'दूरं व्रजित्वा विहाय दौष्कृत्यमिती'ति। यदि दूरमध्वानं व्रजेत् तदानीमप्रयतदेशातिक्रमणादिकमवर्जनीयं स्यात् ततो यत्किञ्चित् दुष्कृतमवश्यं भवेत् तच्छान्तये विहाय दौष्कृत्यमित्येवं मन्त्रं जपेत्।

**विहाय दौष्कृत्यम् ॥ ३ ॥**

दुष्कृतस्य भावः दौष्कृत्यं तद्विहाय मनसा परिहृत्य देवयजनं गच्छामीति मन्त्रार्थः ॥ ३ ॥

द्राह्यायणः-'बह्वानामासीति पन्थानमापद्ये'ति। देवयजनस्य समीपवर्त्तिनं पन्थानमासाद्य बह्वेति मन्त्रं जपेत्।

मन्त्रपाठस्तु-

**बह्वानामासि सृतिः सोमसरणी सोमं गमेयम् ॥ ४ ॥**

हे देवयजनमार्ग! त्वं 'बह्वानामासि' नामाशब्दः प्रसिद्धः प्रसिद्ध्यर्थः। बद स्थैर्य्ये इति धातोरन्येभ्योपि दृश्यन्ते इति वनिप्। बह्वा स्थिर इतरस्माल्लौकिकान्मार्गाद्दृढतर इति प्रसिद्धो भवति, स्थिरफलप्राप्तिहेतोर्यज्ञस्य साधनत्वात्। यद्वा बह्वेत्येषा देवयजनमार्गस्य वैदिकी संज्ञा एतत्संज्ञो भवतीत्यर्थः। अथवा बवर्णस्य व्यत्ययेन यकारस्य स्थाने वकारः। यह्वा नामेत्येव सूत्रं, तदाहापस्तम्बः,-'यह्वा देवयजनं प्रति गन्ता एतत्संज्ञस्त्वमासि। 'सोमसरणी' सोमस्य प्राप्तिसाधनाभूता 'सृतिः' मार्गो भवसि। तया सृत्या 'सोमं' सोमयागं 'गमेयं' प्राप्नुयां, गमिधातोर्लिङ्याशिष्यङिस्यङ् ॥ ४ ॥

द्राह्यायणः-'उत्तरवेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः पितरोभूरि'ति। देवयजनं प्रविश्यमाणः महावेदिपार्श्वमाक्रम्य 'पितरोभूरिति' मन्त्रेण पितृनुपातिष्ठेत्। तथा चापस्तम्बः—'पितरोभूरिति दक्षिणावृत्तः पितृनुपातिष्ठेत' इति। मन्त्रपाठस्तु--

**पितरो भूः पितरो भूः पितरो भूः ॥ ५ ॥**

हे पितरः! इयं 'भूः' दक्षिणवेद्यन्तलक्षणा भूमिर्युष्माकं निवासायेति शेषः, कर्मसमाप्तिपर्य्यन्तमत्र निवसतेति भावः। त्रिरुक्तिरादरातिशयद्योतनार्था, पितृपितामहप्रपितामहानां त्रित्वापेक्षया वा ॥ ५ ॥

द्राह्यायणः—'यूयमुच्छ्रीयमाणमनुमन्त्रयेरन्नृमणऊर्ध्वभरसं त्वेती'ति। अध्वर्य्युर्य्यूपं यदोच्छ्रयेत् तदानीमुद्गातारो नृमणं इत्यनुमन्त्रयेरन्।

अत्रापि पूर्ववत् क्रतुसङ्ग्रहः—

क्रीत्वा सोमं रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेत् ।
आतिथ्यां निर्वपेत्सोममासंद्यामुपसादयेत् ॥
आतिथ्येष्टिरिडन्ता स्यात्तानूनप्त्रमवद्यति ।
दीक्षामवान्तरामेति प्रवर्ग्योपसदोः कृतिः ॥
दिनत्रये तत्कृतं स्याद्वेदिर्मध्यन्दिने भवेत् ।
षट्त्रिंशत्पदर्दीर्घ्यैषा प्राग्वंशात् पूर्वतः स्थिता ॥
प्रातः प्रवर्ग्यमुद्वास्य पश्चादुत्तरवेदितः ।
शकटे द्वे हविर्द्धाने हविर्द्धानञ्च मण्डपम् ॥
पश्चात्सदस्तस्य मध्ये निखातौदुम्बरी मिता ।
दक्षिणस्यानसोधस्तात् गर्तानुपरवान् खनेत् ॥
विधाय फलकाभ्यान्तानग्रे कुर्यात् मृदा खरम् ।
निर्वपेद्धिष्ण्यगानग्नीषोमीयं पशुमाचरेत् ॥
प्रयुज्योचितपात्राणि दर्शवत्सर्वमाचरेत् ।
आज्यमासादिते वेद्या अन्ते यूपं समुच्छ्रयेत ॥ इति ॥

पाठस्तु—

**नृमण ऊर्द्ध्वभरसं त्वोर्द्ध्वभरा दृशेयम् ॥ ६ ॥**

हे 'नृमण'! नृषु यज्ञस्य नेतृषु यजमानेषु मनोनुग्रहबुद्धिर्यस्य विष्ण्वात्मनो यूपस्य सोऽयं नृमणः एतादृशविष्णुरूपयूप! 'ऊर्द्ध्वभरसं त्वा' ऊर्द्ध्वमुपरिभागेऽध्वर्युभिर्भ्रियमाणं त्वामहं 'ऊर्द्ध्वभराः' सन् 'दृशेयं' अनुग्राहकेण त्वया ऊर्द्ध्वमुन्नतगुणोयमिति धार्य्यमाण ऊर्द्ध्वभराः, दृशिधातोर्लिङ्याशिषि अङ्प्राप्ते तदपवादत्वेन दृशेरग्वक्तव्य इत्यक् । अङि तु सति ऋदृशोऽङिगुणः इति गुणः स्यात् ॥ ६ ॥

द्राह्यायणः-'होता प्रातरनुवाकमनूच्याभूदुषा इति यदा ब्रूयादथ वेदिमाक्रामेयुः मृदाशिथिरेती'ति । उपवसथदिवसस्य मध्यरात्रादूर्द्ध्वं होता प्रातरनुवाकं ब्रूते । तदाहाश्वलायनः-'अथैतस्या रात्रेर्विवासकाले प्राग्वयसां प्रवादात्प्रातरनुवाकायामन्त्रितो वाग्यतस्तीर्थेन प्रपद्येत्यादि' । अध्वर्युणामन्त्रितो होता प्रातरनुवाकमनूच्य तस्यावसानगता 'अभूदुषा' इत्येतामृचं यदा ब्रूयात्तदानीमुद्गातृप्रस्तोतृप्रतिहर्तारो 'मृदेति' मन्त्रेण वेदिमाक्रामेयुः । क्रतुसङ्ग्रहस्तु—

यूपस्योच्छ्रयणादूर्ध्वं समाप्यच पशुं ततः ।
वैसर्जनानि हुत्वाग्निं सोमं ग्रावादि चानयेत् ॥

हविर्द्धाने स्थापयित्वा गृह्णीयाद्वसतीवरीः ।
प्रयुञ्ज्यात्सोमपात्राणि महारात्रे खरादिषु ॥
ग्रावस्तुत स्थापिते सोमे पक्षिणांध्वनितः पुरा ।
स्यात्प्रातरनुवाकार्थमुपाकरणमादरात् ॥ इति ॥

वेद्याक्रमणमन्त्रपाठस्तु—

**मृदा शिथिरा देवानां तीर्थं वेदिरसि मा मा हिंसीः ॥७॥**

हे वेद्यात्मिके भूमि !'मृदा' यज्ञायुधेन खाता या मृत्तन्मया'शिथिरा' प्रशिथिलावयवा त्वं 'देवानां' उद्गात्रादीनामृत्विजां देवानामेव वा'तीर्थं' एव तरणस्थानं असि, तथा 'वेदिरसि' असुरैरपहृतानां धनानां लम्भयिष्यसि । 'यत्ताद्वित्तं वेद्यमसुराणां वेद्यमविन्दत तदेकं वेद्यैर्वेदित्व'मिति श्रुत्यन्तरात् । उक्तलक्षणां त्वां अधितिष्ठन्तं 'मा माहिंसीः'मा बाधस्व॥७॥

द्राह्यायणः—'हविर्द्धानं प्रवेश्यमाना वसतीवरीरनुप्रविशेयुस्तस्य रराठ्यामालभ्य विष्णोः शिर इती'ति । अद्ध्वर्युणा प्रातरनुवाक उपाकृते प्रतिप्रस्थात्रा सवनीयपुरोडाशेषु निरुप्तेषूपपन्ने जनानामिकास्वप्सु पत्नीसहितासु वसतीवरीनामिका अपोध्वर्य्युर्हविर्द्धानमण्डपं प्रवेशयति । तदानीमुद्गात्रादयस्त्रयो 'विष्णोः शिर' इति मन्त्रेण रराट्यां हस्तस्पर्शं कृत्वा हविर्द्धानमण्डपं पूर्व्वया द्वारा प्रविशेयुः । रराटीनाम हविर्द्धानस्योपरि स्थिता काचित् काशमयी यष्टिरिति सत्याषाढ़ आह । पाठस्तु—

**विष्णोः शिरोसि यशोधा यशो मयि धेहि ॥ ८ ॥**

हविर्द्धानमण्डपो विष्णुदेवताकत्वात् विष्णुदेवता विष्णुत्वेनोपचर्य्यते, 'वैष्णवं हि देवताया हविर्द्धान'मिति श्रुतेः । विष्णुदेहत्वेनोपचरितस्य हविर्द्धानस्य पूर्व्वस्मिन् द्वारे तिर्य्यगवस्थिता यष्टिर्ललाटवद्वर्त्तते, अत एव तदवस्थानकरणभूतो मन्त्रोध्वर्य्युशाखायामेवमाम्नायते 'विष्णोरराटमसीति' ललाटस्य शिरोभागवर्त्तित्वं प्रसिद्धम् । अतो रराटीं प्रति विष्णोः शिरोसि इत्युच्यते । हे रराटि ! त्वमचेतनापि सती यशोधा असि विष्णुशिर इत्येवम्भूतस्य यशसो धारयित्री भवसि तस्मात्त्वदीयस्पर्शं कुर्वति 'मयि' 'यशः' उद्गात्रे कुशल इति तादृशं धेहि धारय सम्पादय ॥ ८ ॥

द्राह्यायणः—इष ऊर्ज्ज इति प्रविशन्त इति । उद्गातारो हविर्द्धानं प्र॰

विशन्त 'इष ऊर्ज्ज' इति मन्त्रं जपेयुः। पाठस्तु--

इष ऊर्ज्ज आयुषे वर्च्चसे च ॥ ९ ॥ १ ॥ १ ॥

इडन्नम्, ऊर्गासः क्षीराज्यादिः, आयुः प्रसिद्धं, वर्च्चो वेदशास्त्राणि विज्ञतत्त्वं रूपं ब्रह्मवर्च्चसं, चकारात् पुत्रपौत्रादयः, सर्वसम्पत्त्यर्थं हविर्द्धानं प्रविशामीति शेषः ॥ ९ ॥ १ ॥ १ ॥

इति ताण्ड्यब्राह्मणे प्रथमाध्यायस्य प्रथमखण्डः।

## अथ द्वितीयः खण्डः।

द्राह्यायणः 'अन्तरेणेषे बाहूनवहृत्य पार्ष्णीरनुद्यच्छन्तो युनज्मीति राजानमभिमृशेयुर्यः प्रातःसवनीयाविभक्तश्चेत् सर्वञ्च चेत्प्राप्नुयुर्देशेनैवेति। हविर्द्धानमण्डपे दक्षिणशकटस्याधस्तात् पश्चिमभागेऽभिषवार्थं सोमोवस्थापितो वर्त्तते। तं सोमं हस्तैः स्पृष्टमुद्गात्रादयो मण्डपं प्राविशन् प्रविश्य शकटस्य ये द्वे ईषे दीर्घकाष्ठे विद्येते तयोर्मध्य उद्गात्रादयः स्वकीयदक्षिणाबाहूनधः प्रसार्य्य सोमं स्पृशेयुः तदर्थोऽयं 'युनज्मीति'मन्त्रः। यदा शकटस्योन्नतत्वेनाधः प्रसारितानां बाहूनां दैर्घ्यन्न पर्य्याप्तं स्यात् तदानीं स्वपादानां पार्ष्णिभागानुद्यम्य पादाग्रैर्भूमाववस्थानं प्रसज्यते, तन्माभूदिति पार्ष्णीरनुद्यच्छन्त इत्युक्तम्। स सोमः प्रातःसवनाय विभक्तश्चेत्, तदा तावन्तमेव स्पृशेयुः, अविभागे तु सर्वस्यापि सोमस्य स्पर्शः। स्पृशन्न प्राप्नुयुश्चेत्तदा देशप्राप्तिमात्रेणैवालम्भः स्पर्शो विवक्षितः। पाठस्तु--

युनाज्मि ते पृथिवीमग्निना सह युनाज्मि वाचं सह सूर्य्येण युक्तो वातोन्तरिक्षेण ते सह युक्तास्तिस्रो विमृजः सूर्य्यस्य ॥ १ ॥

हे सोम ! आहवनीयादिरूपेण 'अग्निना सह' वेदिरूपामिमां 'पृथिवीं' 'ते'त्वदर्थं'युनाज्मि'यकारश्छान्दसार्थः,युनज्मीत्येवं शाखान्तरपाठः,त्वया संयुक्तां करोमि। अग्निवेद्योस्त्वत्संयोगे सति तद्विषयो यागो न निष्पद्यते। तथा 'सूर्य्येण सह' 'वाचं' मन्त्ररूपां युनाज्मि योजयामीति अन्तर्भावितण्यर्थो युजिधातुर्द्रष्टव्यः। सूर्य्यसंयोगकालसापेक्षे प्रातःसवनादावुपयुज्यते वाक्ययोगेन स्तोत्रशस्त्रादिसिद्धिः। तथा 'अन्तरिक्षेण सह' 'वातः'वायुः 'ते'त्वदर्थं 'युक्तः'योजितः वायुसङ्गेन वह्निः प्रज्वाल्यते

अन्तरिक्षसंयोगेन प्रवर्ग्यज्वालादेरवकाशः सम्पद्यते यथा 'सूर्य्यस्य' सम्बन्धिन्यः 'विभ्रूजः' विशेषेणान्धकारस्य भञ्जने विनाशने समर्था-स्तिस्रः लोकत्रयप्रकाशिकाः । यद्वा'त्रीणि वा आदित्यस्य तेजांसि वसन्ते प्रातः ग्रीष्मे मध्यन्दिने शारदपराह्णे' इति श्रुत्यन्तरोक्तास्तिस्रो दीप्तयो 'युक्ताः' योजिताः । यद्यप्येतत्सर्वं लोके स्वत एव सिद्धं तथाप्युद्गातॄणां मन्त्रपूर्वकानुस्मरणेन सोमः संस्कृतो भवति ॥ १ ॥

द्राह्यायणः-'दक्षिणस्य हविर्द्धानस्य पश्चात् सव्यावृत उपविशेयु-र्ऋतस्य सदन' इति । सव्यावृतः सव्येन पार्श्वेनावर्त्तमानाः । पाठस्तु—

**ऋतस्य सदने सीदामि ॥ २ ॥**

'ऋतस्य' सोमस्य अवश्यं फलसाधनात्वात्सोमः सत्यः, सत्य-सम्बन्धिनि 'सदने' समीपवर्त्तिस्थाने 'सीदामि' उपविशामि ॥ ॥

द्राह्यायणः-'अभिषुते राजन्यृतपात्रमसीति द्रोणकलशमालभ्येति' । राजनि सोमे ग्रावभिरभिषुते सत्युद्गात्रादयः ऋतपात्रमसीत्यनेन मन्त्रेण द्रोणकलशमुपस्पृश्य प्रोहेयुरिति वक्ष्यमाणेनान्वयः ।

**ऋतपात्रमसि ॥ ३ ॥**

हे द्रोणकलश ! त्वं 'ऋतपात्रं' सोमपात्रं 'असि' इति मन्त्रार्थः ॥ ३ ॥

द्राह्यायणः-'वानस्पत्य इति प्रोहेयुरिति' । शकटगताक्षस्य पश्चादव-स्थितं द्रोणकलशं अथ उद्गात्रादयः स्वहस्तैरधोदेशे तस्मादक्षात् प्राञ्चं प्रोहेयुः, प्राग्देशे यथावस्थितो भवति तथा कुर्य्युः । पाठस्तु-

**वानस्पत्योसि बार्हस्पत्योसि प्राजापत्योसि प्रजा-पतेर्मूर्द्धास्यत्यायुपात्रमसीदमहं मां प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्च्चसाय ॥ ४ ॥**

हे द्रोणकलश ! त्वं 'वानस्पत्योसि त्वं वृक्षसम्बन्धी भवसि काष्ठवि-शेषनिर्म्मितत्वात् । तथा 'बार्हस्पत्योसि' बृहस्पतेः सम्बन्धी भवसि च-तुर्विंशतिरात्रकन्नाम सोमयागरूपं सत्रमनुतिष्ठता बृहस्पतिना सम्पा-दितत्वात् सम्बन्धो द्रष्टव्यः । तदनुष्ठानं चाध्वर्य्युशाखायामाम्नातम्-'बृहस्पतिरकामयत सम्मोद बादधीर गच्छेयुः पुरोधामिति, स एवं च-तुर्विंशतिरात्रमपश्यत्तमाहरत्तेनायजतेति । यद्वा देवानां यज्ञे बृहस्पतेरु-द्गातृत्वात्तत्सम्बन्धः-'बृहस्पतिर्देवानामुद्गाता तदेव तद्युनक्तीति' । 'प्राजापत्योसि' प्रजापतेः सम्बन्धी भवसि तत्सम्बन्धश्चाध्वर्य्योर्द्रोण-

कलशाभिमर्शनमन्त्रेऽवगम्यते । तथा चाध्वर्युशाखायामाम्नायते–'उपयामगृहीतोसि प्रजापतये वेति द्रोणकलशमभिमृशेदिति'। प्राजापत्यो ह्येष देवतया यत् द्रोणकलश इति ब्राह्मणम्। 'प्रजापतेर्मूर्द्धाऽसि' अस्य तन्मूर्द्धत्वं ब्राह्मणे समाम्नातम्। प्रजापतिरकामयत बहुस्यां प्रजायेयेति सोऽशोचत्तस्य शोचत आदित्यो मूर्द्धोऽसृज्यत सोस्य मूर्द्धानमुदहरन् स द्रोणकलशोऽभवत् इति, अन्योर्थऽबाहुल्येनागच्छति सोमोस्मिन्द्रोणकलशपात्रे ततस्त्वं 'अत्यायु' नाम्नाभिधेयं 'पात्रमासि' 'इदं' सर्वेषां प्रत्यक्षं यथा 'अहं' उद्गाता इमं द्रोणकलसं 'प्राञ्चं' पूर्वदिग्गामिनं तन्वा 'प्रोहामि' । तच्च प्रोहणं मम 'तेजसे' शारीरकान्तये 'ब्रह्मवर्चसाय' श्रुताध्ययनसम्पत्तये च भवतु ॥ ४ ॥

द्राह्यायणः–'तानभिमृश्य जपेयुर्मरुत इती'ति । अभिषवसाधनभूता ग्रावाण उद्गात्रादिभिरेकत्र योजितत्वेन प्राक्तनत्वात्तच्छब्देन परामृश्यन्ते। तान् ग्रावाणो हस्तैरभिमृश्योद्गात्रादयो 'मरुत' इत्यादिकं मन्त्रं जपेयुः। पाठस्तु—

**मरुतो नपातोऽपङ्क्षयाः पर्वतानाङ्ककुभः श्येना अजिरा एन्द्रं वग्नुना वहत घोषेणामीवां चातयध्वं युक्तास्थ वहत ॥ ५ ॥**

हे ग्रावाणः! यूयं मरुद्बलात् 'नपातः' न पततीति नपात् तस्य बहुवचनं नपात इति। यथा वृक्षगतपर्णादीनि वायुबलेन पात्यन्ते न तथा ग्रावाणः। यद्वा मरुतो मितराविणः नपातो यज्ञस्य नपातयितारो रक्षकाः। 'अपां' जलानां क्षयाः निवासस्थानभूताः नदीमध्ये घर्मकालेपि तत्र पाषाणानां सन्धिषु जलान्निवसति। तथा 'पर्वतानाङ्ककुभः' शृङ्गभूताः, ककुभं शृङ्गे विन्दुः प्रधानेपि च निघण्टे । 'श्येनाः' एतन्नामकपाक्षिसदृशाः शंसनीयगमनाद्वा। 'अजिराः' क्षिप्रनामैतत् क्षिप्रगमना, 'एन्द्रं' 'वहत' उक्तलक्षणा यूयं सोमयागार्थमिन्द्रमाह्वयत, केन साधनेन 'वग्नुना' वचनेन वाक्यसदृशेन ध्वनिनेत्यर्थः। ग्रावाणां सोमाभिषवध्वनिं श्रुत्वा इन्द्र आहूत इव शीघ्रमागच्छति । घोषेण भवदीयेनोग्रध्वनिना 'अमीवान्' रोगवदुपद्रवकारिणोऽसुरान् 'चातयध्वं' पराभूतान् कुरुध्वम्, अत एव तैत्तिरीया आमनन्ति–'श्रद्धा देवस्य यजमानस्यासुरघ्नोवाक्तुः यज्ञायुधेषु प्रविष्टासीत्, तेसुरायादन्तो यज्ञायुधानामुद्वदतामुपाशृण्वन् ते पराभवन्निति' 'युक्तास्थ वहत' इन्द्रमाहूयासुरांश्च पराभाव्य ततो द्रोणकलशं वोढुम्परस्परं संयुक्ता भवत संयुज्य च कलशं वहत ॥ ५ ॥

द्राह्यायणः—'पश्चाद्दक्षिणतो वा द्रोणकलशमध्यूहेयु'रिदमहममुमितीति। युक्तानां ग्रावाणामुपरिष्टाद् द्रोणकलशं पश्चादारभ्य प्राञ्चं दक्षिणत आरभ्योदञ्चं वा स्थापयेयुः । पाठस्तु—

**इदमहममुं यजमानं पशुष्वध्यूहामि पशुषु च मां ब्रह्मवर्चसे च ॥ ६ ॥**

'इदं' प्रत्यक्षं यथाभवति तथा 'अहं' उद्गाता 'अमुं' परतो दृश्यमानं, इममिति केषांचित्पाठः । 'यजमानं' 'पशुषु' गोषु 'अध्यूहामि' उपरि स्थापयामि । कलशाध्यूहनप्रसादात् मया यजमानेन च पशवो लभ्यन्तामित्यर्थः, न केवलं पशुलाभः किन्तु ब्रह्मवर्चसनिमित्तमप्येतदध्यूहनं भवतु ॥ ६ ॥

द्राह्यायणः—'पवित्रेण द्रोणकलशꣳ संमृज्याद्वसवस्त्वेति बुध्नꣳ रुद्रास्त्वेति मध्यमादित्यास्त्वेति बिलमितीति । दशापवित्रनामको यो वस्त्रखण्डस्तेनोद्गाता द्रोणकलशमूलमध्यबिलभागान् मन्त्रगतैस्त्रिभिः भागैः शोधयेत् । पाठस्तु—

**वसवस्त्वा गायत्रेण छन्दसा संमृजन्तु रुद्रास्त्वा त्रैष्टुभेन छन्दसा संमृजन्त्वादित्यास्त्वा जागतेन छन्दसा संमृजन्तु ॥ ७ ॥**

स्पष्टार्थः ॥ ७ ॥

द्राह्यायणः—'अवधूय पवित्रमुदग्दशमवाङ्नाभिर्वितनुयुः पवित्रन्त इतीति । दशापवित्रस्य मध्ये शुक्लां पूर्णां स्तुतं सोमधाराश्रावणार्थं यजमान आबध्नाति सा नाभिरित्युच्यते । उदीचीनदशमवाचीननाभि च दशापवित्रं कृत्वा द्रोणकलशस्योपरिष्टादुद्गात्रादयस्त्रयो वितनुयुः वितत्य च दशापवित्रस्य कोणान् धारयेयुः । तथाच ब्राह्मणं 'पवित्रं विगृह्णाती'ति ।

पाठस्तु —

**पवित्रन्ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्य्येषि विश्वतो तप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सन्तदाशत ॥ ८ ॥**

हे ब्रह्मणस्पते मन्त्रस्य स्वामिन् सोम ! ते 'पवित्रं' शोधकमन्त्रं 'विततं' सर्वत्र विस्तृतं सः 'प्रभुः' प्रभविता त्वं 'गात्राणि' गातुरङ्गानि 'पर्य्ये-

षि' परिगच्छसि। 'विश्वतः' सर्वतस्तव 'तत्' पवित्रं 'अतप्ततनूः' पयोव्रतादिना असन्तप्तगात्रः 'आमः' अपरिपक्वः 'न अश्नुते' न व्याप्नोति। 'शृतास इत्' शृता एव परिपक्वा एव 'वहन्तः' 'तत्' पवित्रं 'आशत' व्याप्नुवन्ति८

द्राह्यायणः—'सन्ततायां धारायामुद्गाता जपेत् प्रशुक्रैत्विति'। दशापवित्रस्योपरि सोमरसस्य धारा सन्तता श्राव्यते तदानीमुद्गाता प्रशुक्रैत्विति मन्त्रं जपेत्।

पाठस्तु—

**प्रशुक्रैतु देवी मनीषास्मद्रथः सुतष्टो न वाज्यायुषे मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्या दिवो जनित्राच्छृण्वन्त्वापोधः क्षरन्तीः सोमेहोद्गाय ममायुषे मम ब्रह्मवर्चसाय यजमानस्यर्द्ध्यै अमुष्य राज्याय ॥९॥१॥२॥**

'शुक्रा' शुद्धा निर्मला 'देवी' द्योतनात्मिका 'मनीषा' स्तुतिः 'अस्मत्' अस्मत्तः 'प्रैतु' प्रगच्छतु सोमम्। तत्र दृष्टान्तः 'रथो न' रथ इव कीदृशः 'सुतष्टः' सुष्ठु, तत्क्षणक्रियया निष्पादितः। 'वाजी' वेगवान् उग्रबुद्धिं परित्यज्य 'मे' ममोद्गातुः 'आयुषे' आयुर्वृद्ध्यर्थं 'पवस्व' पूतो भव। तथा 'मे वर्चसे' ब्रह्मवर्चसनिमित्तं पूतो भव। 'पृथिव्या दिवः' च 'जनित्रात्' यागद्वारेण उत्पादकाद्दशापवित्रात् 'अधः क्षरन्तीः' क्षरन्त्यः 'आपः' सोमरसात्मिकाः 'विदुः' अस्मदीयां मनीषां जानन्तु तदर्थं 'शृण्वन्तु' हे 'सोम' त्वं 'इह' अस्मिन् कर्मणि 'उद्गाय' उद्गानं कृत्वा उरुधारया पूयमानस्य सोमस्य शब्द उद्गीथत्वेन स्तूयते। श्रूयते हि 'एष वै सोमस्योद्गीथो यत्पवन इति'। यदुद्गातृत्वं त्वया कृतं तत्र 'मम' उद्गातुरायुर्वृद्ध्यर्थं सम्पद्यते। तथा 'मम' ब्रह्मवर्चसार्थं सम्पद्यते। तथा यजमानस्य धनधान्यादिसमृद्ध्यै सम्पद्यते। 'अमुष्यराज्याय' अमुष्य राज्ञो राज्याय अमुष्येत्यस्य स्थाने तस्य राज्ञो नाम निर्देष्टव्यम्। तत्र बुद्ध्यन्यतरस्यां सोमस्य राज्ञो राज्यायेति इत्येव निर्देष्टव्यमिति सिद्धान्तितत्वात् सूत्रकार आह 'अमुष्य राज्यायेति' प्रियꣳराजानमादिशेद्राज्ञो राज्यायेति वा सोमस्येत्येवं ब्रूयात्सोमराजानो हि ब्राह्मणा इति। क्षत्रियवैश्ययोरपि दीक्षया ब्राह्मणत्वात् सोमस्येत्येव तयोरपि निर्देशः। 'ब्राह्मणो वा एष जायते यो दीक्षित' इति श्रुतेर्ब्राह्मणत्वमवसीयते। अत एव सूत्रान्तरं 'तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्येवावेदयती'ति॥९॥१॥

इति द्वितीयखण्डः।



# अथ तृतीयः खण्डः ।

द्राह्यायणः—'अध्वर्य्युणा हुते प्रवृत्तहोमौ जुहुयुर्गत्यानुपूर्वेण वेकुराणामासि सूर्य्योमेती'ति । अध्वर्य्युणा वै एषु होमेषु हुतेषूद्गातारस्त्रयोऽपि प्रवृत्तहोमौ जुहुयुः । प्रस्तोता प्रथमं ततः उद्गाता ततः प्रतिहर्त्तेति एवं प्रसर्पणक्रमेण जुहुयुः प्रथममन्त्रो वाग्देवत्यः । तत् पाठस्तु—

**वेकुरानामासि जुष्टा देवेभ्यो नमो वाचे नमो वाचस्पतये देवि वाग्यत्ते वाचो मधुमत्तस्मिन्माधाः सरस्वत्यै स्वाहा ॥ १ ॥**

हे सरस्वति ! त्वं 'वेकुरा' विकिर्व्याप्तिकर्मा नामशब्दः प्रसिद्धौ सर्वत्र व्यापनात् वेकुरेति प्रसिद्धा भवासि । 'देवेभ्यः' तेषामर्थाय 'जुष्टा' स्तोतृभिः स्तुता 'असि', तस्यै 'वाचे' वाग्देवतायै 'नमः' अस्तु 'वाचस्पतये' ब्रह्मणे 'नमः' अस्तु । हे 'देवि' ! द्योतमाने हे वाग्देवते ! 'ते' तव 'वाचः' शब्दराशेः 'यत् मधुमत्' अतिशयेन माधुर्य्योपेतं वस्त्विति तत् 'तस्मिन्' 'माधाः' निधेहि स्थापय तस्यै 'सरस्वत्यै' 'स्वाहा' इदं हविस्त्यजामि । स्वाहेति हविस्त्यागार्थो निपातः ॥ १ ॥

द्वितीयमन्त्रपाठस्तु—

**सूर्य्यो मा दिव्याभ्यो नाष्ट्राभ्यः पातु वायुरन्तरिक्षाभ्यो ग्निः पार्थिवाभ्यः स्वाहा ॥ २ ॥**

'सूर्य्यः' सर्वस्य प्रेरको द्युस्थानो देवः 'मा' मां 'दिव्याभ्यः' दिवि भवाभ्यः 'नाष्ट्राभ्यः' नाशकारिभ्यो रक्षोजातिभ्यः 'पातु' 'वायुः' अन्तरिक्षस्थानः 'अन्तरिक्षाभ्यः' तत्रोत्पन्नाभ्यः नाष्ट्राभ्यः पातु । तथा 'अग्निः' भूस्थानः 'पार्थिवाभ्यः' नाष्ट्राभ्यः पातु 'स्वाहा' । तेभ्यः सूर्य्यादिभ्यो हविस्त्यजामि ॥ २ ॥

द्राह्यायणः 'सव्यैः पाणिभिः पृथग्दक्षिणा तृणानि निरस्येयुर्य्योऽद्य सौम्य इती'ति । वहिष्पवमानस्तोत्रार्थं अध्वर्य्युमनुचात्वालसमीपे प्रसर्पन्तस्त्रयोऽपि स्वकीयैर्वामहस्तैर्मार्गस्थितानि तृणानि दक्षिणस्यां दिशि निरस्येयुः । दक्षिणैस्तृणैरनारम्भविधानात् सव्यैरित्युक्तम् । पाठस्तु—

**योऽद्य सौम्यो वधोघायूनामुदीरते विषूकुहस्य धन्वनाप तान् वरुणोऽपधमत् ॥ ३ ॥**

'अद्य' अस्मिन्नहनि 'अघायूनां' अघं हिंसामायतस्य 'धन्वना' मार्गेण अन्यैरविज्ञायमानेन नाद्गच्छतीत्यर्थः । 'तान्' वचनव्यत्ययः इच्छतां सम्बन्धी 'सौम्यः' सोमविषयः 'वधः' हिंसा तत्साधनं वा दूषणात्मकः 'उदीरते' उद्गच्छति ईर गतौ अदादिकः 'बहुलं छन्दसी'ति शपो लुगभावः । वधप्राप्तिसाधनमाह 'विषूकुहस्य' विषू विष्वक् सर्वतः कुहना वञ्चना यस्य स तथोक्तः तादृशस्य 'वरुणः' दुष्कृतातारको देवः 'अपधमत्' धमतिर्वधकर्मा अपहन्त्वित्यर्थः ॥ ३ ॥

द्राह्यायणः—'चात्वालदेशं प्राप्याध्वर्य्यावुपविष्टे तस्मात् प्रत्यगुपविशेयुर्य्योम आत्मेति स्पष्टार्थः । पाठस्तु—

**यो म आत्मा या मे प्रजा ये मे पशवस्तैरहं मनो वाचं प्रसीदामि ॥ ४ ॥**

'मे' मनोद्गातुः सम्बन्धी 'यः आत्मा' शरीरस्थितो जीवोऽस्ति । 'या' च मदीया 'प्रजा' पुत्रभृत्यादिरूपा 'ये' च मदीयाः 'पशवः' गोमहिष्यादयः 'तैः' सर्व्वैः सहिताः 'अहं' 'मनो वाचौ' समाधाय 'प्रसीदामि' प्रसन्नो भूत्वोपविशामि ॥ ४ ॥

द्राह्यायणः—प्रस्तरं प्रतिगृह्य प्रस्तोता ब्रह्मन् स्तोष्यामः प्रशास्तरित्युद्गात्रे प्रयच्छेत्तेन दक्षिणाजङ्घामुपहत्य युंज्यात् स्तोममग्ने स्तेजसेती'ति । उपवेशनानन्तरमध्वर्य्युणा दत्तं प्रस्तरं प्रतिगृह्योद्गात्रे प्रयच्छेत्तेन प्रस्तरेण स्वकीयां जङ्घां उपस्पृश्य उद्गाता स्तोमं युञ्ज्यात् । मन्त्रोच्चारणमेव स्तोमयोगः । तत्पाठस्तु—

**अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्य्यस्य वर्चसा बृहस्पतिस्त्वा युनक्तु देवेभ्यः प्राणायाग्निर्य्युनक्तु तपसा सोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियꣳ सत्याः कामा यजमानस्य सन्तु ॥ ५ ॥**

हे सोम ! त्रिवृदादिलक्षणं 'त्वां' 'बृहस्पतिः' देवः 'देवेभ्यः' तेषामर्थायाग्नीन्द्रसूर्य्याणां सम्बन्धिभिस्तेजइन्द्रियवर्चोभिः 'युनक्तु' योजयतु । तेजआदिशब्दैरग्न्यादिदेवतानां सामर्थ्यानि विवक्षितानि । तथा 'प्राणाय'ऋत्विग्यजमानप्राणरक्षणार्थं 'अग्निस्तपसा' प्राणघातिवैरिसन्तापसामर्थ्येन 'स्तोमं' योजयतु, किमर्थं 'यज्ञाय वोढवे' यज्ञं वोढुं तथा 'इन्द्रोऽपि इन्द्रियं' सामर्थ्यं 'दधातु स्तोमं स्थापयतु उक्तद्वयं सूर्य-

वर्चसा युनक्त्वित्यस्याप्युपलक्षणम् । 'यजमानस्य कामाः' काम्यमानाः आशिषः 'सत्याः' 'सन्तु' यथार्था भवन्तु ॥ ५ ॥

द्राह्यायण 'अन्नङ्करिष्यामीति जपेदिति स्तोमयोगादूर्द्धमेतस्य मन्त्रस्य जपः । पाठस्तु--

**अन्नं करिष्याम्यन्नं प्रविष्याम्यन्नञ्जनयिष्यामि ॥ ६ ॥**

अनेन स्तोत्रेणाहमुद्गाता बहुप्राण्युपकाराय प्रसूतं 'अन्नं करिष्यामि' तच्च 'अन्नं प्रविष्यामि' भूतिः समृद्धिःसमृद्धं करिष्यामि। तत् 'अन्नञ्जनयिष्यामि' जनने व्रीह्यादिरूपेण पुनः पुनः प्ररोहणे हेतुत्वेन करिष्यामि ॥ ६ ॥

द्राह्यायणः-'अन्नमकरामिति स्तुत्वा जपेत्' । बहिष्पवमानस्तोत्रादूर्द्धं अयं जपः । पाठस्तु--

**अन्नमकरमन्नमभूदन्नमजीजनम् ॥ ७ ॥**

स्तोत्रसामर्थ्यमन्नसमृद्धेर्निश्चितत्वाद्भूतार्थप्रयोगः ॥ ७ ॥

द्राह्यायणः-'स्येनोसीति प्रस्तरे यजमानं वाचयेदिति' । प्रस्तरे प्रस्तरे स्पर्शं कारयित्वेति शेषः । पाठस्तु—

**श्येनोऽसि गायत्रछन्दा अनु त्वारभे स्वस्ति मा सम्पारयामा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥ ८ ॥**

हे बहिष्पवमान ! त्वं गायत्र्याख्यं छन्दो विशिष्टः सन् 'श्येनः' श्येनाख्यपक्षिसदृशः 'असि' तथा प्रबलोसीत्यर्थः । 'त्वा' तथाविधं त्वां 'अन्वारभे' आनुकूल्येन स्पृशामि 'स्वस्ति' क्षेमो विघ्नाभावरूपो यथा भवति तथा 'मा'मां 'सम्पारय' सम्यग्यज्ञस्य पारम्नय 'स्तोत्रस्य' बहिष्पवमानरूपस्य यतः स्तोत्रमात्रमाज्यपृष्ठादिकमनन्तरभावित्वेन सम्बद्धमस्ति। यद्वा 'स्तोत्रस्य स्तोत्रं' प्रशस्तं स्तोत्रं बहिष्पवमानादिकं तन्मा 'मागम्यात्' 'आगच्छतु 'इन्द्रवन्तः' बहिष्पवमानदेवतारूपेणेन्द्रेण तद्वन्तो वयं 'वनेमहि' सर्वाः स्तोत्रदेवता सम्भजेमहि । तत्प्रसादात् 'प्रजां' पुत्रादिरूपां 'इषं' इष्यमाणमन्नं च 'भक्षीमहि' न तु भजेमहि ॥ ८ ॥

द्राह्यायणः-'संवर्चसेतीक्षकान् सहकारिणश्च प्रेक्षमाणो जपे'दिति । स्तोत्रप्रयोगं द्रष्टुमागता ईक्षकाः प्रस्तोत्रादयः उपगातारः सहकारिणस्तान् सर्वान् प्रेक्ष्यमाण उद्गाता संवर्चसेति मन्त्रं जपेत् । पाठस्तु—

**संवर्चसा पयसा सन्तपोभिरगन्महि मनसा सꣳ**

**शिवेन संविज्ञानेन मनसश्च सत्यैर्यथा वोऽहं चारुतमं वदानीन्द्रो वो दृशे भूयासꣳ सूर्यश्चक्षुषे वातः प्राणाय सोमो गन्धाय ब्रह्म क्षत्राय ॥ ९ ॥**

हे ईक्षकाः प्रस्तोत्रादय उपगातारश्च ! 'वर्चसा' ब्रह्मवर्चसेन 'समगन्महि' वयं सङ्गता अभूम, तथा 'पयसा' दक्षिणारूपाणां गवां हि क्षीरेण समगन्महि । तथा कर्मानुष्ठानरूपै'स्तपोभिः' समगन्महि । तथा 'शिवेन' मङ्गलेन आस्तिक्ययुक्तेन समगन्महि । तथा 'मनसा' सम्बन्धिभिः सत्यैर्यथार्थभूतैः संकल्पैश्च । किञ्च 'यथा वः' युष्माकं 'चारुतमं' अतिशयेन रमणीयं 'वदानि' तथा वचसो विवृत्या युज्ये । 'वः' युष्माकं 'दृशे' दर्शनाय । 'इन्द्रः' इति लुप्तोपमं इन्द्रं इन्द्र इवाहं दर्शनीयो 'भूयासं' 'सूर्यः' इव 'चक्षुषे' तेजसे 'वातः' वायुरिव 'प्राणाय' प्राणनाय जीवनाय 'सोमो गन्धाय' सोम इव गन्धाय सोमो रसात्मको गन्धाय भवति शुष्काणां गन्धानुपलब्धेः 'ब्रह्म' इव ब्राह्मण इव पुरोहितः 'क्षत्राय' बलाय क्षत्रियाय वा भूयासमिति सर्वशेषः ॥९॥

द्राह्यायणः—'नमो गन्धर्वायेत्यादित्यमिति' प्रेक्षमाणो जपेदिति तत्रानुषज्यते । पाठस्तु—

**नमो गन्धर्वाय विष्वग्वादिने वर्चोधा असि वर्चो मयि धेहि ॥ १० ॥**

'गन्धर्वाय' गावो वृष्ट्युदकानि रश्मयो वा तान् धारयतीति गन्धर्वः आदित्यस्तस्मै 'नमः' अस्तु । गवि वाग्भिशेव इति गोशब्द उपपदे ध्रिञो धातोर्घप्रत्यये उपपदस्य च गम्भावे गन्धर्वशब्दो व्युत्पन्नः । कथंभूताय च 'विष्वग्वादिने' वातिर्गतिकर्मा विष्वक् सर्वान्वा वादित्र ईदृशस्त्वं 'वर्चोधाः' च वर्चसस्तेजसो धारयिता 'असि' अतो मयि उद्गातरि 'वर्चः' तेजः 'धेहि' निधेहि ॥ १० ॥

इति तृतीयखण्डः ।

## अथ चतुर्थ खण्डः।

सवनीयपशोर्वपायाᳪ हुतायां सदः प्रविशन्तो धिष्ण्यानुपतिष्ठेरन्। अध्वनामिति सूत्रकारेण रौरुकिशाखोक्तानि यजूᳪषि यदा प्रयुञ्जीरन् तदाऽनेन मन्त्रेण आदित्योपस्थानमिति विकल्पेनोक्तम। अन्ये तु ताण्डिशाखाधीतानां यजुषां प्रयोगेपि आम्नानसामर्थ्यात् जैमिनिना तथैव विनियुक्तत्वाच्च अनेनादित्यमुपस्थाय इत्याहुः। पाठस्तु—

**अध्वनामध्वपते स्वस्ति मेऽद्यास्मिन् देवयाने पथि भूयात् ॥ १ ॥**

हे अध्वनामध्वपते ! हे मार्गाणां मध्यमः प्रशस्तोन्तरिक्षमार्गः तस्य स्वामिन् ! यद्वा एकोध्वशब्दोऽनुवादः अध्वनां पतिरित्यर्थः। वसूयवो वसुपते वसूनामिति वत् 'मे'मम 'अस्मिन् देवयाने' देवान् येन यज्ञाख्येन मार्गेण यान्ति प्राप्नुवन्ति तस्मिन् यज्ञाख्ये 'पथि' मार्गे अथेदानीं 'स्वस्ति' क्षेमः भूयात् ॥ १ ॥

द्राह्यायणः–'सम्राडसीत्याहवनीयमुपस्थायेति उत्तरवेदेः पश्चादवस्थायोत्तरवेदिक्रमादाहवनीयमुपस्थायेति'। उत्तरवेदेः पश्चादवस्थायोत्तरवेदिक्रमादाहवनीयमुपतिष्ठेरन्। पाठस्तु—

**सम्राडसि कृशानुः ॥ २ ॥**

हे आहवनीय ! त्वं 'सम्राट्' सम्यग्राजमानो दीप्यमानः सन् 'कृशानुः' सर्वस्य कर्शयिता तनूकर्त्ता दाहको भवसि कृश तनूकरणे अस्मात् उणादिको अनुक्प्रत्ययः ॥ २ ॥

द्राह्यायणः–'उदङ्चोगत्वाऽस्ताव चात्वालशामित्रान् उदङ्मुखस्तुथो नभोऽसंमृष्ट इति। उदङ्मुखाः तिष्ठन्तः ततः आस्तावदेशं चात्वालं शामित्रं स्तुत्यादिभिर्मन्त्रैर्यथाक्रममुपतिष्ठेरन्। पाठस्तु—

**तुथोसि जनधायो नभोसि प्रतक्वाऽसंमृष्टोसि हव्यसूदनः ॥ ३ ॥**

हे आस्तावदेश ! त्वं 'जनधायः'जनानां धारकः 'तुथः' तुद्यतेर्वधकर्मणस्तुथः रक्षःप्रभृतीनां हन्ता। यद्वा तु क्षिप्रं थर्वति गच्छति देवानिति तुथः थर्वतिर्गतिकर्मा एतत्संज्ञोसि। हे चत्वाल ! त्वं 'नभः' चात्वालादुत्तरवेद्यादिकान् धिष्ण्यानुपयान्ति तेन गतमृत्तिकत्वादवकाशरूपत्वेनान्तरिक्षमसि, 'प्रतक्वा' प्रकर्षेण तक्वा स्वावयवैः पांशुभिः सर्वान्

धिष्ण्यान् प्रविशन्नसि तकतिर्गतिकर्मा । हे शामित्रदेश ! त्वं 'हव्यसूदनः' हव्यानां हविषां हृदयाद्यङ्गानां सूदकः अत एव 'असंमृष्टः' हविःसंस्कारत्वेन स्वत एव शुद्धत्वात् सम्मार्जनसंस्कारानिरपेक्षोसि ॥ ३ ॥

द्राह्यायणः-'विभुरसीत्याग्नीध्रीयमुपतिष्ठेरन्' । पाठस्तु—

**विभुरसि प्रवाहणः ॥ ४ ॥**

हे आग्नीध्रीय ! त्वं 'विभुः' विभविता होत्रीयादिधिष्ण्यप्राप्त्या विभूतिमानसि । आग्नीध्रीयादिधिष्ण्येष्वग्नयो विध्रियन्ते 'आग्नीध्रीयाद्धिष्णियान्विहरतीति' श्रुत्यन्तरम् । अत एव 'प्रवाहणः प्रकर्षेण वोढा तैर्यज्ञस्य वा धारकोऽसि ॥ ४ ॥

अत्र सूत्रम्-'पूर्वस्यां॑सदसो द्वारि प्रत्यङ्मुखास्तिष्ठन्तो वह्निरिति होतुर्धिष्ण्यमिति उपतिष्ठेरन्निति शेषः ।

**वह्निरसि हव्यवाहनः ॥ ५ ॥**

इति पाठः ।

हे होत्रीय ! 'वह्नि'र्वोढासि, एतदेव विवृणोति 'हव्यवाहनो' हविषां चरुपुरोडाशसोमानां वोढासि होत्रीयसमीपेऽवस्थितस्य होतुर्वषट्कारेण हि सर्वाणि हवीं॑षि हूयन्ते ॥ ५ ॥

अत्रम्-सूत्रं 'श्वात्र इति मैत्रावरुणस्येम् ति' ।

**श्वात्रोसि प्रचेताः ॥ ६ ॥**

इति पाठः ।

हे मैत्रावरुणधिष्ण्य ! त्वं 'प्रचेताः' प्रकृष्टज्ञानोसि मित्रावरुणौ हि तत्कर्म स्वमजानन् सर्वानृत्विजः स्वे स्वे कर्मणि प्रशास्ति ॥ ६ ॥

अत्र सूत्रम्-'तुथ उशिगङ्गारिरवस्युरिति ब्राह्मणाछं॑सिप्रभृतीनामुदञ्च इति उदङ्मुखाः सन्तः तुथोसि विश्ववेदा इति ब्राह्मणाछं॑सिधिष्ण्यम्, उसिगासि कविः पोतुरिति होतुर्धिष्ण्यम्, अङ्गारिरसि बम्भारिरिति नेष्टुः, अवस्युरसि दुवस्वानित्यच्छावाकस्य ।

**तुथोसि विश्ववेदा उशिगसि कविरङ्गारिरसि बम्भारिरवस्युरसि दुवस्वान् ॥ ७ ॥**

अक्षरार्थस्तु हे ब्राह्मणाछंसि धिष्ण्य ! त्वं'विश्ववेदाः' सर्वज्ञस्तुथनामकोसि, हे पोतृधिष्ण्य ! त्वं'उशिक्' कमनीयः कविः क्रान्तदर्शी प्राज्ञोसि । हे नेष्टृधिष्ण्य ! त्वं अङ्गारिः आङ् अधेरुपस्पृष्टस्य घृक्षरणदीप्त्यो-

रिति अस्य रूपमेतत् । आसमन्तात् दीप्तसंज्ञः सोमपालोसि । 'भारि'
भारिरिति बिभर्त्तेः रूपं बिम्भारि सर्वस्यातिशयेन भर्त्ता एतत्संज्ञः
सोमपालोसि । हे अच्छावाकधिष्ण्य ! त्वम् 'अवस्युः' अवो रक्षणं यज-
मानानामिच्छतीति अवस्युस्तादृशोसि। 'दुवस्वान्' दुवः परिचरणं तद्वां-
श्चासि ॥ ७ ॥

अत्र सूत्रम्-'शुन्ध्युरसि मार्जालीय तत्रैव तिष्ठन्त' इति । सदसो
द्वार्य्येव तिष्ठन्तो दक्षिणाभिमुखा मार्जालीयमुपतिष्ठेरन् ।

## शुन्ध्युरसि मार्जालीयः ॥ ८ ॥

इति पाठः ।

हे मार्जालीय ! त्वं 'शुन्ध्युः' शोधयिता एतन्नामकोसि अत एव
मार्जालीयभक्षितानां ग्रहचमसादीनां मार्ज्जालत्वेन प्रक्षालितत्वाधि-
करणत्वेन शोधकोसि ॥ ८ ॥

अत्र सूत्रम्-'ऋतधामेत्यौडुम्बरीमिति' । सदसो द्वार्य्येव तिष्ठन्तः
प्रत्यङ्मुखा औडुम्बरीमुपतिष्ठेरन् ॥

## ऋतधामासि स्वर्ज्योतिः ॥ ९ ॥

इति पाठः ।

हे औडुम्बरि ! त्वं 'ऋतधामा' ऋतं सत्यं यज्ञो वा धामावस्थानं
यस्याः सा ऋतधामा ईदृश्यसि । 'स्वर्ज्योतिः' उन्नतत्वेन स्वर्गस्य
प्रकाशिका भवसि ॥ ९ ॥

अत्र सूत्रम्-'समुद्र इति ब्रह्मसदनद्वार्य्येव तिष्ठन्तः' पाठस्तु—

## समुद्रोसि विश्वव्यचाः ॥ १० ॥

हे ब्रह्मसदन ! त्वं 'समुद्रः' समुद्रवत् पूर्णोसि वेदत्रयोक्तैः मन्त्रैः
'विश्वव्यचाः' सर्व्वत्र व्याप्तोसि ॥ १० ॥

सूत्रम्'-उत्तरेण सदो गत्वाऽन्तर्व्वेदि प्रत्यङ्मुखास्तिष्ठन्तोऽहिरिति
प्रजहितामिति' । प्रजहितशब्देन पुराणो गार्हपत्योऽभिधीयते तमुप-
तिष्ठेरन् ।

## अहिरसि बुध्न्यः ॥ ११ ॥

इति पाठः ।

'अहिरसि' हन्ता रक्षःप्रभृतीनां 'बुध्न्यो' बुध्ने मूले आदौ आधान
काल प्रथमज्ञातोसि हे प्रजहित इति ॥ ११ ॥

सूत्रम्–'अज इति गार्हपत्यमिति'। यः पुरातन आहवनीयः स इदानीमौत्तरवेदिकप्रणयनादूर्ध्वं गार्हपत्यसंपन्नस्तमुपतिष्ठेरन्।

**अजोस्येकपात् ॥ १२ ॥**

हे नूतनगार्हपत्य ! त्वं 'अजः' गमनशीलः सन्नस्य ह्यग्निः उत्तरवेदिं प्रति गच्छति। न तु प्रजहितेन सह तस्मादेकपादसि ॥ १२ ॥

तत्र सूत्रम्–'सगरा इति दक्षिणाग्नेरायतनमिति'। उपतिष्ठेरन् इति शेषः। पाठस्तु—

**सगरा असि बुध्न्यः ॥ १३ ॥**

'सगरा' गरसा गरणेन हविर्भक्षणेन सहितः 'बुध्न्यः' मूले भवश्चासि। हे दक्षिणाग्न्याश्रयेति ॥ १३ ॥

सूत्रम्–'कव्य इति दक्षिणवेद्यन्तमिति'। महावेदेर्दक्षिणं पार्श्वं दक्षिणमुखा उपतिष्ठेरन्। पाठस्तु,—

**कव्योसि कव्यवाहनः ॥ १४ ॥**

हे वेदिदक्षिणपार्श्व ! त्वं 'कव्योसि' स्तुत्योऽसि तथा 'कव्यवाहनः' कव्यं पितृभ्यो देयं हविः तस्य वोढा चासि दक्षिणाभिमुखेन पित्र्यं हविः प्रयुज्यते ॥ १४ ॥

अत्र सूत्रम्–'तत्रैव तिष्ठन्तः सर्वान् समन्वीक्ष्यमाणः पातमेतीति'। उपस्थितः सर्वानेव धिष्णियान् पुनः पुनः समीक्ष्यमाणाः पातमेति संहृत्योपतिष्ठेरन्। पाठस्तु—

**पातमाग्नयो रौद्रेणानीकेन पिष्टत मा नमो वोस्तु मा मा हिंसिष्ठ ॥ १५ ॥**

उपस्थिताः हे 'अग्नयो' धिष्ण्येष्ववस्थिता ! युष्मदीयेन 'रौद्रेण' अस्मद्विरोधिविनाशकेन क्रूरेण 'अनीकेन' तेजसा 'मा' मां 'पात' रक्षत। तथा 'मा पिष्टत' ममापेक्षितैर्भोगैः पूरयत। पृ पालनपूरणयोः। 'वो' युष्मभ्यं 'नमोस्तु' मां यूयं 'माहिंसिष्ट'। अथापरं विधानं आहवनीयादीन् धिष्ण्यान् स्वैः स्वैरुपस्थानमन्त्रैरुपस्थाय तदानीमेव तं तं धिष्ण्यं समन्वीक्ष्यमाणाः पातमेति मन्त्रं ऊहेन एकवचनोपेतं कृत्वा ब्रूयुः। तत्रोच्यते हि एकैकमुपस्थायैतद्ब्रूयुरिति शाण्डिल्यो बहुशब्दादेकवत्कुर्वन्त इति, तद्यथा–सूच्यते हि एकैकमुपस्थाय याहिमाग्ने रौद्रेणानीकेन पिष्टतमा नमस्तेस्तु मामाहिंसीरिति ॥ १५ । १ । ४ ॥

**इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य चतुर्थः खण्डः।**

## अथ पञ्चमः खण्डः।

अत्र सूत्रम्–'ऋतस्य द्वारौ स्थ इत्यपरौ द्वारबाहू संमृज्य मामा सन्ताप्तमिति प्रविशेयुरिति'।

**ऋतस्य द्वारौ स्थो मा मा सन्ताप्तम् ॥ १ ॥**

हे सदसः पश्चाद्ये द्वारशाखे ऋतस्य यज्ञस्यैव द्वारबाहू भवथ युवा· मतिक्रम्य प्रविशन्तं मा मां मा सन्तापं सन्तापयुक्तं मा कुरुत ॥१०॥

अत्र सूत्रम्–'दक्षिणेनौडुम्बरीं गत्वा तस्या उत्तरत उपविशेयुः नमः सखिभ्यः इतीति'। पाठस्तु--

**नमः सखिभ्यः पूर्वसद्भ्यो नमो परसद्भ्यः ॥ २ ॥**

ये सखाय ऋत्विजः पूर्वदेशे सीदन्ति उपविशन्ति ये वा परदेशे सीदन्ति। यद्वा उद्गातृसर्पणात्पूर्वं ये सदस्या उपविशन्ति ये चोत्तरकालं तेभ्यो द्विविधेभ्यः प्रत्येकं नमोऽस्तु ॥ २ ॥

अत्र सूत्रम्--'दक्षिणमनुबाहुं दण्डं कृत्वा श्येन इत्यवेक्ष्येतेति'। उपवेशानन्तरं भक्षणार्थं सोमचमसम्प्रतिगृह्य आत्मनो दक्षिण· बाहुं अनुचमसस्य दण्डं कृत्वा तञ्चमसान्तिर्यञ्चं धारयित्वा श्येन इति मन्त्रेण तं चमसमवेक्ष्य भक्षयेदिति वक्ष्यमाणपदेनान्वयः। पाठस्तु--

**श्येनो नृचक्षा अग्नेष्ट्वा चक्षुषावपश्यामि ॥ ३ ॥**

चमसस्थित हे सोम! 'त्वा' त्वामहमुद्गाता 'श्येनः' पतन्नामकप· क्षिवत् प्रबलः सूक्ष्मदर्शी वा भूत्वा 'नृचक्षा' नृणां द्रष्टा सन् 'अग्नेः' सम्बन्धिना 'चक्षुषा' प्रतिहतिवर्जितेनाऽवाङ्मुखः पश्यामि ॥ ३ ॥

सूत्रमत्र--'इन्दविति द्विरल्पं भक्षयेदिति'। सकृन्मन्त्रेण सकृत तूष्णीमिति द्विर्भक्षणं स्पष्टमन्यत्।

**इन्दविन्द्रपीतस्य त इन्द्रियावतो गायत्रछन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ ४ ॥**

तव सम्बन्धिनमहमुद्गाता अल्पं भागं भक्षयामि। कीदृशस्य तव 'इन्द्रपीतस्य' इन्द्रेण पीत्वाऽवशेषितस्य 'इन्द्रियावतः' चक्षुरादीन्द्रि· यपाटवहेतुत्वेन तद्वतः 'गायत्रछन्दसः' प्रातःसवने तद्योग्यछन्दो· विशेषोपेतस्य 'सर्वगणस्य' ध्वर्युप्रभृतिचतुर्भिर्ऋत्विजां गणैरुपेतस्य 'उपहूतस्य' मदीयपानार्थं अन्यैर्ऋत्विग्भिः सह भक्षैरनुज्ञातस्य। की·

दृशोऽहं 'सर्वगणः' सर्वैः पुत्रभृत्यादिगणैः ऋत्विग्गणैर्वोपेतः 'उपहूतः' अन्यैर्ऋत्विग्भिरनुज्ञातः ॥ ४ ॥

अत्र सूत्रम्—'ऊर्ध्वं इति मुख्यान् प्राणानभिमृशेतेति'। भक्षणानन्तरं ऊर्द्ध्वः सप्त ऋषीनिति सप्तमुख्यान् प्राणान् चक्षुषी नासिके श्रोत्रे मुखं चाभिमृशेत। पाठस्तु—

**ऊर्द्ध्वस्सप्त ऋषीनुपतिष्ठस्वेन्द्रपीतो वाचस्पते सप्तर्त्विजोऽभ्युच्छ्र्यस्व जुषस्व लोकम्माऽर्वागवगाः ॥ ५ ॥**

हे भक्षितसोम! त्वं 'ऊर्द्ध्वः' शिरोभागं प्राप्तः सन् 'सप्तऋषीन्' सप्तसंख्ययैतच्छिद्रवर्त्तिनः चक्षुरादीन्द्रियरूपान् 'उपतिष्ठस्व' प्राप्नुहि। तानाप्यायितुं दर्शनसाधनत्वादेषामृषित्वम्, ऋषिर्दर्शनादिति हि निरुक्तम्। यद्वा गौतमादिऋषिरूपेण मुखावस्थितच्छिद्राणां मुखस्थत्वादृषित्वम्। एतच्च बृहदारण्यके 'तस्याः सप्त ऋषयः सप्ततीरे इति मन्त्रेणेमावेव गोतमभरद्वाजाविति' ब्राह्मणेन स्पष्टीकृता। हे 'वाचस्पते' मदीयस्तोत्ररूपाया वाचः पालक सोम! त्वं इन्द्रदेवतया पीतः सन् 'सप्तर्त्विजो' होतृप्रभृतीनभिलक्ष्य 'उच्छ्र्यस्व' तानाप्यायितुमुच्छ्रितो भव। ततो 'लोकं' स्थानं स्वकीयजठरलक्षणं 'जुषस्व' सेवस्व 'अर्वाक्' अर्वाचीनः सन् 'मा' मां 'अवगाः' नाभेरधो न गच्छेः। 'शिवो मे सप्त ऋषीनुपतिष्ठस्व मा मेवार्वाङ्नभिमातिगा' इति हि निगमान्तरम् ॥ ५ ॥

अत्र सूत्रम्—'सोम रारन्धीति हृदयमिति। अभिमृशेदित्यनुषङ्गः।

**सोमरारन्धि नो हृदि पिता नोसि मम तन्मा माहिꣳसीः ॥ ६ ॥**

हे सोम! 'नो' अस्माकं 'हृदि' हृदये 'रारन्धि' रमस्व। हे भगवन्! ऐश्वर्यादिगुणविशिष्ट! त्वं नो अस्माकं 'पिता' पालयितासि 'मां' उद्गातारं 'माहिꣳसीः' वमनरेचनरूपां हिंसां माकार्षीरित्यर्थः ॥ ६ ॥

अत्र सूत्रम्—'सोमगीर्भिरिति नाभिमिति' अभिमृशेदित्यनुषङ्गः। पाठस्तु—

**सोम गीर्भिष्ट्वा वयं वर्द्धयामो वाचोविदः सुमृडीको न आविश ॥ ७ ॥**

हे सोम! 'वाचोविदः' मन्त्राभिज्ञा वयमुद्गातारः 'गीर्भिः' स्तुतिभिः 'त्वा' त्वां 'वर्द्धयामः' अभिवृद्धं कुर्मः। त्वञ्च 'सुमृडीकः' सुखकरो भूत्वा 'नो' अस्मान् 'आविश' ॥ ७ ॥

'तं स आप्याययेदभिमृश्याप्यायस्वेत्येतया गायत्र्येति' । यः प्रतिहर्त्ता पश्चादभक्षयत सः तच्चमसमभिमृश्याप्याययेत् द्रोणकलशात् सोमरसमादाय तेन वर्द्धनमाप्यायनं मन्त्रेणाभिमर्शनमात्रं वा । पाठस्तु—

**आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ ८ ॥**

हे सोम ! त्वं 'आप्यायस्व' वर्द्धस्व 'ते' तव 'वृष्णियं' सेचनसमर्थं बलं 'विश्वतः' सर्वतः सर्वाभ्यो दिग्भ्यः 'समेतु' सम्यक् प्राप्नोतु । त्वं च अस्माकं 'वाजस्य' अन्नस्य बलस्य वा 'सङ्गथे' सङ्गमे हेतुर्भव ॥८॥

अत्र सूत्रम्–'तेषामनवेक्ष्य भक्षणमवमैरिति' । प्रातःसवन ऊर्वैरिति माध्यन्दिने काव्यैरिति तृतीयसवने पितृभिरिति सर्वत्रानुसंहरेदिति । नाराशंसाभिधचमसान् प्रकृत्य तच्छब्दः प्रयुज्यते । यथेतरचमसभक्षणं 'श्येनो नृचक्षा' इत्यनेन मन्त्रेणावेक्ष्य पश्चात्क्रियते, न तथा तेषान्नाराशंसचमसानां किन्त्वनवेक्ष्यैव भक्षणं अवमैरित्यादिभिस्त्रिभिर्मन्त्रैस्त्रिषु सवनेषु नाराशंसभक्षणं, न पुनः इन्दविन्द्रपीतस्येति । त्रिस्वपि मन्त्रेषु पितृभिरित्यादिवाक्यशेषोऽनुषज्यते । पाठस्तु—

**अवमैस्त ऊर्वैस्ते काव्यैस्ते पितृभिर्भक्षितस्य मधुमतो नाराशंसस्य सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ ९ ॥**

त्रिविधाः पितरः अवमा ऊर्वाः काव्याश्चेति । एते अनुसवनं नाराशंसदेवताः । हे सोम ! 'अवमैः' अवतेरौणादिकोऽयमच्प्रत्ययः, रक्षकैः एतत्संज्ञकैः'पितृभिः'प्रातःसवने 'भक्षितस्य' 'ते' तव 'मधुमतो' माधुमता माधुर्योपेतस्य 'नाराशंसस्य' नरैः सन्तानभूतैः शस्यन्त इति नाराशंसाः पितरः तत्सम्बन्धाच्चमसो नाराशंसः तस्य किञ्चिद्भागं 'भक्षयामि' । सर्वगणस्येत्यादि पूर्ववत् । एवं ऊर्वैस्ते काव्यैस्त इति मन्त्रयोर्योजना । उर्वी पृथ्वी तस्यां सञ्चरन्तः ऊर्वाः काव्या स्तुत्यर्थाः एतत्संज्ञकैः पितृभिः भक्षितस्येत्येतावान् विशेषः ॥ ९ ॥

अत्र सूत्रम्–'तथैव जङ्घामुपहत्य युंज्यात् स्तोमं दीक्षायै तपसो मनसो वाच इती'ति । यथा पुरा प्रस्तरेण स्वकीयां जङ्घामुपस्पृश्य स्तोमायुक्तः तथैवेदानीमपि स्तोमयोगमुपकरणदर्भाभ्यां जङ्घास्पर्शोऽत्र विशेषः । पाठस्तु—

दीक्षायै वर्णेन तपसो रूपेण मनसो महिम्ना वाचो विभूत्या प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय ॥१०॥

आदितः पदद्वयात्मकाश्चत्वारो मन्त्राः एतदेवाभिप्रेत्य दीक्षातपोमनोवाक्शब्दैश्चतुर्भिः प्रतीकग्रहणं कृतम् । प्रजापतिस्त्वेत्ययं भागः चतुर्ष्वपि मन्त्रेष्वनुषज्यते । तदाह सूत्रकृत्-'अन्तः सर्वेषां प्रजापतिस्त्वेतीति' । एतैश्चतुर्भिरपि मन्त्रैरेकस्मिन्नेव स्तोत्रे स्तोमयोग इत्येकः पक्षः । यत्र नैरन्तर्येण आवृतस्तोत्राणि चत्वारि लभ्यन्ते तेषु चतुरो मन्त्रान् क्रमेण पृथग्विभज्य स्तोमयोगः न त्वेकस्मिन्नेव स्तोत्र इत्यपरः पक्षः । द्वावपि पक्षौ सूत्रकारो दर्शयति-'नानाधानञ्ज्यो यत्रानन्तराणि चत्वारीति' । मन्त्रार्थस्तु-हे स्तोम ! 'प्रजापतिः' प्रजापालको देवः 'प्रजाभ्यः' प्रजोपकारार्थं 'दीक्षायै वर्णेन' यजमानानुष्ठितनियमरूपायाः सामर्थ्येन 'त्वा युनक्तु' त्वां योजयतु । तथा 'अपानाय' अपाननाय बहिर्गतायाः प्राणवृत्तेरन्तःप्रवेशनमपाननं तेन हि प्राणवायुः शरीरे धीयते । 'अपानेन ह्ययं यतः प्राणो न परां भवतीति' श्रुत्यन्तरम् । तदर्थमपि प्रजापतिस्त्वां युनक्तु । एवमुत्तरेष्वपि त्रिषु मन्त्रेषु योज्यम् ! हे स्तोम ! 'तपसोरूपेण' यजमानानुष्ठितस्य पयोव्रतादिलक्षणरूपेण प्रजापतिस्त्वां युनक्तु इति द्वितीयस्य विशेषः । 'मनसो' मनस्तत्त्वस्य 'महिम्ना' सर्वविषयावगाहनशक्त्या प्रजापतिर्युनक्त्विति तृतीयस्य विशेषः । तथा 'वाचो विभूत्या' विभवेन सर्वपदार्थप्रकाशनसामर्थ्येन प्रजाजातिर्युनक्त्विति चतुर्थस्य । एतस्य जप एव स्तोमयोगः। त्रिवृत् पञ्चदशसप्तदशैकविंशादयो द्वितीयतृतीयाध्यायोक्तलक्षणा स्तोमाः । तेषु बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमो विहितः । तस्मात् पूर्वत्र बहिष्पवमानाङ्गत्वेनाग्नेस्तेजसेति मन्त्रः त्रिवृत्स्तोमयोगेभिहितः । तथा चतुर्ष्वाज्येषु स्तोत्रेषु पञ्चदशस्तोमो विहितः 'पञ्चदशान्याज्यानी'ति श्रुतेः । अतोऽत्राज्यास्तोत्राङ्गत्वेन पञ्चदशस्तोमयोगे दीक्षायै वर्णेनत्यादिमन्त्रोऽभिहितः । आज्यस्तोत्रेभ्य ऊर्द्ध्वं प्रातःसवनं समाप्यते । अत्र क्रतुसंग्रहः—

वसतीवर्यपां प्राप्तौ प्रचारः स्याद्दधिग्रहे ।
उपांशु अदाभ्यौ हुत्वा महाभिषवमाचरेत् ॥
उपांशुमन्तर्यामगञ्च हुत्वा रिक्तन्तु सादयेत् ।
अथैन्द्रवायवं पात्रे गृहीत्वा सादयेत् खरे ॥
यो मैत्रावरुणं तत्तु श्रीणाति पयसा ग्रहम् ।
शुक्रः श्रृतो हिरण्येन श्रृतो मन्थी तु सक्तुभिः ।

गृहीत्वाग्रयणं गृह्णात्यतिग्राह्याभिधग्रहान् ।
गृहीत्वौक्थ्यं ध्रुवो ग्राह्यः पवमानग्रहास्त्रयः ॥
पूतभृद्द्रोणकलशौ परश्चाधवनीयकः ।
ते बहिष्पवमानाय प्रश्नुयन्त्यत्र पञ्च ते ॥
गृहीत्वाश्विनमाग्नेयपशोः कुर्यादुपाकृतिम् ।
सवनीयपुरोडाशैश्चरित्वा ह्यैन्द्रवायवम् ॥
हुत्वा ग्रहं द्वयोर्मैत्रावरुणाश्विनयोर्हुतिः ।
शुक्रमन्थादिकान् कृत्वा चमसानपि जुह्वति ॥
संरक्ष्यर्तुग्रहेन्द्राग्निसोमप्रतिगरस्ततः ।
आज्यस्तोत्रेभ्य ऊर्द्ध्वं हि प्रातः सवनसंस्थितिः ॥ इति ।

अथ माध्यन्दिनसवने पवमानस्तोत्रार्थं स्तोमयोगो बहिष्पवमानवत् अग्नेस्तेजसेतिमन्त्रेण कार्यः। अत एव द्राह्यायणो माध्यन्दिनार्भवपवमानयोः पूर्वोक्तमतिदिशति–'एतत्सर्वं कुर्यादुत्तरयोः पवमानयो'रिति । अग्नेस्तेजसेति मन्त्रेण पूर्वभागं तथैवोद्गानस्योत्तरभागे किञ्चिद्विशेषं द्राह्यायण आह—'स्तोमयोगेग्निर्युनक्त्वि'ति । एतस्य स्थाने 'वायुर्युनक्तु सूर्यो युनक्त्वि'ति' प्रक्षिपेदिति शेषः ॥ १० ॥

तयोर्मध्ये माध्यन्दिनसवने स्तोमयोगमन्त्रस्योत्तरभाग एवमाम्नायते—

**वायुर्युनक्तु मनसा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियꣳसत्याः कामाः यजमानस्य सन्तु ॥ ११ ॥**

'वायु'र्देवोऽनुग्राहकेण मनसा 'स्तोमं' पञ्चदशाख्यमाध्यन्दिनपवमानस्तोत्रार्थं 'युनक्तु' योजयतु । यज्ञाय इत्यादिपूर्ववद्व्याख्येयम् ॥ ११ ॥

यजमानेन वाचनीयस्य श्येनोसीत्येतस्य मन्त्रस्य स्थाने द्राह्यायणो मन्त्रद्वयमुत्तरयोः सवनयोर्दर्शयति–'वृषकोसि स्वरोसीति' यजमानवाचन' इति । तत्र प्रथममन्त्र एवमाम्नायते--

**वृषकोऽसि त्रिष्टुप्छन्दा अनुत्वारभे स्वस्ति मासं पारयामास्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥ १२ ॥**

हे मध्यन्दिन पवमान ! त्वं त्रिष्टुबाख्यं छन्दोविशिष्टः सन् 'वृषकः' कामाभिवर्षणसमर्थ इन्द्रोसि । अन्यत् सर्वं श्येनमन्त्रवद्व्याख्येयम् ॥१२॥

'इन्दाविन्द्रपीतस्ये'त्यादिचमसभक्षणमन्त्रः, तं मन्त्रं द्राह्यायणः प्रातःसवनसम्बन्धविनियोगावसर एव तद्विशेषकथनेनार्थादित्थं वि-

नियुक्तवान्-'इन्दव इति द्विरल्पं भक्षयेद्यथासवनं छन्दांस्यादिशन्नि'ति। प्रातःसवने गायत्रछन्दस इति पाठः, माध्यन्दिने त्रिष्टुप्छन्दस इति, तृतीयसवने जगतीछन्दस इत्येतावानेव विशेषः। पाठस्तु—

इन्दविन्द्रपीतस्य त इन्द्रियावतस्त्रिष्टुप्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ १३ ॥

पूर्ववद्व्याख्येयम्। अत्र क्रतुसंग्रहः-
माध्यन्दिने तु सवने पुरोडाशः पशोर्भवेत् ॥
ग्रहो मरुत्वतीयः स्यात् पवमानेन संस्तुतिः।
दधिघर्म्मे हुते दद्याद्दक्षिणास्ते यथायथम् ॥
मरुत्वतीयांस्तान् हुत्वा माहेन्द्रेण समाप्यते॥ इति ॥ १३ ॥

अथ तृतीयसवने यदिदमार्भवपवमानाख्यं स्तोत्रं तदर्थमग्नेस्तेजसेति मन्त्रेण स्तोमयोगः कर्त्तव्यः, तस्य मन्त्रस्योत्तरत्र भागे यः पाठशेषः स एवमाम्नायते—

सूर्यो युनक्तु वाचा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियꣳ सत्याः कामा यजमानस्य सन्तु ॥ १४ ॥

'सूर्यो'देवो'वाचा'मन्त्ररूपया 'स्तोमं'सप्तदशाख्यं'युनक्तु'योजयतु। अन्यत् पूर्ववत् ॥ १४ ॥

श्येनोसीत्यस्य स्थाने तृतीयसवने यजमानेन वाचनीयो मन्त्र एवमाम्नायते—

स्वरोसि गयोसि जगछन्दा अनु त्वारभे स्वस्ति मा सं पारयामास्तोत्रस्य स्तोत्रं गम्याादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥ १५ ॥

हे आर्भवपवमानाभिमानिन् सूर्य ! त्वं 'जगछन्दाः' जगत्याख्येन छन्दसा युक्तः सन् 'स्वरः' स्वरणीयः स्तुत्योसि। तथा 'गयः' फलार्थिभिर्गन्तव्योसि। अन्यत् पूर्ववत् ॥ १५ ॥

तृतीयसवने चमसभक्षणमन्त्र एवमाम्नायते—

इन्दविन्द्रपीतस्य त इन्द्रियावतो जगच्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ १६ ॥

पूर्ववद्व्याख्येयम् ॥ १६ ॥

द्राह्यायणः-'सौम्यमाहृतमुद्गाता वेक्षेतायुर्मे प्राण इति पुनरस्मासु

दध्न्यसीत्यन्त' इति । सौम्यं चरुं अदुध्वर्युभिराहृतं उद्गाता आयुर्म्मे इति मन्त्रेण यजुषा यन्मे मन इत्यनुवादनार्वागादावेक्षेत तस्य मन्त्रस्य दध्न्यसीत्यवसानं स्यात् । यन्मे मन इत्येतद्वक्ष्यमाणं वैकल्पिकं मन्त्रान्तरं न त्वेतेन सह तस्यैकमन्त्रत्वमस्ति तयोरुभयोस्तुल्यार्थेन विकल्पितत्वात् । तदेतद्विशदीकर्त्तुं मन्त्रावसानमुक्तम् । पाठस्तु--

**आयुर्मे प्राणो मनसि मे प्राण आयुपत्न्यामृचि यन्मे मनोयमं गतं यद्वा मे अपरागतꣳ राज्ञा सोमेन तद्वयं पुनरस्मासु दध्नसि ॥ १७ ॥**

'मे' मदीय'मायु'र्जीवनं प्राणसमाश्रितं, 'यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुरिति' कौषीतकिश्रुतेः । तथा मे 'मनसि' अन्तःकरणे स 'प्राणो' पञ्चवृत्तिर्वायुः 'समाश्रितः', स प्राणो मदीयं मन उद्गाने शक्तं कुर्य्यादित्यर्थः । अत एव 'आयुपत्न्यां' आयवो मनुष्याः तेषां पालयित्र्यामृचि साम्न आधारभूतायां स प्राणो वर्त्ततां ऋचां तदाश्रयाणां साम्नां चाहं धारयिता भूयासमित्यर्थः । किञ्च 'मे' मदीयं यदुक्तप्राणविशिष्ट'म्मनो' मानसं 'यमं गतं' मृत्युं प्राप्तम् । 'यद्वा' यदि वा मे मनः 'अपरागतं' पुनरावर्त्तयितुमशक्यं गतं नैरन्तर्येण लौकिक एव विषये आसक्तं तदुभयविधं मनः 'राज्ञा' राजमानेन ईश्वरेण वा 'सोमेन' अवस्यवो वयं अस्मास्वेव पुन'र्दध्नसि' धारयामः ॥ १७ ॥

यस्तु वैकल्पिक उत्तरो मन्त्रः स एवमाम्नायते—

**यन्मे यमं वैवस्वतं मनो जगाम दूरगास्तन्म आवर्तया पुनर्जीवातवे न मर्त्तवेथो अरिष्टतातये ॥ १८ ॥**

अविवाक्ये दशमेऽहनि या पूर्वा 'यन्मे मन' इत्येषा ऋक् अनुष्टुप्त्वात्सा तस्मिन्नहनि निषिद्धा, 'दशमेऽहनि परोक्षमनुष्टुभमुपयन्ति यत्प्रत्यक्षमुपेयुः प्रजापतिमृच्छेयु'रिति ब्राह्मणात् । ततः अस्या अनुष्टुभः स्थाने एषा पङ्क्तिः प्रयोक्तव्येति केचिदिति । सूच्यते हि--'यन्मे मनः स्थाने यन्मे यमिति एक इति' सूत्रकारस्तु दशमेहन्यपि पूर्वस्या ऋचश्चतुर्थं पादमभ्यस्य सैवात्र प्रयोक्तव्या एषा चेति विकल्पिते चोक्तत्वात्, तथैव सूत्रान्तरं-'दशमेहन्यभ्यस्ये'दिति । मन्त्रार्थस्तु,-'मे' मम 'मनो' मानसं 'वैवस्वतं' विवस्वतः सूर्यस्य पुत्रं 'यमं जगाम' शरीरान्निष्क्रम्य प्राप्नोत् । हे सोम ! त्वं 'दूरगाः' दूरगामी यमसदनं प्राप्तः सन् 'मे' मदीयं तन्मनः 'आवर्त्तय' मदीयदेहं प्रत्यावृत्तं कुरु । किमर्थं 'पुनर्जीवातवे

जीवनायतयेपि जीवितुं 'न मर्त्तवे' मरणाभावार्थम्। 'अथो'पि च 'अरिष्टतातये'रिष्टं 'हिंसा' तद्विरुद्धं सुखेनावस्थानं अरिष्टं तस्य तातये विस्ताराय ॥ १८ ॥

द्राह्यायणः-'तस्मिन्नङ्गुष्ठानामिके अवधायाक्षिणी विमार्जीत येनाह्याजिमितीति'। तस्मिन्नङ्गुली अवधायाङ्गुष्ठानामिके इत्येकेऽक्षिणी बिमृजीत येनाह्याजिमितीति, तस्मिन् सौम्यचरोर्ये केचित् द्वे अङ्गुली अङ्गुष्ठानामिके वा अवधाय ताभ्यामक्षिणी विमार्जीत। पाठस्तु-

येनाह्याजिमजयद्विचक्ष्य येन श्येनꣳ शकुनꣳ सुपर्णं यदाहुश्चक्षुरदितावनन्तꣳ सोमो नृचक्षा मयि तद्दधातु १९

येन आहीति पदच्छेदः, हि शब्दो वाक्यालङ्कारे, उपसर्गस्तु व्यवहिताश्चेति व्यवहितेन विडन्तेन सम्बध्यते । 'येन' हि चक्षुषा चक्षुरिन्द्रियेण दूरदर्शिना कश्चिद्धातुश्च 'आजिं' वेधनीयां मर्यादां 'विचक्ष्य' विशेषेण बालाग्र आसज्जयत् अभिजयेत् छन्दसि लुङ्लङ्लिट्। तथा 'येन' चक्षुषा 'सुपर्णं' शोभनपवनं पतत्संज्ञं अभिजयेत् श्येनोपि सूक्ष्मदर्शीति प्रसिद्धः तमपि सूक्ष्मदर्शित्वेनाभिजयेदित्यर्थः । 'अदितौ' पृथिव्यां अन्यदीयं तच्चक्षु 'रनन्तं' अन्तर्हितं वेश्म दिवि प्रकृष्टदर्शनसमर्थ'माहु'रभिज्ञाः कथयन्ति। 'यद्वा षष्ठ्यर्थे सप्तमी। तथैवाश्वलायनः 'दीर्घं यच्चक्षुरदितेरनन्तमिति'। अदितेर्देवमातुः सम्बन्धि यच्चक्षुरनन्तमवस्थानरहितमाहुः वेदाभिज्ञाः। 'तत्' उक्तगुणविशिष्टं चक्षुः नृणां द्रष्टा सोमः मयि 'दधातु' स्थापयतु ॥ १९ ॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य पञ्चमः खण्डः।

## अथ षष्ठः खण्डः।

अत्र सूत्रम्-'सत्र एव ग्रहस्य भक्षयेयुरैन्द्रꣳ सह इतीति' द्विविधो हि दशरात्रः सत्रमहीनश्चेति तयोर्मध्ये सत्ररूप एव दशरात्रे यः षोडशिग्रहोस्ति तमनेन मन्त्रेण भक्षयेयुः। पाठस्तु-

ऐन्द्रꣳ सहोऽसर्जि तस्य त इन्दविन्द्रपीतस्येन्द्रियावतोऽनुष्टुप्छन्दसो हरिवतः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ १ ॥

हे 'इन्दो' सोम! 'ऐन्द्रं' इन्द्रसम्बन्धि 'सहो' बलं 'असर्जि'त्वया सृष्टं

'तस्य' तादृशस्य नवांशं भक्षयामीति सम्बन्धः, शिष्टं पूर्ववत् । अनुष्टुप्छन्दस इति । अनुष्टुप् छन्दस्यास्वृक्षु षोडशिसाम्ना स्तुवते होता चानुष्टुभ एव शंसति अतोऽनुष्टुप्छन्दो यस्मिन् षोडशग्रहे स तथोक्तः तस्य हरिवत इति षोडशिसाम्न आधारभूतास्वृक्षु हरिशब्दसद्भावादेवमुक्तम् । यदि हरिशब्दो हरितासु स्तुवीरन् तदा हरिवत इत्यस्य पदस्योद्धारः ॥ १ ॥

तथैव सूत्रम्—'उदस्य हरिवदहीरकासु चेत् स्तुवीरन्निति' त्रिष्टुप्छन्दस्यां वाजपेयसाम्नि भक्षयेदि'ति । 'गौतमोऽनुष्टुप्छन्दसेति धानंजशाण्डिरन्या'विति सूत्रम् । पाठस्तु—

**इन्दविन्द्रपीतस्य त इन्द्रियावतोऽनुष्टुप्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ २ ॥**

उक्तोऽर्थः ॥ २ ॥

आवृतस्तोत्रेषु परिसमाप्तेषु स्तुतस्य स्तुतमसीति यजमानं वाचयेत् । पाठस्तु—

**स्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वदामास्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥ ३ ॥**

हे आज्य आदिस्तोम ! 'स्तुतस्य' स्तोत्रस्य स्तोत्राणामपि 'स्तुतं' प्रकृष्टं स्तोत्रमसि, तथा 'ऊर्जस्वत्' बलवत् स्तुत्यानां देवानां बलङ्करमसि, 'पयस्वत्' पयआदिकस्य रसस्य हेतुत्वेन तद्वदसि । गतमन्यत्॥३॥

अत्र सूत्रम्—'इष्टयजुष इति पूर्वस्मिन् वाक्ये पृथक् तृचेभ्यः सन्धौ हिं कुर्युरि'ति उक्तत्वात्सन्धिस्तोत्रं तत्र प्रकृतम् तस्मिन् सन्धिस्तोत्रे इष्टयजुष इति मन्त्रेण चमसभक्षः कार्यः । पाठस्तु—

**इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य तिरोह्नयस्य योऽश्वसनिर्गोसनिर्भक्षस्तस्योपहूत उपहूतस्य भक्षयामि ॥ ४ ॥**

हे सोमदेव ! 'ते' तव सम्बन्धी 'यो' भक्षो भक्षणीयो हुतशेषो रसोऽस्ति तस्य भक्षस्याल्पं भागं 'भक्षयामि' । कीदृशस्य तव 'इष्टयजुषः' इष्टं प्रयुक्तं यजुर्यस्मिन् स तथोक्तः तस्य, यजुर्मन्त्रेण हि सोमो गृह्यते तस्य, 'स्तुतस्तोमस्य' प्रयुक्तस्तोत्रस्य शस्तोक्थस्य उच्चरितशस्त्रस्य 'तिरोह्नयस्य' रात्र्या तिरोहितो ऽहन्यभिषुतस्य पूर्वद्युरभिषुतस्येत्यर्थः, उपहूतस्य सभक्षैरन्यैर्ऋत्विग्भिरनुज्ञातस्य । कीदृशो भक्षः 'अश्वसनिः'

अश्वानां सनिर्दाता 'गोसनि'र्गवां दाता वा। कीदृशोऽहं 'उपहूतो'ऽन्यैरनुज्ञातः॥ ४॥

सूत्रम्–'तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयुर्ऋतस्य त्वेतीति'। पाठस्तु–

**ऋतस्य त्वा देव स्तोमपदे विष्णोर्द्धामनि विमुञ्चाम्येतत्त्वं देव स्तोमानवकरमगन्नशीमहि वयं प्रतिष्ठाम्॥५॥**

हे स्तोम त्रिवृदादिनामक! 'त्वा' त्वां 'ऋतस्य' यज्ञस्य 'पदे' स्थाने-'विष्णो' र्देवस्य 'धामनि' तेजसि 'विमुञ्चामि' विसृजामि। हे स्तोमदेव! त्वं 'अनवकरं' अवकर उपहतिः तद्रहितमेतत् स्थानं 'अगन्' प्राप्तोसि गमेर्लुङि मन्त्रे घसेति सेर्लुक्, हल्ङ्याभ्य इति सिलोपः। मोनोधातोरिति नत्वम्। वयं च 'प्रतिष्ठां' नैश्चित्यभावं स्थितिं 'अशीमहि' व्याप्नुयामः। एतस्य मन्त्रस्य जप एव स्तोमविमोकः॥ ५॥

द्राह्यायणः–'वषट् कृते हारियोजनस्य यथेतपरया द्वारा निष्क्रमन्तो जपेयुः सोमेहीति'।

**सोमेहानुमेहि सोम सह सदस इन्द्रियेण॥ ६॥**

हे सोम! त्वमिह 'सदसो' देशात् हे सोम त्वम् 'इन्द्रियेण' बलेन सह'अनुमेहि' मामनुगच्छ॥ ६॥

सूत्रम्–'सुभूरसीत्यादित्यमुपतिष्ठेरन्निति, अस्तमितश्चेद्गार्हपत्यं चन्द्रमसं नक्षत्राणि वेति'।

**सुभूरसि श्रेष्ठो रश्मिर्देवानाꣳ सꣳसद्देवानां यातुर्यया तन्वा ब्रह्म जिन्वसि तया मा जिन्व तया मा जनय प्रकाशं मा कुरु॥ ७॥**

हे आदित्य! त्वं सुष्टु भावयिता वृष्ट्यादिद्वारेण सर्वजगत उत्पादयितासि 'श्रेष्ठः' सर्वेभ्यो देवेभ्यः प्रशस्यतमः 'रश्मिः' बहुरश्मिकानां देवानां 'संसत्' संसदनस्थानम्, तथा 'देवानां यातुः' यातयिता प्रवर्त्तयिता ईदृशः त्वं 'यया' अनुगृहीतया 'तन्वा' 'ब्रह्म' ब्राह्मणजातिं 'जिन्वसि' प्रीणयसि 'मा' माम् 'तया' तन्वा 'जिन्व' प्रीणय, जिन्वि प्रीणनार्थः। तथा मां 'जनय' प्रादुर्भावय 'प्रकाशं' प्रकाशवन्तं 'मा' मां 'कुरु' कुशलोसावौदुगात्रेकर्म्मणीत्येवं प्रसिद्धं कुरु॥ ७॥

सूत्रम्–'आग्नीध्रीये द्वे आहुती जुहुयुरपां पुष्पमिति पूर्वाꣳस्वाहाकारेणोत्तरा'मिति।

**अपां पुष्पमस्योषधीनाऽ रस इन्द्रस्य प्रियतमऽ हविः स्वाहा ॥ ८ ॥**

हे सोम ! त्वं 'अपां पुष्पं' सारभूतोसि प्रशस्तरसोपेतत्वात् । 'ओषधीनां' रसः सारश्चासि 'सोमो वा ओषधीनाऽ राजेति' श्रुतेः, तथा 'इन्द्रस्य प्रियतम'मतिशयेन प्रियं हविश्चासि तस्मै तुभ्यं स्वाहा इदमाज्यं हविस्त्यजामि ॥ ८ ॥

'उन्नेतर्य्युपहवमिष्ट्वा हारियोजनस्य त इति व्रिरुपघ्राय पश्चादाहवनीयस्यान्तः परिधिं निवपेयुरिति' उन्नेत उद्गयस्वेत्यनुज्ञाप्य मन्त्रेण धानाः त्रिरुपघ्राय पश्चादौत्तरवेदिकस्याग्नेरन्तं परिधि धानाः निवपेयुः ।

**हारियोजनस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य योऽश्वसानिर्गोसनिर्भक्षस्तस्योपहूत उपहूतस्य भक्षयामि ॥ ९ ॥**

हे 'देव' द्योतमान सोम ! अवश्रयाणां धनानामेव सोमसम्बन्धात् सोमेत्यामन्त्रणम् , 'हारियोजनस्य' हरी इन्द्रस्य बाहौ येन सोमेन रथे युज्यते स हार्योजनस्तत्सम्बन्धी हारियोजनः तस्य धानाख्यद्रव्यस्य 'ते' तव एकदेशं भक्षयामीति सम्बन्धः । अन्यत् पूर्ववद्व्याख्येयम् ॥ ९ ॥

सूत्रम्–'अप उपस्पृश्याष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देवकृतस्येत्येतत्प्रभृतिभिरिकारान्तै'रिति । अवयजनसीत्येवमन्तैः न तत्र स्वाहाकार इत्यर्थः ।

**देवकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमस्यस्मत्कृतस्यैनसोऽवयजनमसि यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि यद्विद्वाऽश्चाविद्वाऽसश्चैनश्चकृम तस्यावयजनमस्येनस एनसाऽवयजनमसि ॥ १० ॥**

हे अग्नौ प्रक्षिप्यमाणशकल ! त्वं 'देवकृतस्य' देवैः कृतस्य 'एनसः' पापस्य कृतापराधेष्वस्मासु देवैः यत् कृतं पापं तस्य 'अवयजनं' अपगमनसाधनमासि । एवमुत्तरत्रापि योज्यम् । 'अस्मत्कृतस्य' अस्माभिरेव कृतस्य । यद्दिवा चेत्याद्यास्त्रयो मन्त्रा स्पष्टार्थाः । एनस एनस इति वी·

प्सया सर्वोपराधो निर्दिश्यते सर्वस्याप्येनसो विनाशकमिति ॥ १० ॥

द्राह्यायणः-'अप्सुषो मानाम चमसाश्चात्वालदेशाद्भिः पूर्णास्तेषु हरितानि तृणानि प्रास्तानि भवन्ति ते स्वं चमसं पर्य्युपविश्याप्सु धौतेत्यवमृश्य जपेयुरिति'। अप्सु षोमसंज्ञकेषु जलपूर्णेषु चमसेषु उद्गातृणा यत् चमसोऽस्ति तस्य परितः उपविष्टास्तिस्र उद्गातारो मन्त्रेण चमसं स्पृष्ट्वा तम्मन्त्रञ्जपेयुः। पाठस्तु-

**अप्सु धौतस्य ते देव सोम नृभिः सुतस्य ॥ ११ ॥**

हे सोमदेव! 'नृभिः' ऋत्विग्भिः 'सुतस्य' अभिषुतस्य अप्सु चमसेषूदकेषु 'धौतस्य' शोधितस्य 'ते' तव भक्षं करोमीत्युत्तरत्र सम्बन्धः। यद्वा स्पर्शङ्करोमीत्यत्रैवाध्याहारः ॥ ११ ॥

द्राह्यायणः-'मधुमन्तमिति पार्णानुपजिघ्रेरन्निति, स्पष्टोर्थः ॥ पाठस्तु-

**मधुमन्तं भक्षं करोमि ॥ १२ ॥**

'मधुमन्तं' रसवन्तमुक्तस्य सोमस्य रसं 'भक्षं' भक्षितं करोमि ॥१२॥

द्राह्यायणः-'शमद्भ्य इत्युदञ्चं चमसन्निनयेयुरिति' परासिञ्चेयुरित्यर्थः। पाठस्तु—

**शमद्भ्य ओषधीभ्यः ॥ १३ ॥**

'अद्भ्य औषधीभ्यश्च' 'शं' शान्तिरस्तु ॥ १३ ॥

द्राह्यायणः-'कामेत्यध्यात्ममावर्त्तयेयुरिति' स्वात्माऽभिमुख्येन चमसानावर्त्तयेत्। पाठस्तु—

**कामकामं म आवर्त्तय ॥ १४ ॥**

हे कामसंज्ञक देव! 'मे' मदीयं 'कामं' काम्यं जलजातमावर्त्तय ॥१४॥

द्राह्यायणः-'ऊर्गित्युरः सुपाणीन्निदधीरन्निति'। पाठस्तु—

**ऊर्गस्यूर्जम्मयि धेहि ॥ १५ ॥**

हे सोमपीथ! त्वम् 'ऊर्क्' बलकरमन्नमसि अत 'ऊर्ज्जं' बलकरमन्नं 'मयि धेहि' स्थापय ॥ १५ ॥

द्राह्यायणः-'प्राण सोमेति मुख्यान् प्राणानभिमृशेरन्' इति। पाठस्तु—

**प्राणसोमपीथे मे जागृहि ॥ १६ ॥**

हे प्राण! 'मे' मम सोमपानार्थे 'जागृहि' प्रबुध्यस्व ॥ १६ ॥

द्राह्यायणः-'आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुरसमुपहूय दधिक्राव्ण इति' अत्र यद्यप्यस्मिन् मन्त्रे दधिक्राव्णेति अश्वरूपोऽग्निविशेष

एव देवतात्वेनाभिधीयते, तथापि दधिशब्दयोगात्सामान्येन दधिभक्षणे विनियोग इति द्रष्टव्यम्। पाठस्तु—

दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत्प्र न आयूꣳषि तारिषत्॥ १७॥

दधि दधद्धारयन् क्रामतीति दधिक्रावा क्रमेर्वनिपि विड्वनोरनुनासिकःस्यादिति मकारस्याकारः, तस्य दधिक्राव्ण एतत्संज्ञकस्याश्वरूपस्य देवस्य 'अकारिषं' परिरक्षणं कृतवानस्मि। कीदृशस्य 'जिष्णो' जयशीलस्य 'वाजिनो' वेगवतो वाजिनवतो वा 'अश्वस्य' अश्नोतेरश्वः क्षिप्रं सर्व्वं व्याप्नुवतः, स च दधिक्रावा देवः 'सुरभि' सुपांसुलुगिति शेर्लुक् सुरभीणि सुगन्धीनि 'नो'ऽस्माकं 'मुखा' मुखानि 'करत्' करोतु नोऽस्माकमायूंषि च प्रतारिषत्।

अथ क्रतुसङ्ग्रहः—

तृतीयसवनारम्भमादित्यग्रहमाचरेत्।
आर्भवेण स्तुवीताथ पश्वङ्गः प्रचरत्ययम्॥
सावित्रवैश्वदेवाख्यौ ग्रहौ सौम्यचरुस्तथा।
पात्नीवतग्रहादूर्ध्वं यज्ञा यज्ञाय संस्तवः॥
आग्निमारुतशस्त्रं स्याद्गृह्णीयाद्धारि योजनम्।
समाप्ते सवने पश्चात् कुर्य्यादवभृथं ततः॥
कुर्य्यादुदयनीयेष्टिमनुबन्ध्यां यजेत गाम्।
देविका निर्वपेद्देवसुवासापि यजूꣳष्यथ॥
उपोष्य वेदिमाग्नेयमिष्ट्वाग्निष्टोमसंस्थितिः॥ १७॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य षष्ठः खण्डः॥

---

## अथ सप्तमः खण्डः।

अथ दक्षिणानां प्रतिग्रहाय तदङ्गभूता मन्त्रास्तूच्यन्ते, सर्व्वेषु प्रतिग्रहमन्त्रेषु 'देवस्य त्वा सवितुः प्रसव इत्यारभ्य' 'वरुणस्त्वानयतु देवि दक्षिण' इत्यन्तमुक्त्वा वरुणायाश्वं रुद्राय गामिति तत्तत्प्रतिग्राह्यद्रव्यानुसारेणातिदिश्य 'तेनामृतत्वमशीय तैरमृतत्वमशीयेति' यथार्थमुक्त्वा 'वयोदात्र' इत्यादि 'मह्यं प्रतिग्रहीत्रे' इत्यन्तं ततः 'क इदं कस्मा अदादि कामैतत्ते' इत्यन्तं जपेत्। एतत्सर्वमुत्तरत्र वक्ष्यते।

द्राह्यायणः-'अश्वरथं चेद्दद्यात् पूर्व्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाश्वमुखानि सम्मृज्य द्वाभ्यां द्वाभ्यामश्वनामभ्यामेकैकस्याश्वोसीत्येतत्प्रभृतिभिरुदक्सꣳस्थमिति'। पुरस्ताज्जपो देवस्यत्वेत्यादिस्तं जपित्वा प्रतिग्रहीता रथसम्बन्धिनश्चतुरोऽश्वान् चतुर्भिर्नामयुग्मैर्दक्षिणमश्वमारभ्य उदगपवर्गं मुखेषु सम्मृज्यात्। पाठस्तु--

**अश्वोस्यत्योसि मयोसि हयोसि वाज्यसि सप्तिरर्व्वागसि वृषासि ॥ १ ॥**

एतान्यष्टावश्वनामानि तेषान्निर्वचनं प्रदर्श्यते-अश्नोतेर्व्याप्तिकर्म्मणोश्वः हे अश्व त्वं शीघ्रं व्यापनशीलोसि, 'अत्यः' सततगाम्यसि, अत सातत्यगमन इति धातुः, मयतिः शब्दकर्म्मा हेषाशब्दकार्य्यसि, हयो गन्तासि हिगताविति धातुः, 'वाजी' वेगवान् तादृशस्त्वमसि, 'सप्तिः' सर्पणशीलः 'अर्वाग्' गमनशीलस्तादृशोसि,ऋगताविति धातुः,अन्येभ्योऽपि दृश्यन्त इति वनिप्,-'वृषा' वर्षणकारी सेचनसमर्थोसि ॥ २ ॥

अत्र सूत्रम्-'आदित्यानामिति रथशिर आलभ्य जपेदिति आलम्भ उपस्पर्शः। पाठस्तु—

**आदित्यानां पत्मान्विहि नमस्तेस्तु मा मा हिꣳसीः ॥२॥**

पत्वान्विहीति शाखान्तरे पाठः। हेरथ 'आदित्यानां'द्वादशसंख्यानां प्रतिमासं दिवि सञ्चरतामरुणसूर्यादीनां यत् 'पत्म' पदं सङ्क्रमनमस्ति तत् 'अन्विहि' अनुगच्छ अप्रतिहतगतिर्भवेत्यर्थः, स्पष्टमन्यत्॥२॥

द्राह्यायणः-'यद्रथ्याꣳस्याद्वायोरिति चर्म्मण्यं प्रतिगृह्णीयान्नक्षत्राणामित्यास्थिमयꣳसूर्य्यस्येत्ययो लोहे हिरण्यञ्चेति' तत्र च यद्रथ्यं रथं चर्म्मलोहहिरण्यादिनिर्मितं स्थानं तत्र वायोरिति चर्मविकारं प्रतिगृह्णीयादस्थिमयं गजदन्तादिनिर्मितम्, अयो लोहे हिरण्यञ्चेति आयसं ताम्रं सौवर्णञ्चेत्यर्थः। पाठस्तु—

**वायोष्ट्वा तेजसा प्रतिगृह्णामि नक्षत्राणां त्वां रूपेण प्रतिगृह्णामि सूर्य्यस्य त्वा वर्चसा प्रतिगृह्णामि ॥३॥**

चर्मगतदौर्गन्ध्यापनयनक्षमं वायोर्य्यदसाधारणं तेजः तेन चर्मण्यं त्वां प्रतिगृह्णामि। अस्थिमयस्य धवलत्वेन नक्षत्राणां रूपेणेत्युक्तमयोमयादीनां तैजसत्वात् सूर्य्यस्य वर्च्चसेत्युक्तम्। स्पष्टमन्यत् ॥ ३ ॥

द्राह्यायणः-'दक्षिणेन रथं गत्वा रथन्तरमसीति' दक्षिणञ्चक्रमाल-

भेत वामदेव्यमसीत्यधिष्ठानं बृहदसीत्युत्तरञ्चक्रमित्यधिष्ठानं रथोपवेशनस्थानम् ।

रथन्तरमसि वामदेव्यमसि बृहदसि ॥ ४ ॥

हे दक्षिणचक्र ! त्वं 'रथन्तरमसि' रथन्तरसामवत् स्वकार्यकुशलमिति । हे अधिष्ठान ! त्वं 'वामदेव्यमसि' यथा वामदेव्यसाम शान्तिकरत्वेन रक्षकं तथा त्वमप्युपरिष्ठानामधःपतनाद्रक्षकमसि, बृहदसीति रथन्तरवद्योज्यम् ॥ ४ ॥

अत्र सूत्रम्-'अङ्कान्यङ्कू इति रथचक्रे एव सम्मृज्यादिति' ये पूर्वेवाताग्रचक्रे त एव न त्वधिष्ठानम् । पाठस्तु-

अङ्कान्यङ्कू अभितो रथं यौ ध्वान्तं वाताग्रमभिसञ्चरतौ दूरे हेतिरिन्द्रियवान् पतत्री ते नोग्नयः पप्रयः पारयन्तु ॥ ५ ॥

अङ्कान्यङ्कौ गन्तारौ, अङ्को चातरिति यास्कः । 'न्यूङ्कू' नितरामञ्चन्तौ गच्छन्तौ, न्युदञ्चेरिति निपूर्वोदञ्चतेः कुप्रत्ययः न्यङ्क्वादीनाञ्चेति कुत्वम् । यौ चक्ररूपौ पदार्थयुक्तौ रथमभितः रथस्य पार्श्वयोर्वर्त्तते 'ध्वान्त' मन्धकारं 'वाताग्रं' वायोः पुरोभागं चाभितः संचरन्तौ प्रकाशमपेक्ष्यान्धकारेपि गच्छतः । शीघ्रगामिनौ वा वायोरपि शीघ्रं गच्छत इत्यर्थः । यश्च 'दूरे हेतिः' हननसाधनमायुधं हेतिस्तद्दूरे विप्रकृष्टप्रदेशे यस्य रथमध्यभागस्य स तथोक्तः परैः प्रयुक्तान्यायुधानि दूरत एव प्रतिहन्यन्त इत्यर्थः । 'इन्द्रियवान्' वीर्यवान् 'पतत्री' पतत्रे पक्षती तद्वान् ईदृश उपदेशनार्थो यो रथमध्यभागः 'अग्नयो' ऽग्रं नयन्तः । यद्वाऽग्निवद्वीर्योपेतास्ते 'पप्रयः' पालयितारः पूरयितारो वा सन्तो 'नो' ऽस्मान् 'पारयन्तु' गन्तव्यं प्रापयन्तु प्रापूरण इत्यस्मात् पृ पालनपूरणयोरित्यस्माद्वा आदृगमहनजन किप्रत्यये पप्रीति रूपम् ॥ ५ ॥

अत्र सूत्रम्-'वैश्वानर इति दक्षिणेन पादेनारोहेदिति' रथमिति शेषः । पाठस्तु—

वैश्वानरः प्रतथा नाकमारुह दिवः पृष्ठे मन्दमानः सुमन्मभिः सपूर्व्ववज्जनयज्जन्तवे धनाः समानमयमन् पर्य्येति जागृविः ॥ ६ ॥

'रथप्रतिग्रहीता आत्मानं वैश्वानरात्मना ध्यायन्नारोहेत् दक्षिणां प्रतिग्रहीष्यन् न सप्तदशाक्रत्वो व्यावृत्य प्रतिगृह्णाया' दिति श्रुत्यन्तरात्

व्यावृत्त्यात्मानं देवतारूपेणात्मनि ध्यात्वेति हि—तस्य व्याख्यानम्, 'वैश्वानरः' विश्वेषान्नराणां हितः एतदात्मक उद्गाता 'प्रत्नथा' प्रत्न इव पुराण इवातीतेषु युगेष्विवास्मिन्नपि युगे 'नाकं' दुःखराहित्येन सुखकरं रथं 'आरुह' आरोहेति छन्दसि लुङ् लङ्-लिट इति वर्त्तमाने लुङ् इरुदृहेभ्य इति च्लेः परटादेशः। 'दिवो' द्योतमानस्य 'पृष्ठे' उपरिभागे 'सुमन्मभिः' शोभनस्तुतिकैः स्तोतृभि'र्मन्दमानः' स्तूयमानः मदि स्तुतौ कर्मणि यकि प्राप्ते व्यत्ययेन शप्। किञ्च स वैश्वानरात्मोद्गाता पूर्ववत्पूर्व्वेषां यजमानानामिव तत्र तस्यैवेति षष्ठ्यर्थे वतिः। 'जन्तवे' जनाय अस्मा अपि यजमानाय 'समानं' सदृशं यावदन्येभ्यः पूर्व्वं प्रादात् तत्परिमाणं धनं स्तोत्रेण जनयन्नुत्पादयन् अनित्यमागमशासनमिति तुमभावः 'अय्मन्' अय्मनि गमनसाधने रथे उपविष्टो 'जागृविः' जागरूकः सन् 'पर्य्येति' तेन रथेन परितो गच्छति ॥ ६ ॥

अत्र सूत्रम्--'आरुह्य जपेत् गिदैषत' इति। पाठस्तु—

**गिदैष ते रथ एष वामश्विना रथोरिष्टो विश्वभेषजः ॥ ७ ॥**

गिदो नाम रथपालकः कश्चिद्देवः, हे गिद ! 'ते' त्वदीयस्तस्मादेनं पालयेत्यभिप्रायः। हे अश्विना अश्विनौ! एष रथः 'वां' युवयोः सम्बन्धी अतोयं अरिष्टो अहिंसितोऽभग्नः 'विश्वभेषजो' विश्वैः सर्व्वैर्भेषजैर्युक्तश्च भवतु ॥ ७ ॥

अत्र सूत्रम्—'कृशेति सव्यानभीशूनायच्छेदिति'। अभीशवोऽश्वबन्धनरज्जवः।

**कृशानो शव्यानायच्छ ॥ ८ ॥**

कृशानुर्नाम सव्यपार्श्वस्थानां रश्मीनां धारयिता, हे कृशानो ! 'सव्यान्' वामभागस्थितान् अश्वबन्धकान् पाशान् 'आयच्छ' आकर्षेण नियच्छ ॥ ८ ॥

अत्र सूत्रम्—'दासेति दक्षिणानवगृह्णीयादिति'।

**दासानो दक्षिणानवगृहाण ॥ ९ ॥**

दासनुर्देवविशेषो दक्षिणभागस्थितानां रश्मीनान्नियमिता पूर्ववद्योजना ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य सप्तमः खण्डः।

## अथ अष्टमः खण्डः ।

अत्र सूत्रम्—'सर्वासां देवस्यत्वेति पुरस्ताज्जप इति' सर्वासां दक्षिणानां प्रतिग्रहे प्रथमतो देवस्यत्वेति मन्त्रं जपेत् । पाठस्तु—

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ १ ॥**

'सवितुः' प्रेरकस्य देवस्य 'प्रसवे' प्रेरणेऽनुज्ञायां सत्यां 'त्वा' त्वां दक्षिणां प्रतिगृह्णामि । तत्र बाहू च हस्तौ च साधनमंसमणिबन्धनयोर्मध्यवर्त्ती दीर्घो भागो बाहुः, मणिबन्धस्याग्रेऽवस्थितः साङ्गुलिभागो हस्तः, अश्विनो बाह्वोरभिमानिदेवो हस्तयोस्तु पूषा, ततस्तयोस्तत्सम्बन्धोऽभिधीयते ॥ १ ॥

अत्र सूत्रम्–'वरुणस्त्वेति यथादेवतं प्रतिगृह्णीयादिति' यस्य द्रव्यस्य या देवता प्रतिग्रहमन्त्रे पठिता तामादिश्य तद्द्रव्यं प्रतिगृह्णीयाद्वरुणायाश्वमग्नये हिरण्यं वायवे मृगमित्यादि । पाठस्तु—

**वरुणस्त्वा नयतु देवि दक्षिणे वरुणायाश्वं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे ॥२॥**

हे दक्षिणे एतत्संज्ञे देवि ! 'त्वा' त्वां 'वरुणो' देवो गृहं 'नयतु' वरुणप्रीत्यर्थमश्वमहं प्रतिगृह्णामि तेनानुगृहीतेनाश्वेनामृतत्वं देवत्वमहं 'अशीय' प्राप्तवान् 'दात्रे' यजमानाय 'वयो'न्नं भूयान्मह्यं प्रतिगृहीत्रे 'मयः' सुखं भूयात्, 'यद्वै शिवं तन्मय' इति श्रुत्यन्तरम् ॥ २ ॥

अश्वप्रतिग्रहे मन्त्र उक्तः गोप्रतिग्रहे मन्त्रमाह--

**वरुणस्त्वा नयतु देवि दक्षिणे रुद्राय गां तयामृतत्वमशीय वयो दात्रे भूयात् मयो मह्यं प्रतिगृहीत्रे ॥ ३ ॥**

रुद्रप्रीत्यर्थं 'गां'प्रतिगृह्णामि तया रुद्रानुगृहीतया गवा रुद्रस्य पशुपतित्वात् गोस्तत्सम्बन्धोऽन्यत्पूर्ववत् ॥ ३ ॥

अथाजप्रतिग्रहे मन्त्रमाह—

**वरुणस्त्वा नयतु देवि दक्षिणेऽग्नयेऽजम् ॥ ४ ॥**

अस्मिन्मन्त्रे तेनामृतत्वमित्यादेरुत्तरभागस्यानुषङ्गो द्रष्टव्यः । प्रजापतिमुखादग्नेरजस्य सहोत्पत्तेस्तत्सम्बन्धः । अन्यत्पूर्ववत् ॥ ४ ॥

अथ हिरण्यस्य प्रतिग्रहे मन्त्रमाह--

**अग्नये हिरण्यम् ॥ ५ ॥**

अस्मिन्मन्त्रे वरुणस्त्वेत्यादेः पूर्वभागस्य तेनेत्यादेः पूर्वभागस्यानुषङ्गः कार्य्यः । हिरण्यस्याग्निरेतोरूपत्वात्सम्बन्धः ॥ ५ ॥

अजायाः प्रतिग्रहे मन्त्रमाह—

**अग्नीषोमाभ्यामजान्मयामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिगृहीत्रे ॥ ६ ॥**

अस्मिन्मन्त्रे वरुणस्त्वेत्यादेः पूर्वभागस्यैवानुषङ्गः,'आग्नेयी वा एषा यदजेति' श्रुत्यन्तरादजाया अग्नेः सम्बन्धः, लताभूतस्य सोमस्यौषधिषु सारभूतत्वेनाजयोपजीव्यत्वात्तत्सम्बन्धः, तथाचोक्तं-'श्यामलास्तास्तु निष्पन्ना सोमाख्यछागभोजन'मिति ॥ ६ ॥

अन्नस्येति मन्त्रो लिङ्गादन्नप्रतिग्रहे विनियोज्यः, सूत्रकारस्तु अवेः प्रतिग्रहेऽयं मन्त्रोऽधिक इति दर्शयति, अन्नस्येति प्राग् वारुणादवेः प्रतिग्रहे वरुणस्त्वेत्यतः पूर्वं वायं मन्त्रो जप्यः । तत्पाठस्तु—

**अन्नस्यान्नपतिः प्रादादनमीवस्य शुष्मिणो नमो विश्वजनस्य क्षामाय भुञ्जति मा मा हिꣳसीः ॥ ७ ॥**

अन्नस्येति कर्मणि शेषविवक्षायां षष्ठी, अन्नस्य पतिरन्नानां पालयिता 'अन्नस्या'न्नं मह्यं 'प्रादात्' दत्तवान् अन्नं विशेष्यते'ऽनमीवस्या'मीवा रोगः तद्रहितस्यारोग्यकरस्य 'शुष्मिणो' बलवतो बलहेतुभूतस्येमेपि कर्म्मणि षष्ठ्यौ,तस्मा अन्नपतये अग्नये नमोऽस्तु । कथम्भूताय 'विश्वजनस्य' सर्वप्राणिजातस्य 'क्षामाय' क्षेमकारिणे, क्षैजैक्षै क्षये, तस्मात् क्तोधिकरणे चेति कर्तरि निष्ठा क्षायो म इति तकारस्य मकारः, ईदृशाग्नये इत्यर्थः । हे भुञ्जति उपभोग्यत्वेन पालयित्रि ! तदुपभोक्तारं 'मां' मा 'हिꣳसीः' ॥ ७ ॥

अवेः पश्वन्तरोपभोगसाधनत्वेनान्नत्वेन संस्तावकन्तत्प्रतिग्राहमन्त्रैकदेशमुक्त्वा तच्छेशमन्त्रमाह--

**वरुणस्त्वा नयतु देवि दक्षिणे त्वष्ट्रेऽविं तया ऽमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ ८ ॥**

'त्वष्टा हि रूपाणां कर्त्ता त्वष्टा वै पशूनां मिथुनानां रूपकृदिति' श्रुत्यन्तरात नानारूपा अवयो भवन्तीति त्वष्टुरवेश्च सम्बन्धः, शिष्टं पूर्ववत् ॥ ८ ॥

अत्र सूत्रम्--'ग्रास्त्वा कृन्तन्निति वसनस्येति' वस्त्रप्रतिग्रहे ग्रास्त्वा कृन्तन्निति प्राग्वारुणात्पुरस्ताज्जपाद्वा जपेद् यदि तत वस्त्रमतन्तुनि-

मितं वल्कलादिजं स्यात्तत्रायं मन्त्रो न प्रयोज्यः । तत्र सूत्रम्—'तदुदस्येदताम्तव' इति । पाठस्तु—

ग्रास्त्वाऽकृन्तन्नपसोऽतन्वत वयित्र्योऽवयन् ॥ ९ ॥

गच्छन्ति पुमांस एनामिति ग्नाः स्त्रियः, हे वस्त्र ! 'त्वा' त्वां 'अकृन्तन्' निष्पादनानन्तरं कर्त्तनेन छेदनेन सम्पादितवन्तः 'अपसो'ऽपः कर्म तद्वन्तो वा तन्तुग्रथनकुशलाः पुरुषा 'अतन्वत' तन्तवः पटस्य दीर्घाणि सूत्राणि तान्यकुर्वन्नित्यर्थः । ता 'वयित्र्यः' वेञ् तन्तुसन्ताने वयनकर्त्र्यो योषितो 'अवयन्' तिरश्चीनानि सूत्राणि समयोजयन् ॥ ९ ॥

अथ वस्त्रप्रतिग्रहमन्त्रविशेषः—

वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १० ॥

स्पष्टोऽर्थः ॥ १० ॥

आसनशय्यादेरचेतनवस्तुनः प्रतिग्रहे मन्त्रमाह—

वरुणस्त्वा नयतु देवि दक्षिणे उत्तानायाङ्गिरसायाप्राणत् तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ ११ ॥

'इयं वा उत्तान आङ्गिरस' इति श्रुत्यन्तरात्, उत्तान आङ्गिरस इति शब्दाभ्यामुच्यते, ऊर्ध्वमुखत्वादुत्तानोऽङ्गिरसस्तपसा लब्धत्वादाङ्गिरसो लोकाभिप्रायेण पुँल्लिङ्गता, अप्राणतो भूमेश्च निष्क्रयत्वसाम्यात्सम्बन्धोऽन्यत्पूर्ववत् ॥ ११ ॥

उष्ट्रप्रतिग्रहे मन्त्रमाह—

वरुणस्त्वा नयतु देवि दक्षिणे पूषण उष्ट्रम् ॥ १२ ॥

तेनेत्यादेर्वाक्यशेषस्यानुषङ्गः ॥ १२ ॥

मृगप्रतिग्रहमन्त्रमाह—

वायवे मृगं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १३ ॥

वरुणस्त्वेति पूर्वभागस्यानुषङ्गः, मृगस्य शीघ्रगामित्वात् तद्वाहनत्वाद्वायुसम्बन्धः, उष्ट्रादीन्यपि सर्वदक्षिणे देयानि ॥ १३ ॥

पुरुषहस्तिवराहव्रीहीणां प्रतिग्रहे चतुरो मन्त्रानाह—

वरुणस्त्वा नयतु देवि दक्षिणे प्रजापतये पुरुषं प्र-

जापतये हस्तिनं प्रजापतये वराहं प्रजापतये व्रीहियवाᳪंस्तैरमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १४ ॥

अत्र पुरुषमन्त्रे तेनेत्याद्युत्तरभागानुषङ्गः, हस्तिमन्त्रे पूर्वोत्तरयोर्द्वयोरप्यनुषङ्गः, तथा वराहमन्त्रे, व्रीहियवमन्त्रे तु पूर्वभागस्यैवानुषङ्गः।यत्र पुनर्व्रीहियवयोरेक एव दीयते तत्र मन्त्रो विभज्य प्रयोक्तव्यः–प्रजापतये व्रीहीन् । प्रजापतये यवान् इति । प्रजापतिना सृष्टत्वात्पुरुषादीनां तत्सम्बन्धः ॥ १४ ॥

तिलमाषप्रतिग्रहे मन्त्रमाह--

वरुणस्त्वा नयतु देवि दक्षिणे क्षेत्रपतये तिलमाषास्तैरमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १५ ॥

तिलामाषादीनां क्षेत्रजन्यत्वात्तत्स्वामिना सम्बन्धः ॥ १५ ॥

अश्वगर्दभसङ्करजस्य प्रतिग्रहे मन्त्रमाह—

वरुणस्त्वा नयतु देवि दक्षिणे सवित्रेऽश्वतरं वाश्वतरीं वा तयाऽमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ १६ ॥

प्रेरकस्य सवितुः प्रेरणाद्विलक्षणमातापितृभ्यां विजातीयस्याश्वतरस्योत्पत्तिः ॥ १६ ॥

अत्र सूत्रम्–'तेन क इदमित्युपरिष्टाज्जप' इति, यस्मिन्मन्त्रे तेनामृतत्वमित्यादिप्रतिगृहीत्र इत्यन्त उत्तरभागो नाम्नातस्तस्मिन्मन्त्रे तं भागमनुषज्य जपेत् । पाठस्तु—

क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत्कामेन त्वा प्रतिगृह्णामि कामैतत्ते ॥ १७ ॥

कशब्दाभिधेयः प्रजापति'रिदं'दक्षिणाद्रव्यं'कस्मै'प्रजापतये 'अदात्' दत्तवान् प्रजापतिरेव सर्वात्मा दानप्रतिग्रहयोः कर्त्तेति भावः। एवमनेन मन्त्रेण स्मृते सति दातृप्रतिग्रहीत्रोः फलं पापराहित्यञ्च भवति । तथा 'कामः कामाय' दातृस्वर्गादिफलकामनया यजमानो दातृऋत्विजश्च धनकामनया प्रतिगृह्णन्ति, अत उभयत्र कामस्यैव प्रयोजकत्वं प्रति-

ग्रहीतृत्वं च कामस्यैवेत्येतल्लोके प्रसिद्धमिति कामो दाता कामः प्रतिग्रहीता इत्युच्यते, नहि निष्कामे परिव्राजकादौ तदस्ति । स च कामः 'समुद्रमाविशत्'मां परित्यज्य यत्र क्वापि गच्छतु इत्यर्थः । कस्यावस्थितौ तेन कामेन हेतुना त्वां प्रतिगृह्णामि । ततो हे काम ! एतन्नूनं 'ते' तवैव तिष्ठतु नात्मानं मे स्पृशत्वित्यर्थः । सोऽयं मन्त्रोऽध्वर्य्युशाखायामाम्नातस्तदीयब्राह्मणान्नीत्वा, व्याख्यातश्च—क इदं कस्मादित्याह प्रजापतेर्वै कः स प्रजापतये ददाति कामः कामायेत्याह कामेन हि ददाति कामेन प्रतिगृह्णाति कामो दाता कामः । प्रतिग्रहीतेत्याह कामो हि दाता कामः प्रतिग्रहीता कामः समुद्रमाविशेत्याह समुद्र इव कामयते नहि कामस्यान्तोऽस्ति नहि समुद्रस्य, कामेन त्वा प्रतिगृह्णामीत्याह येन कामः प्रतिगृह्णाति स एवैनममुष्मिँल्लोके दक्षिणामिच्छति न प्रतिग्रहीतुरिच्छति ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य अष्टमः खण्डः ।



## अथ नवमः खण्डः ।

अत्र सूत्रम्—'रश्मिरसीत्येतावनुकौ स्तोमभागास्तैः पृथगनुपूर्व्वंऽस्तोत्राण्यनुमन्त्रयेत ब्रह्मन् स्तोष्यामः प्रशास्तेरित्युक्त' इति । रश्मिरसीत्येकोनुवाकस्तन्तुरसीत्यपरस्तयोरनुवाकयोराम्नाता ये मन्त्रास्तेषां स्तोमविभाग इति नामधेयम् । त्रिवृदादिस्तोमान् भजन्त्येते मन्त्रा इति तच्छब्दव्युत्पत्तिः । उद्गातारो ब्रह्माणं प्रत्येवमनुज्ञां प्रार्थयन्ते—ब्रह्मन् स्तोष्यामः प्रशास्तरिति । इदानीं बहिष्पवमानादीन्यतिरिक्तस्तोत्रपर्य्यन्तानि यानि त्रयस्त्रिंऽशः स्तोत्राणि सन्ति तानि तैः स्तोमभागैस्तावत्संख्यैः क्रमेण ब्रह्मा पृथगनुमन्त्रयेत् । आपस्तम्बोऽप्याह—'ब्रह्मन् स्तोष्याम इत्युच्यमाने देवसवितरेतत्ते प्राहेत्यनुद्रुत्य रश्मिरसि क्षयाय क्षयन् जिन्व स्तुतेति स्तौति, सर्व्वस्तोत्राणामेष कल्प उत्तरमुत्तरं स्तोमभागानां दधाति, द्वादशाग्निष्टोमे पञ्चदशोक्थे षोडशषोडशिनि सप्तदशवाजपेये एकोनत्रिंऽशदतिरात्रे त्रयस्त्रिंऽशदप्तोर्य्यामिन इति । तत्रायं प्रथमस्तोमभागमन्त्रः—

**रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ १ ॥**

तैत्तिरीयाणां पञ्चमकाण्डोक्तब्राह्मणे रश्मिरिति मन्त्राणामादित्या-दिसृष्टिहेतुत्वाभिधानादादित्यादिपरतया रश्म्यादिशब्दा व्याख्येयाः। तत्तु ब्राह्मणमुत्तरत्रोदाहरिष्यते। हे आदित्य! त्वं 'रश्मिरसि' रश्मि-युक्तोसि। देवा यस्मिन् क्षियन्ति निवसन्ति इति स्तोत्रसम्बन्धः क्षय-स्तस्मै क्षयाय तत्सङ्घाय तत्प्राप्त्यर्थं हे आदित्य त्वां स्मरामि इति शेषः। ततः 'क्षयं' देवसङ्घं'जिन्व' प्रीणय क्षयशब्दस्य देवविषयत्वं तै-त्तिरीयास्तृतीयकाण्डोक्तब्राह्मणे समामनन्ति—'रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवे क्षय इति। यद्वा बहिष्पवमानादिकं स्तोत्रमेव सम्बोध्य हे स्तोत्र त्वं रश्मिर्वम्बन्धकोसि यज्ञस्य तादृशं त्वां 'क्षयाय' यजमान-स्य निवासार्थं प्रयोजयामीति शेषः। क्षयन्निवासो यजमानस्य गृहं वा 'जिन्व'प्रीणय हे उद्गातारो यूयं 'सवितृप्रसूताः' सवित्राप्रेरकेणादित्यरूपे-णान्तर्यामिणा प्रेरिताः सन्तो 'बृहस्पतये' बृहत्परिवृढं ब्रह्म तस्य पत्यै स्तोत्रदेवतायै तत्प्रीत्यर्थं 'स्तुत' स्तुतिं कुरुत ॥ १ ॥

अथ द्वितीयस्तोमभागमन्त्रः—

**प्रेतिरसि धर्म्मणे त्वा धर्म्मं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ २ ॥**

हे धर्म्माभिमानिन् देव! त्वं 'प्रेतिरसि'प्रेतिर्गतिः सा च प्रकृष्टा शा-स्त्रार्थानुरूपत्वात्प्रकृष्टा गतिर्यस्येति विग्रहः,'धर्म्मणे' धर्म्माय तदनुष्ठातृ-मनुष्यार्थं 'मनुष्या वै धर्म' इति श्रुत्यन्तरे, तत्संतोषार्थं त्वां स्मरामि त्वमपि 'धर्म्मं' तदनुष्ठातृमनुष्यं 'जिन्व'प्रीणय। यद्वाऽत्रापि पूर्व्ववत् स्तो-त्रपरतयां योज्यमन्यत्पूर्व्ववत् ॥ २ ॥

अथ तृतीयः—

**अन्वितिरसि दिवे त्वा दिवं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ३ ॥**

हे स्तोत्र त्वं'अन्विति' अनुकूलनतियुक्तोसि तं त्वां 'दिवे' द्युलो-कार्थं प्रयोजयामि त्वं च दिवं द्युलोकं 'जिन्व' प्रीणय ॥ ३ ॥

अथ चतुर्थः—

**सन्धिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व सवितृप्रसू-ता बृहस्पतये स्तुत ॥ ४ ॥**

हे स्तोत्रविशेष! त्वं 'सन्धिरसि'उभयतः स्थिताभ्यां स्तोत्राभ्यां सन्धिःसन्धीयमानोसि तादृशं त्वाम्'अन्तरिक्षाय'अन्तरिक्षलोकार्थं प्रयो-जयामि त्वं चान्तरिक्षं प्रीणय ॥ ४ ॥

अथ पञ्चमः—

प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ५ ॥

हे स्तुतिविशेष ! त्वं 'प्रतिधिः' प्रतिमुखं धीयते प्रातस्सवनसमाप्त्यर्थमिति प्रतिधिस्तादृशोसि, अन्यत्पूर्ववद्योज्यम् ॥ ५ ॥

अथ षष्ठः—

विष्टम्भोसि वृष्ट्यै त्वा वृष्टिं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ६ ॥

हे माध्यन्दिनसवनपवमान त्वं ! 'विष्टम्भो' यज्ञस्य विशेषेण स्तम्भयिता धारकोसि तं त्वां 'वृष्ट्यै' यज्ञमूलभूतायै प्रयोजयामि त्वं च वृष्टिर्यथा भवति तथा तां प्रीणय ॥ ६ ॥

अथ सप्तमः—

प्राचोस्यह्ने त्वाहर्जिन्व सवितृप्रसूता बृहस्पतये स्तुत॥७॥

हे स्तोत्रविशेष ! त्वं 'प्राचः' ऽप्रकर्षेण रक्षकोसि त्वामह्नेऽहरर्थं प्रयोजयामि त्वञ्चाह'र्जिन्व'प्रीणय ॥ ७ ॥

अथाष्टमः—

अन्वासि रात्र्यै त्वा रात्रिञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ८ ॥

हे स्तोत्रविशेष ! त्व'मन्वा'ऽनुगन्तासि अनुपूर्वाद्वातेर्वा एतद्रूपं त्वां 'रात्र्यै' रात्र्यर्थं प्रयोजयामि त्वं च रात्रिं प्रीणय, इत्थमष्टभिः स्तोमभागैरादित्यानां सृज्यमाना प्रीतिः प्रतिपादिता ॥ ८ ॥

अतःपरमग्निष्टोमस्य चत्वारि स्तोत्राणि तदीयैश्चतुर्भिः स्तोमभागैः प्रजापतिना सृज्यमानान् वसून् रुद्रानादित्यान् प्रीणयति ।

अथ नवमः—

उशिगसि वसुभ्यस्त्वा वसून् जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ९ ॥

हे स्तोत्रविशेष ! त्वं 'उशिक्' कमनीयोसि त्वं 'वसुभ्यो' वसूनां प्रीत्यर्थं त्वां प्रयोजयामि त्वं च वसून् प्रीणय ॥ ९ ॥

अथ दशमः—

प्रकेतोसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ १० ॥

हे स्तोत्रविशेष ! त्वं 'प्रकेतः' प्रकृष्टं केतो ज्ञातासि, अन्यत्पूर्ववद्बो-ध्यम् ॥ १० ॥

अथैकादशः—

**सुदीतिरस्यादित्येभ्यस्त्वादित्याञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ११ ॥**

हे स्तुतिविशेष ! त्वं 'सुदीतिः' सुदीप्तिरसि त्वामादित्यानां प्रीत्यर्थं प्रयोजयामि त्वं चादित्यान् प्रीणय ॥ ११ ॥

अथ द्वादशः—

**ओजोसि पितृभ्यस्त्वा पितॄञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ १२ ॥**

हे स्तोत्र ! त्वं 'ओजः' सारभूतोसि सारो ह्यग्निष्टोमसाम त्वां पितृणां प्रीत्यर्थं प्रयोजयामि त्वञ्च पितॄन्प्रीणयेति ॥ १२ ॥

अथ ताण्ड्यमहाब्राह्मणे प्रथमाध्यायस्य नवमः खण्डः ।

## अथ दशमः खण्डः ।

अथ त्रयोदशः—

**तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ १ ॥**

हे स्तुतिविशेष ! त्वं 'तन्तुः' संतानहेतुरसि अतस्त्वां प्रजार्थं प्रयो-जयामि त्वं च प्रजा प्रीणय ॥ १ ॥

अथ चतुर्दशः—

**रेवदस्योषधिभ्यस्त्वौषधीर्जिन्व सवितृप्रसूता बृह-स्पतये स्तुत ॥ २ ॥**

हे स्तोत्र ! त्वं 'रेवत्' रयिमत् धनयुक्तं धनप्रदमासि अत ओषध्यर्थं त्वा प्रयोजयामि ॥ २ ॥

अथ पञ्चदशः—

**पृतनाषाड़सि पशुभ्यस्त्वा पशूञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ३ ॥**

हे स्तुतिविशेष! त्वं 'पृतनाषाट्' पृतनानां शात्रवीणां सेनानां सो-

द्गाभिभूतासि अतः पशुभ्यः शत्रुसम्बन्धिभ्यस्तल्लाभार्थं त्वां प्रयोजयामि त्वं च तान् पशून् मह्यं प्रदाय प्रीणय ॥ ३ ॥

अथ षोडशः--

अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ४ ॥

हे षोडशिस्तोत्र! त्वं 'अभिजित्' आभिजयहेतुरसि तया युक्तया अभिषवार्थं युक्ता ग्रावाणो येन स तथोक्तः तादृशश्चासि सर्व्वदा सोमबद्धासीत्यर्थः, अतस्त्वामिन्द्रायेन्द्रार्थं प्रयोजयामि त्वं चेन्द्रं प्रीणय ॥ ४ ॥

अथ सप्तदशः--

अधिपतिरसि प्राणाय त्वा प्राणञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ५ ॥

हे स्तोत्रविशेष ! त्वं 'अधिपतिः' रात्रिपर्य्यायगतानां स्तोत्राणां मुख्योसि। अतस्त्वां 'प्राणाय'मुख्यप्राणवृत्त्यर्थं प्रयोजयामि, गतमन्यत् ॥५॥

अथाष्टादशः—

धरुणोस्यपानाय त्वाऽपानञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ६ ॥

हे स्तुतिविशेष ! त्वं 'धरुणोसि'सर्व्वस्य धारकोसि 'अपानाय' प्राणवायोः शरीरे धारयिता अपानः,तदर्थं त्वां प्रयोजयामि त्वं च तादृशमपानं पीणय ॥ ६ ॥

अथैकोनविंशः--

सऽसर्पोसि चक्षुषे त्वा चक्षुर्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ७ ॥

हे स्तुतिविशेष ! त्वं 'संसर्पः'। सम्यक् सर्पणशील आदित्योसि। अतस्त्वां 'चक्षुषे' चक्षुरर्थे प्रयोजयामि आदित्यो हि त्वं चक्षु'र्जिन्व' प्रीणय ॥ ७ ॥

अथ विंशः--

वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥ ८ ॥

हे स्तोत्रविशेष ! त्वं 'वयोधाः' वयसोन्नस्य आयुषो वा धारयितासि त्वां 'श्रोत्राय' श्रवणेन्द्रियार्थं प्रयोजयामि। गतमन्यत् ॥ ८ ॥

अथैकविंशाद्याश्चत्वारो मन्त्राः—

त्रिवृदसि त्रिवृते त्वा सवृदसि सवृते त्वा प्रवृदसि प्रवृते त्वाऽनुवृदस्यनुवृते त्वा सवितृप्रसूता बृहस्पतये स्तुत ॥ ९ ॥

मध्यरात्रिपर्य्यायगतानां चतुर्णां स्तोत्राणामनुमन्त्रणमन्त्रा एते सवितृप्रसूता इत्यादि सर्वशेषः । हे स्तुतिविशेष ! त्वं त्रिभिः पञ्चकैर्निर्वृत्तत्वेन 'त्रिवृदसि'त्वां 'त्रिवृते' स्तोमाय प्रयोजयामि, 'सवृत्' अन्यैः सह वर्त्तत इति सवृत्, प्रवर्त्तते त्वकार्य्यं प्रति'प्रवृत्' मध्यमपर्य्यायगतेभ्यस्त्रिभ्यः स्तोत्रेभ्यो ऽनु पश्चात् वर्त्तते इत्यनुवृत् । शिष्टं स्पष्टार्थम् ॥९॥

अथोत्तमपर्यायस्य स्तोत्रचतुष्टयस्यानुमन्त्रणाश्चत्वारो मन्त्राः—

निरोहोसि निरोहाय त्वा संरोहोसि संरोहाय त्वा प्ररोहोसि प्ररोहाय त्वाऽनुरोहोऽस्यनुरोहाय त्वा सवितृप्रसूता बृहस्पतये स्तुत ॥ १० ॥

उत्तमपर्यायस्य यज्ञारोहणसामत्वात्तस्य स्तोत्राणि रोह इत्युच्यते । हे स्तुतिविशेष ! त्वं 'निरोहोसि' नितरां रोहहेतुरसि, अतो नितरां रोहार्थं त्वां प्रयोजयामि । एवमन्येष्वपि योजना कार्य्या । पदार्थस्तु संरोहः सम्यक् रोहणहेतुः, अनुरोहो ऽनु पश्चात् चरमभावी सन् रोहणहेतुरिति ॥ १० ॥

अथ सन्धिस्तोत्रस्य त्रिदेवत्यत्वात् त्रेधाऽनुमन्त्रणं कर्तव्यं तन्मन्त्रोऽयम्—

वसुकोऽसि वस्यष्टिरसि वेषश्रीरसि सवितृप्रसूता बृहस्पतये स्तुत ॥ ११ ॥

हे सन्धिस्तोत्र ! त्वं 'वसुको' वासयिता अग्निस्तादृशोसि । तथा 'वस्यष्टिः' वसनेन तमसां विवासनेनाश्नुते व्याप्नोति विश्वमिति वस्यष्टिः उषास्तादृशोसि । 'वेषश्रीः' वेषो रूपं तद्वन्तावश्विनौ तावेव वेषश्रीः वेषस्य श्रयितासि ॥ ११ ॥

आक्रमोसीत्याद्याः अप्तोर्यामस्य यज्ञस्यातिरिक्तस्तोत्राणाश्चतुर्णामनुमन्त्रणमन्त्राः । तेषां पाठस्तु—

आक्रमोस्याक्रमाय त्वा संक्रमोसि संक्रमाय त्वो-

त्क्रमोस्युत्क्रमाय त्वोत्क्रान्तिरसि उत्क्रान्त्यै त्वा सवितृ-प्रसूता बृहस्पतये स्तुत ॥ १२ ॥

हे स्तोत्रविशेष! त्वम् 'आक्रमः' यज्ञफलस्याक्रमणाय त्वां योजयामि, स्थानात्स्थानान्तरप्राप्तिः संक्रमस्तद्धेतुरसि, उर्ध्वं स्वर्गं प्रत्युत्क्रमणमुत्क्रमः तद्धेतुरसि, उत्क्रमणरूपा या क्रिया सा उत्क्रान्तिः तद्रूपोसि, अत उत्क्रान्त्यै स्वर्गं प्रत्युत्क्रमणार्थं त्वां योजयामि । गतमन्यत् ।१२-१-१०

अत्र विनियोगसङ्ग्रहः--

ब्राह्मणप्रथमाध्यायमन्त्राणां विनियोजनम् ।
अत्रादौ वृत उद्गाता महादित्यादिकं जपेत् ॥ १ ॥
देवो गृहाद्विनिर्गत्य दूरङ्गत्वा विहाय जपेत् ।
यागभूम्यन्तिके बद्धा पितरः पित्रुपस्थितिम् ॥ २ ॥
नृमयूपोच्छ्रितो मन्त्रो मृदा वेद्याक्रमं जपेत् ।
ररांटीस्पर्शनं विष्णोर्हविर्धानमिषे विशेत् ॥ ३ ॥
नवात्र मन्त्राः प्रथमे खण्डे सम्यगुदीरिताः ।
युनबाहूत्रयेत्सोमे ऋतस्येत्युपवेशनम् ॥ ४ ॥
ऋतस्पृशेद्द्रोणकुम्भं वानप्रोहेदमुं पुरः ।
मरुग्रावः स्पृशेदेषु द्रोणस्य ध्गृहनं त्विदम् ॥ ५ ॥
मृज्याद्ब्रह्माद्ब्रह्म द्रोणं पविद्रोणे पटं क्षिपेत् ।
प्रांशुधारां जपेदत्र नव मन्त्रा उदीरिताः ॥ ६ ॥
कुर्य्युः प्रवृत्तं होमौ द्वौ वेकुसूर्य्य इति ब्रूयात् ।
तृणापसरणं योद्य योम स्यादुपवेशनम् ॥ ७ ॥
अग्नेरिति स्तोमयोगो ह्यन्नमन्नं जपेद्द्वयम् ।
स्वामिनं वाचयेच्छ्येनः सम्वर्गसा प्रेक्ष्य जपेत् ॥ ८ ॥
उपस्थानं नमः सूर्य्ये दश मन्त्रा इहेरिताः ।
अध्वादित्ये ह्युपस्थानं सम्राडाहवनीयके ॥ ९ ॥
तुथोस्यास्तावदेशे स्याच्चात्वाले तु नभोसि हि ।
असम्मृष्टोसि शामित्र आग्नीध्रीये विभूरसि ॥ १० ॥
होतुर्धिष्ण्ये वह्निरसि श्वात्रा मैत्रावरुणीयके ।
तु ब्राह्मणाच्छंसिके स्यादुशिक् स्यात् पोतृधिष्ण्यके ॥ ११ ॥
नेष्टकेऽङ्घारिरच्छावाकके वस्युरसीत्यथ ।
शुन्ध्युर्म्मार्जालीय औदुम्बर्यां स्यादृतधेति हि ॥ १२ ॥
ससुद्रो ब्रह्मणः स्थाने अहिः प्रजाहिते भवेत् ।

स्याद्गार्हपत्यो जोसीति सगरा दक्षिणाग्निके ॥ १३ ॥
कव्यो दक्षिणवेद्यन्ते पातमा सर्व्वसंहतौ ।
चतुर्थखण्डे मन्त्राणां विंशतिः समुदीरिताः ॥ १४ ॥
ऋतमृज्याद्द्वारबाहू मामेत्यन्तः प्रवेशनम् ।
नम इत्युपविश्याथ श्येनश्चमसवीक्षणम् ॥ १५ ॥
इन्दोस्त्रिभिर्भक्षयेदूर्ध्वो मुखच्छिद्राणि संस्पृशेत् ।
सोमरा हृदयस्पर्शः सोमगीर्नाभिमामृशेत् ॥ १६ ॥
चमसं पूरयेदाप्याऽवमैरप्याग्निमन्त्रतः ।
दीक्षायै स्तोमभागोयं भवेन्मन्त्रचतुष्टयात् ॥ १७ ॥
वायुर्माध्यन्दिने योगो वृषकः स्वामिवाचनम् ।
इन्द्रो भक्षस्तोमयोगः सूर्य्यायु सवने भवेत् ॥ १८ ॥
स्वरोसि वाचयेदिन्दो कुर्य्याच्चमसभक्षणम् ।
आयुः सौम्यं चरुं पश्येद्यन्मे तत्र विकल्प्यते ॥ १९ ॥
येन सौम्यं च संस्पृष्टाङ्गुलिभ्यामक्षिमार्ज्जनम् ।
पञ्च विंशतिमन्त्रा स्युः पञ्चमे खण्ड ईरिताः ॥ २० ॥
ऐन्द्रमन्त्रे सोमभक्ष स्तुतस्य स्वामिवाचनम् ।
इष्ठसन्धौ सोमभक्षं ऋतस्य स्तोममोचनम ॥ २१ ॥
सोमे हि निर्गमः सूर्य्यस्योपस्थानं सुभूरिति ।
अपां द्वाभ्यामाहुती द्वे धानाभक्षो हारियोजने ॥ २२ ॥
देवाष्टौ शकले होमा अप्सुधौ चमसं स्पृशेत् ।
मधु पाणीनुपघ्राय चमसोत्सेचनं शमत् ॥ २३ ॥
कामाभ्यावर्त्तवेदेतत् ऊर्गस्तदुरसि क्षिपेत् ।
प्राणेतिमुखसंस्पर्शो दधीति दधि भक्षयेत् ॥ २४ ॥
चतुर्विंशतिमन्त्रास्तु षष्ठे खण्डे प्रकीर्तिताः ।
साश्वं रथं दक्षिणार्थं प्रतिगृह्णाति चेत्तदा ॥ २५ ॥
मृज्यादश्वमुखाभ्यश्वनामयुग्मचतुष्टयम् ।
रथोर्ध्वस्पर्श आदित्या वायोश्चर्म्मप्रतिग्रहे ॥ २६ ॥
अस्त्रप्रतिग्रहे नक्ष सूर्य्यं लोहप्रतिग्रहे ।
रथेति दक्षिणे चक्रे स्पर्शो वामेत्यधिष्ठितौ ॥ २७ ॥
बृहदित्युत्तरे चक्रे चक्रावंकेति संस्पृशेत् ।
वैश्वा रथं समारोहेद्विद्रेत्यत्र स्थितो जपेत् ॥ २८ ॥
कुशा यच्छेत्सव्यरज्जुं स्पृशेद्दासेति दक्षिणाम् ।

मन्त्रास्तु सप्तमे खण्डे षोडशेत्यवगम्यताम् ॥ २९ ॥
पुरस्तात्सर्वमन्त्राणां देवस्यत्वेत्यमुं जपेत् ।
वरुणेत्यादयो मन्त्रान् क्रमात्तत्तत्प्रतिग्रहे ॥ ३० ॥
अश्वो गौरप्यजः स्वर्णमजाऽविर्वसनं गिराः ।
उष्ट्रो मृगश्च पुरुषो हस्तिवरा व्रीह्यादयः ॥ ३१ ॥
तिला अश्वतरो मन्त्रं क इत्यन्तं जपेदथ ।
अष्टादशात्र मन्त्राः स्युरष्टमे खण्ड ईरिताः ॥ ३२ ॥
रश्मिरित्यादयस्तोमभागास्तैरनुमन्त्रणम् ।
कुर्य्यात्क्रमेण स्तोत्राणां ते त्रयस्त्रिंऽश ईरिताः ॥ ३३ ॥
वेदार्थस्य प्रकाशेन तमोहार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे प्रथमाऽध्यायस्य दशमः खण्डः ।

प्रथमाऽध्यायः समाप्तिमगमत् ।

# द्वितीयोऽध्यायः ।

## अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलञ्जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रथमाध्यायगा मन्त्रा व्याख्याताः क्रतुगामिनः ।
अध्यायान्ते स्तोमभागा उक्ताः स्तोमान् ब्रवीम्यथ ॥ २ ॥

अस्मिन् ब्राह्मणे प्राधान्येन गवामयनं प्रतिपाद्यते । प्रायणीयादिभिर्म्महाव्रतान्तैः पञ्चविंऽशतिसंख्यैरहोभिर्न्निष्पद्यते प्रायेणैतान्येवाहानि अन्येषामपि एकाहाहीनसत्रात्मकानाऽ सोमयागानां प्रकृतीनि । द्वादशाहश्चाहर्गणानां प्रकृतिः। अतः प्राधान्यात् प्राणीयोदयनीयौ उक्त्वा मध्ये यानि द्वादशाहानि तेषां विष्टुतयः । एवं च सति गवामयनिकानामपि त्रिवृदादयः स्तोमाः प्रदर्शिताः । ये स्तोमास्त्रिवृदादयस्तेषां विष्टुतयः क्रमेण द्वितीयतृतीयाभ्यामध्यायाभ्यां प्रदर्श्यन्ते ।

तत्र बहिष्पवमानसाधनस्य त्रिवृत्स्तोमस्य तिस्रो विष्टुतयः उद्यती परिवर्त्तिनी कुलायिनीति, आदितस्त्रिभिरनुवाकैस्ताः प्रदर्श्यन्ते। तत्र तावत् उद्यत्याः स्वरूपमाह—

**तिसृभ्यो हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः ॥ १ ॥**

एकैकस्य साम्नः पञ्च विभक्तयः हिङ्कारप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः। तत्र हिङ्कारस्त्रिभिरुद्गातृभिः कर्तव्यः। अत एव सूत्रकृतोच्यते—'साम्ने साम्ने हिङ्कुर्य्युरिति'। 'तिसृभ्य' इति क्रियार्थोपपदस्य च कर्म्मणि स्थानिन इति कर्म्मणि चतुर्थी। तिस्र ऋचो गातुं हिङ्कुर्य्यात् एकवचनमन्त्रम् उक्तादेव हेतोः अतस्त्रयोऽप्युद्गातारो हिङ्कुर्य्युरित्यर्थः। एवमुत्तरत्रापि हिङ्कारविधायकेषु वाक्येषु योजना। 'सहिङ्करोति' सहिङ्कर्त्ता 'मध्यमया' त्रिरुक्तया गायेत्। अयं द्वितीयः पर्य्यायः। पुनरपि तिसृभ्यो हिङ्करोति सहिङ्कर्ता तृचस्योत्तमया अन्त्यातया त्रिरुक्तया गायेत्। एषः तृतीयः पर्य्यायः। अनेन पर्य्यायेण त्रिवृत्स्तोमः सम्पद्यते। उक्तप्रकारेण त्रिधा वर्त्तते इति त्रिवृत्स्तोमः तस्य विष्टुतिरेषा उद्यती ऊर्ध्वं गच्छन्ती। उक्तेषु पर्य्यायेषु प्रथममध्यमोत्तमक्रमेण उर्ध्वगमनादन्वर्थसञ्ज्ञयमेषा त्रिवृतः प्रथमा विष्टुतिः ॥ १ ॥

एतस्यां विष्टुतौ अधिकारिणमाह—

**ज्येष्ठो ज्यैष्ठिनेय स्तुवीत ॥ २ ॥**

यो यजमानो भ्रातृणां मध्ये स्वयं ज्येष्ठो भवति सपत्नीनां मध्ये या ज्येष्ठा तस्याः पुत्रश्च भवति स यजमान एतया विष्टुत्या 'स्तुवीत' स्तौति। तत्रान्तर्णीतण्यर्थः स्तावयेत् तस्य यजमानस्य एतया विष्टुत्या स्तुयुरित्यर्थः ॥ २ ॥

एतां विष्टुतिं अग्रप्राप्त्यादिफलसाधनतया प्रशंसति—

**अग्रादग्रꣳ रोहत्यभिक्रामन्ती विष्टुतिराभिक्रान्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्य मृध्या एव ॥ ३ ॥**

'अग्रादग्र'मुत्कर्षादूर्ध्वं पुनरप्युत्कर्षं 'रोहति' प्राप्नोति उत्तरोत्तराभिवृद्धिर्भवति तस्यैतया विष्टुत्या स्तुवते, तथा इयं विष्टुतिभिरभिक्राम-

न्ती त्रिषु पर्य्यायेषु प्रथममध्यमोत्तमानुपूर्व्वेणाभिमुखमाक्रामन्ती उपर्य्युपरि गन्त्री अत एषा प्रयुज्यमाना यज्ञस्याभिक्रमणायैव उपर्य्युपरि प्राप्तये एव भवति । ततश्च किमित्यत आह—यज्ञस्या 'भिक्रान्तेन' भावे निष्ठा ऽभिक्रमणेनारोहणेन परिसमापनेन 'ऋध्नोति' यजमानः समृद्धो भवति हिशब्दो हेतौ । यस्मादेवं तस्मादेतया विष्टुत्या स्तोतव्यम् ऋद्ध्या एव तत्स्तवनं यजमानस्य समृद्ध्या एव भवति ॥ ३ ॥

पुनरपि नानाविधफलसाधनत्वेन प्रशंसति--

**पापवसीयसो विधृतिर्विपाप्मना वर्त्तते य एतया स्तुते नावगतो ऽपरुध्यते नापरुद्धोऽवगच्छति । न श्रेयाऽसं पापीयानभ्यारोहति न जनता जनतामभ्येति नान्योन्यस्य प्रजा आददते यथाक्षेत्रं कल्पन्ते । अवर्षुकस्तु पर्ज्जन्यो भवतीमे हि लोकास्तृचस्तान् हिङ्कारेण व्येति ॥ ४ ॥**

पापन्निकृष्टं वसीय उत्तमं पापं च वसीयश्च पापवसीयसी तयोरुभयो 'र्विधरिणी' असाङ्कर्य्यकरणी इयं विष्टुतिरेवं जानन् यएतया विष्टुत्या 'स्तुते' स्तौति, सः 'पाप्मना' पापेन 'निवर्त्तते' पाप्मनः पृथग् भवति इत्यर्थः । यत्र देशे विधरणी एषा विष्टुतिः प्रयुक्ता तत्र 'अवगतः' कर्त्तरि निष्ठायां अवगन्ता ज्ञाता 'नापरुध्यते' अज्ञानेनापरुद्धः अनाक्रान्तो भवति । यस्त्वपरुद्ध अज्ञानेनापवृतः स नावगच्छति न जानाति ज्ञानाज्ञाने तस्मिन्नधिकरणे सह न तिष्ठत इत्यर्थः । तथा 'श्रेयाऽसं' प्रशस्यतममुत्तमजातिं ब्राह्मणादिकं 'पापीया'न्निकृष्टतमः शूद्रादिर्ना 'भ्यारोहति' नाभिक्रामति न श्रेयाऽसः पापीयाऽसश्च विभक्ता एव वर्त्तन्त इत्यर्थः । तथा 'जनता' जनसमूहो 'जनतां' अन्यजनसमूहं 'नाभ्येति'नाभिगच्छति जनपदो जनपदान्तरं दौर्भिक्षादिकारणेन न प्रविशतीत्यर्थः । प्रजाश्चान्योन्यस्य धनादिकं 'नाददते' न स्वीकुर्व्वन्ति । अपि तु यथाक्षेत्रं स्वं स्वं क्षेत्रमनतिक्रम्य स्वक्षेत्रे कल्पन्ते । इत्थमस्या विष्टुतेर्बहूनि फलानि दर्शितानि, एकस्तु दोषो भवति, कोऽसौ दोष उच्यते—'पर्जन्यो' वृष्ट्यभिमानी देवः 'अवर्षुकोऽवर्षणशीलो भवति तस्मिन् देशे वृष्टिर्न स्यादित्यर्थः । यस्मिन् देशे एतया विष्टुत्या स्तुवते । कुत इत्यत आह इमे भूरादयस्त्रयो लोकाः तृचस्तिस्र ऋचो भूरादिलोकस्थानीयास्तान् लोकान् हिङ्कारेण प्रत्यृचं कृतेन

ब्येति' विगमयति वियुक्तान् करोति । धयतिरन्तर्नीतण्यर्थः । परस्परोपकार्य्योपकारकभावं विश्लेषयतीत्यर्थः । सति हि तस्मिन्नन्तरिक्षात्पृथिव्या उपकारात्मिका वृष्टिर्भवति नान्यथा । हि यस्मादेवं तस्माद्वर्षुकः पर्जन्यो भवति ॥ ४ ॥

अथैतां प्रतिष्ठाफलतया प्रशंसति—

**एषा वै प्रतिष्ठिता त्रिवृतो विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥ ५ ॥**

'एषा वै' एषा खलु उद्यती त्रिवृतो विष्टुतिः प्रतिष्ठिता एकैकस्यामृचि एकैकस्य पर्य्यायस्य परिसमापनादस्यां प्रतिष्ठिता भवति । अन्नादिभिः समृद्धो भवतीत्यर्थः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे द्वितीयाध्यायस्य प्रथमः खण्डः ।

## अथ द्वितीयः खण्डः ।

अथ परिवर्त्तिनीं विष्टुतिं दर्शयति—

**तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति स पराचीभिः परिवर्त्तिनी त्रिविष्टुतिः ॥ १ ॥**

तिसृभ्यस्तिसृ ऋचो गातुं हिङ्कुर्य्यात् । स हिङ्कर्त्ता 'पराचीभि' रनावृताभिस्तिसृभिर्ऋग्भिर्गायेत् । एवमुत्तरयोरपि पर्य्याययोर्योजना । एषा त्रिवृत् स्तोमस्य विष्टुतिः 'परिवर्त्तिनी' आवर्त्तिनी । यथा प्रथमे पर्य्याये अनावृताभिर्गानं तथोत्तरयोरपीति अस्या आवृत्तिः ॥१॥

अथैतां बहुफलसाधनत्वेन प्रशंसति—

**प्रपरीवर्त्तमाप्नोति य एतया स्तुते सन्तता त्रिष्टुतिः प्राणोऽपानो व्यानस्त ऋचस्तान् हिङ्कारेण सन्तनोति । सर्व्वमायुरेति न पुरायुषः प्रमीयते य एतया स्तुते वर्षुकः पर्ज्जन्यो भवतीमे हि लोकास्तृचस्तान् हिङ्कारेण सन्दधाति ॥ २ ॥**

यो यजमान 'एतया' विष्टुत्या स्तुते स 'परीवर्तं' परिवृत्य परिवृत्य पुनः पुनर्धनादिकं प्राप्नोति । परिपूर्व्वाद्वृतेराभीक्ष्णये णमुल्वेतीति

द्वैवत्याज्यस्य प्रातःसवनप्रयोगेण यज्ञो ज्योतिष्टोमो यत् परिमाणोऽस्ति तमेव तं सर्वमपि यज्ञमारभत आरब्धवान् भवति ॥ ४ ॥

उक्तदेवतानानात्वमाज्यस्य जामित्वसाधनेन स्तौति—

**सर्वाणि स्वाराण्याज्यानि तज्जामि नानादेवत्यैः स्तुवन्त्यजामितायै ॥ ५ ॥**

सर्वाण्यप्याज्यानि गायत्रत्वात् स्वाराणि स्वरैरेव वक्तुं प्राप्तानि । अतस्तज्जामि । अतिरेकोऽयं 'जाम्यतिरेकनाम' इति निरुक्तम् । यद्वा तन्द्रीकरणम् । अतो नानादेवत्यैस्तृचैः स्तुवन्त्युक्तदोषाभावाय ॥५॥

अथाज्यानामभ्यावृत्तगानं स्तौति—

**ग्राम्येभ्यो वा एतत्पशुभ्यः स्तुवन्ति यदाज्यैः पुनरभ्यावर्त्तँस्तुवन्ति तस्मात्पराञ्चः प्राज्यन्ते प्रत्यञ्चः प्रजायन्ते तस्मादु प्रेत्य पुनरायन्ति ॥ ६ ॥**

यदाज्यैः स्तुवन्त्येतदेतेन सवनेन ग्राम्येभ्य एव पशुभ्यस्तल्लाभार्थमेव स्तुवन्ति । तस्मात्पराक्तस्य प्रत्यक्तस्य च विद्यमानत्वात्पराञ्चः प्राज्यन्ते प्रसिच्यन्ते प्रत्यञ्चः प्रतिमुखाः प्रजायन्ते । तस्मादेवाभ्यावर्त्तस्तवनादेव पशवः प्रातः सञ्चरन्ति प्रेत्य सायं पुनरायन्ति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य द्वितीयः खण्डः ।

---

## अथ तृतीयः खण्डः ।

प्रातःसवनमुक्त्वा माध्यन्दिनं सवनं विवक्षुर्माध्यन्दिनम्पवमानं स्तौति—

**एतावता वाव माध्यन्दिनँ सवनं पुपुवे ॥१॥**

एतावता वक्ष्यमाणानामाज्यानां परिमाणेन पदार्थेनैव कृत्स्नमपि माध्यन्दिनं पवमानं पुपुवे पूयते । एतावतेत्यनेन पावकद्रव्यपरिमाणन्तद्योग्यं द्रव्यञ्च सामान्येन निर्दिष्टं भवति ॥ १ ॥

एतावतेत्युक्तमेव विशदयति—

**त्रिभिश्च च्छन्दोभिः पञ्चभिश्च सामभिः ॥ २ ॥**

त्रिभिर्गायत्रीत्रिष्टुब्बार्हतैर्बृहतीभिश्च । सामभिर्गायत्रामहीयवरौरवयौधाजयौशनसंज्ञैः पञ्चभिश्च ॥ २ ॥

किमेतावता भवतीत्याह ।

**यन्माध्यन्दिनेन पवमानेन स्तुवन्ति माध्यन्दिनमेव तत्सवनं पावयन्ति ॥ ३ ॥**

यन्माध्यन्दिनं पवमानं स्तुवन्ति तत्तेन माध्यन्दिनं सवनं पावयन्ति । पवमानस्तवनेन स्तुवन्तमपि विष्टुवन्तीत्यर्थः । सवनेन पूतं भवतीत्यर्थः ॥ ३ ॥

पवमानस्तवनेन सवनं पूतं भवतीत्युक्तन्तदुभयोः पवमानसवनयोः साम्नात्मवैषम्यमाह—

**एतावन्ति वाव सर्व्वाणि सामानि यावन्ति माध्यन्दिने पवमाने ॥ ४ ॥**

यावन्ति माध्यन्दिने पवमाने सामानि सन्त्येतावन्त्येव खलु तत्सवनगतानि सामान्यपि ॥ ४ ॥

येषु पवमानेषु सामसु सवनान्यन्तर्भवन्ति तान्याह—

**गायत्रन्निधनवदानिधनमैडम् ॥ ५ ॥**

गायत्रं साम प्रसिद्धम् । निधनवदिति बहिर्निधनमृगक्षरतो बहिर्भूतनिधनम् । यथा' आमहीयवमानिधनं बाहिर्भूतं निधनराहितम् । यथा यौधाजयौशने । ऐडं इडानिधनं यथा रौरवमिति । एवं मैत्रावरुणपृष्ठं वामदेव्यं गायत्रीच्छन्दस्कत्वात् ॥ ५ ॥

होतुः पृष्ठं रथन्तरं बहिर्निधनं नौधसं ब्रह्मसाम निधनकाले यमैडमच्छावाकपृष्ठमिति पुनरुपसंहरति—

**यन्माध्यन्दिनेन पवमानेन स्तुवन्ति सर्व्वैरेव तत्सामभिः स्तुवन्ति ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

अथ गायत्र्यां गायत्रं साम प्रशंसनद्वारेण विधत्ते—

**आत्मा वै यज्ञस्य पवमानो मुखं गायत्री प्राणो गायत्रं यद्गायत्र्यां गायत्रेण स्तुवन्ति मुखत एव तत्प्राणान्दधाति ॥ ७ ॥**

यज्ञस्याग्निष्टोमस्य पवमान एवात्मा स्वरूपं तत्स्तुतिरूपत्वात् । माध्यन्दिनपवमानोऽप्यात्मा तस्य मुखं गायत्री प्रथमप्रयोज्यत्वात् । तत्राश्रितत्वाद्गायत्रं प्राणः । एवञ्च सति गायत्रेण स्तुवन्तीति यत्तत्तेन मुखत एव तत्प्राणान्दधाति ॥ ७ ॥

त्रिभिश्छन्दोभिरित्युक्तन्तच्छन्दस्त्रयं प्रशंसति—

प्राणापाना वा एतानि च्छन्दाꣳसि प्राणो गायत्री व्यानो बृहत्यपानस्त्रिष्टुब्यदेतैश्छदोभिः स्तुवन्ति प्राणापानानामविच्छेदाय ॥ ८ ॥

तानि त्रीणि च्छन्दांसि प्राणापाना वै । अपानशब्देन व्यानापानावुच्येते देहान्तर्वर्त्तित्वसाम्यात् । तदपेक्षयैव प्राणापाना इति बहुवचनम्। कः किं छन्दोरूप इति विभज्य दर्शयति प्राणइत्यादिना । एक एव मुख्यः शरीरधारकः प्राणवायुर्बहिर्वृत्तिरुच्छासाख्यः प्राण उच्यते स गायत्रीस्थानीयः । व्यानः प्राणापानयोर्विधारकः स बृहत्या । अपानो बहिर्वृत्तेरन्तः प्रवेशको निःश्वासाख्यस्त्रिष्टुभः । शेषं स्पष्टम् ॥ ८ ॥

तदेतच्छन्दस्त्रयं प्रकारान्तरेण प्रशंसति—

इमे वै लोका एतानि च्छन्दाꣳस्ययमेव गायत्र्यन्तरिक्षं मध्यमो बृहत्यसावुत्तमस्त्रिष्टुब्यदेतैश्छन्दोभिः सꣳहितैः स्तुवन्त्येषाꣳलोकानामविच्छेदाय ॥ ९ ॥

अयं भूर्लोक एव गायत्री लोकेषु च्छन्दःसु चानयोः प्राथम्यात् । उक्तरूपत्वमेवमुत्तरत्रापि द्रष्टव्यम । संहितैरिति च्छन्दोऽन्तरानन्तर्हितैरित्यर्थः । शिष्टं स्पष्टम् ॥ ९ ॥

संहितैः स्तुवन्तीत्युक्तं तद्व्यतिरेके दोषमाह—

यदन्यच्छन्दोऽन्तरा व्यवेयादिमाँल्लोकान्विच्छिन्द्यात् ॥ १० ॥

यद्यद्यन्यस्त्रिभ्य उक्तेभ्योऽन्यच्छन्दोऽन्तरा त्रयाणामुक्तानां छन्दसां मध्ये व्यवेयाद्व्यवहितं कुर्य्यात्तेनेमान् भूरादिलोकान्विच्छिन्द्यात् । परस्परोपकार्य्योपकारकभावरहितान् कुर्यादित्यर्थः ॥१०॥

एवं छन्दः प्रशस्य सामानि प्रशंसति—

गायत्रेण स्तुत्वा निधनवता स्तुवन्तीयं वै गायत्र्यस्यामेव तदायतनं क्रियते ॥ ११ ॥

'उद्घात' इत्यादिषु गायत्रीषु गायत्रसाम्ना स्तुत्वा तास्वेव गायत्रीषु निधनवतामहीयवेन साम्ना स्तुयुस्तथा सत्येतास्वृक्षु या गायत्र्यस्ति सेयं वै भूरेव । तत्तेन गायत्रीषु आयतनरूपन्निधनवदामहीयवगानेनास्यां भूमावेवायतनं क्रियते यजमानाय ॥ ११ ॥

एतदेव व्यतिरेकनिन्दया स्तौति—

**यदनिधनेनाग्रे स्तुयुरनायतनो यजमानः स्यात् ॥१२॥**

अग्रे बहिष्पवमानस्यादौ यद्यदि गायत्रमन्तरेण निधनवता निधनवदामहीयवव्यतिरिक्तेन केनचित्साम्ना स्तुयुरनायतनो यजमानः स्यात्। तस्मान्निधनवदामहीयवेनाग्रे स्तोतव्यम् ॥ १२ ॥

पुनस्तदेव प्रशंसति—

**निधनवता स्तुवन्ति वीर्य्यं वै गायत्री वीर्य्यंन्निधनं वीर्य्येणैव तद्वीर्य्यं समर्द्धयति ॥१३॥**

गायत्रीषु 'उच्चात' इत्यादिषु निधनवता बहिर्निधनेनामहीयवेन स्तुवन्ति। गायत्रीतरच्छन्दोभिरशक्यस्य सोमाहरणस्य कर्त्रीति वीर्य्यमेव निधनमपि वीर्य्यम्। आयतनवानिह वीर्य्यं करोति। तथा सति तत्तेन गायत्रीषु निधनवत् प्रयोगेण पूर्वं विद्यमानं वीर्य्यं वीर्य्यान्तरेणैव समर्द्धयति। उक्ते गायत्रीषु गायत्रमामहीयवं च सामनी ॥ १३ ॥

अथ बृहतीषु 'पुनानः सोम' इत्यादिषु रौरवं तावद्विदधाति—

**ऐडेन बृहतीमारभन्ते ॥ १४ ॥**

ऐडेन इडानिधनेन रौरवेण साम्ना बृहतीच्छन्द आरभन्ते गृह्णन्ति॥१४॥

अथ तत्प्रशंसति—

**पशवो वा इडा पशवो बृहती पशुष्वेव तत्पशून्दधाति ॥ १५ ॥**

'इडेरन्ते' इत्यादि गोपर्य्यायेष्विडायाः पशुरूपत्वात्। 'इडा वैमानवी घृतपदी' इडायास्त्वापदे' 'इडायास्पदं घृतवत्' इत्यादिषु गोरूपेण स्तुतेरिडेति पशवः खलु। बृहत्यपि 'अयम्मध्यमो बृहती' इत्युक्तत्वादन्तरिक्षस्थानीया। अन्तरिक्षे पशवः सञ्चरन्तीति पशव इत्युच्यते। शिष्टं स्पष्टम्॥१५॥

अथ बृहतीष्वेव यौधाजयं विधित्सुस्तां स्तौति—

**बृहत्यां भूयिष्ठानि सामानि भवन्ति ॥ १६ ॥**

एकाहीनसत्रेषु माध्यन्दिने पवमाने बृहत्यां हि भूयिष्ठानि सामानि भवन्ति। अतो भूयिष्ठवीर्या बृहती ॥ १६ ॥

इदानीं बृहतीषु यौधाजयं विदधाति—

**तत्रापि त्रिणिधनम्(१) ॥ १७ ॥**

---

(१) त्रिनिधनमिति दन्त्यमध्यः पाठः पुस्तकान्तरे वर्त्तते।

तेषु भूयिष्ठवीर्येषु सामसु त्रिणिधनं निधनत्रयोपेतं यौधाजयं ज्योतिष्टोमे द्वितीयं भवतीति तद्विधिरवगन्तव्यः। ननु पूर्वं 'गायत्रं निधनवदनिधनम्'इत्यत्र यौधाजयस्यानिधनशब्देन व्यवहारः। इदानीन्तु त्रिणिधनमित्युच्यते। अतो व्याहतमिति? नैतदस्ति। पूर्वं यौधाजयं बहिर्निधनाभावादनिधनमित्युक्तम्। इह तु 'षासी'त्येकं निधनं१'दासी'त्यपरं २ 'ण्या या' ३ इत्युक्तममिति निधनत्रयसद्भावात्त्रिणिधनमित्युक्तम्॥१७॥

अथ तत् प्रशंसति—

अबलिष्ठ इव वा अयम्मध्यमो लोकस्तस्यैव तदायतनं क्रियते ॥ १८ ॥

मध्यमोऽन्तरिक्षलोकोऽबलिष्ठ इव वै। अत्यन्तमप्रबल इव प्रतिभातीतरलोकद्वयवदनाश्रयत्वात्। तस्यैवाबलिष्ठस्यैवान्तरिक्षस्य तत्तदानीं यदा यौधाजये त्रिणिधनं प्रयुज्यते तदाऽयतनं क्रियते कृतं भवति। कैश्चिद्वरिष्ठ इवेत्याभिधीयते ॥ १८ ॥

तदेव पुनः प्रशंसति—

त्रिणिधनं भवति त्रीणि सवनानां छिद्राणि तानि तेनापिधीयन्ते ॥ १९ ॥

"कतमानि छिद्राणीति? पवमानदेवतास्तुतयस्तानि छिद्राणि। अथाप्यन्तरेण पवमानमावृत्तीनि च हविर्भिः प्रचरन्ति तानि छिद्राणीति" अयमर्थः पवमानव्यतिरिक्तानि स्तोत्राणि यजनीयदेवतास्तुतिरूपाणि। नैवम्। पवमान इति त्रयः पवमानाः सवनानां छिद्राणि। 'अथाप्यन्तरेण पवमान'मित्यादिना प्रकारान्तरेण सवनच्छिद्राण्युच्यन्ते। तस्यायमर्थः। आवृत्तिस्तोत्राणि निरन्तरा भवन्ति। पवमानेभ्यः परं पुरस्तादावृत्तिस्तोत्रेभ्यो हविर्भिः प्रचरन्ति। यथा सवनीयैः पुरोडाशैर्द्विदेवत्यैर्ग्रहैः सवनीयमुखीयैर्ऋतुयाजैरिति प्रातःसवने चरन्ति। दधिघर्मौपांशुपुरोडाशेन पुरोडाशैः सवनमुखीयैर्मरुत्वद्ग्रहेणेति माध्यन्दिने। पश्वङ्गैः सवनमुखीयैः पुरोडाशैः सवनमुखीयैः सावित्रग्रहेण सौम्यचरुणा पत्नीवद्ग्रहेणेति तृतीयसवन इत्येवमपिसवनच्छिद्राणीति ॥१९॥

प्रकारान्तरेण स्तौति—

त्रिणिधनं भवति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति ॥ २० ॥

स्पष्टोऽर्थः ॥ २० ॥

उक्तन्त्रिणिधनं प्रतिष्ठाहेतुरिति तद्व्यतिरेकेणाप्रतिष्ठितत्वसंकीर्त्तनेन प्रशंसति—

**त्रिणिधनं भवत्येतेन वै माध्यन्दिनꣳसवनं प्रतिष्ठितं यत्त्रिणिधनं यत्त्रिणिधनन्न स्यादप्रतिष्ठितम्माध्यन्दिनꣳसवनꣳस्यात् ॥ २१ ॥**

त्रिणिधनं प्रतिष्ठाहेतुरिति पूर्वमुक्तम् । शिष्टं सुज्ञानम् ॥ २१ ॥

इदानीं निधनगताक्षरसंख्ययापि स्तौति—

**द्व्यक्षराणि निधनानि भवन्ति द्विपाद्यजमानो यजमानमेव यज्ञे पशुषु प्रतिष्ठापयति ॥ २२ ॥**

निधनेष्वक्षरद्वयं यजमानोऽपि द्विपात् । उभयोरपि प्रतिष्ठारूपत्वान्निधनप्रयोगेण यजमानमेव यज्ञे पशुषु च प्रतिष्ठापयति ॥ २२ ॥

तदेव रौरवयौधाजये उक्त्वौशनमाह—

**अनिधनमन्ततो भवति स्वर्गस्य लोकस्यानतिपादाय ॥२३॥**

अनिधनन्निधनहीनमौशनमन्ततो भवति । तच्च स्वर्गस्य लोकस्यानतिपादायानाशाय भवति । न कदाचिद्यजमानं स्वर्गाय युज्यत इत्यर्थः ॥२३॥

व्यतिरेके बाधमाह—

**यन्निधनवत्स्याद्यजमानꣳ स्वर्गाल्लोकान्निर्हन्यात् ॥२४॥**

अन्ततो यदि निधनवत्साम भवेत् स्वर्गाल्लोकान्निर्हन्यात् । निधनं हि प्रतिष्ठा प्रतिष्ठायामतीव पश्वन्नादिसमृद्धिः । अतः क्रतुफलेन स्वर्गं प्राप्तोप्यन्ततो निधनप्रयोगात् प्रतिष्ठा । पश्वन्नाद्यर्थं स्वर्गादिकमेव लोकं यजमानः पुनरागच्छेदित्यभिप्रायः ॥ २४ ॥

अनिधनमन्ततो भवतीत्युक्तमनिधनमौशनमनुवदति स्तुत्यर्थम्—

**स्वारं भवति ॥ २५ ॥**

अन्त्यस्वरेण स्वरितेन यत्सामाप्यते तत्स्वारम् । सर्वत्र तावत् चत्वार एव सामान्ताः। स्वारो निधनमिडावागिति । अत्रान्त्यमक्षरं स्वरयित्वा समापितं 'हाई'कारश्च । द्वयमपि रूढ्या स्वर इति व्यपदिश्यते । अत्र हाईकारप्रसंगाडुक्तार्थनिश्चयः ॥ २५ ॥

स्वरं प्रशंसति—

स्वरेण वै देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते स्वरेणैव तद्देवेभ्योऽन्ततोऽन्नाद्यं प्रयच्छति ॥ २६ ॥

अन्ततो मन्त्राणां स्वाहान्ते स्वरितभूते देवेभ्योऽन्नाद्यं हविः प्रदीयते। तत्तस्मात्तेन स्वरप्रयोगेण देवेभ्योऽन्ततः सामान्तेऽन्नाद्यं प्रयच्छति दत्तवान् भवति ॥ २६ ॥

माध्यन्दिनपवमानगतानामाद्यन्तसामनी स्तोतुमनुवदति—

गायत्रं पुरस्ताद्भवति स्वारमन्ततः ॥ २७ ॥

स्पष्टोऽर्थः ॥ २७ ॥

अथ स्तौति—

प्राणो वै गायत्रं प्राणः स्वरः प्राणानेव तदुभयतो दधाति तस्मादुभयतः प्राणाः पशवः ॥ २८ ॥

गायत्रस्य प्राणरूपत्वम्। गायत्र्याः प्राथम्येन मुखजन्यत्वेन तद्रूपत्वं पूर्वमेवोक्तम्। स्वरस्यापि प्राणनिरोधमन्तरेणानुत्पत्तेः प्राणत्वम्। तत्तेन प्राणानेवोभयत आद्यन्तयोरुपर्यधश्च दधाति। तस्मात्पशव उभयतः प्राणा उपर्य्यूर्द्ध्ववृत्तिः प्राणोऽधस्तादधोवृत्तिरपान इत्युभयतः प्राणाः पशवः ॥ २८ ॥

पुनः प्रशंसति—

यद्गायत्रं पुरस्ताद्भवति स्वारमन्ततः प्राणैरेव प्रैत्यपाने प्रतितिष्ठति ॥ २९ ॥

पुरस्ताद्गायत्रस्य करणात्पुरोगमनहेतुना प्राणेन प्रैति प्रगच्छति। अन्तःप्रतिष्ठायां स्वरस्य करणात्प्रतिष्ठाहेतुनापानेन प्रतितिष्ठति ॥ २९ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
तृतीयः खण्डः।

---

## अथ चतुर्थः खण्डः।

अथास्मिन् खण्डे बृहत्याख्यं मध्यमं छन्दः स्तूयते। आदौ तावत्स्वर्ग्यत्वेन दक्षिणा योज्येति प्रशंसति—

एतद्वै यज्ञस्य स्वर्ग्यं यन्माध्यन्दिनꣳ सवनम्माध्यन्दिनस्य पवमानः पवमानस्य बृहती यद्बृहत्याः

स्तोत्रे दक्षिणा दीयन्ते स्वर्ग्यस्यैव तल्लोकस्यायतने दीयन्ते ॥ १ ॥

माध्यन्दिनं सवनं यदस्तीत्येतद्वै-एतदेव यज्ञस्यावयवेषु मध्ये स्वर्ग्यम् । यद्येवं तन्माध्यन्दिनसवनस्यावयवेषु मध्ये माध्यन्दिनः पवमानः स्वर्ग्यः । तद्वच्छन्दसां मध्ये बृहती स्वर्ग्या । तथा सति यद्यदि बृहत्याः स्तोत्रे रौरवयौधाजययोर्गानसमये दक्षिणा दीयन्ते यजमानैः । सिद्धमन्यत् । अनेन माध्यन्दिनपवमानस्य मध्ये दक्षिणा दातव्येत्युक्तम् । तच्चासन्नेषु नाराशंसेषु दक्षिणा दातव्येत्यनेन सह विकल्प्यते । यद्वा बृहत्याः स्तोत्रे निवृत्ते दक्षिणा देयेति व्याख्येयम् । यथोक्तेन सह विरोधो न भवति ॥ १ ॥

अथ प्रकारान्तरेण तां प्रशंसति—

देवा वै च्छन्दाꣳस्यब्रुवन्युष्माभिः स्वर्गं लोकमयामेति ते गायत्रीं प्रायुञ्जत तया न व्याप्नुवꣳस्त्रिष्टुभं प्रायुञ्जत तया न व्याप्नुवञ्जगतीं प्रायुञ्जत तया न व्याप्नुवन्ननुष्टुभं प्रायुञ्जत तयाऽल्पकादि न व्याप्नुवꣳस्त आसान्दिशाꣳ रसान्प्रबृह्य चत्वार्यक्षराण्युपादधुः सा बृहत्यभवत्तयेमाँल्लोकान् व्याप्नुवन् ॥ २ ॥

ते देवा गायत्रीं प्रायुञ्जत लोकव्याप्त्यर्थं प्रयुक्तवन्तः । तया न व्याप्नुवन् लोकान् । एवं त्रिष्टुभं जगतीं च प्रयुज्य ताभ्यां न व्याप्नुवन् । ततोऽनुष्टुभं प्रायुञ्जत तयाऽल्पकादि न देशान् व्याप्नुवन् । ते पश्चादस्यामेव वीर्यमाधाय व्याप्नुयामेति बुद्ध्वा-आसाम्मुख्यदिशां रसान् प्रबृह्योद्धृत्य चत्वार्यक्षराणि कृत्वा अनुष्टुभ्युपादधुः । साऽक्षरचतुष्टयोपेताऽनुष्टुब्बृहत्यभवत् । तयेमान् भूरादिलोकान् व्याप्नुवन् ॥२॥

अथ बृहत्या बृहत्त्वमुक्तव्याप्तिप्रवृत्तिनिमित्तकमित्याह—

बृहती मर्त्या यथेमाँल्लोकान् व्यापामेति तद्बृहत्या बृहत्त्वम् ॥ ३ ॥

हे मर्त्या मर्त्या बृहत्येषा यथेमान् लोकान् व्यापाम व्याप्ताः स्मेति । तस्माद्बृहत्या बृहत्त्वं महत्त्वम् ॥ ३ ॥

पशुरूपाक्षरचतुष्टयसम्बन्धादपि बृहती स्वस्तोत्रे दक्षिणायोग्येत्याह—

पशून्वा अस्यान्तानुपादधुः पशवो वै बृहती यद्-

बृहत्याः स्तोत्रे दक्षिणा दीयन्ते स्व एव तदायतने दीयन्ते ॥ ४ ॥

तान् तानि दिशां सारभूतानि चत्वार्यक्षराणि पशून् वै पशुरूपाण्येवास्यां बृहत्यां येनाक्षरोपाधानेन बृहती भवति तस्यामुपादधुः । तस्माद्बृहती पशव एव । तस्याः स्तोत्रे दक्षिणादानं स्वकीय एवायतने दत्तं स्यात् ॥ ४ ॥

अथ बृहतीत्वं प्रश्नप्रतिवचनरूपेण प्रशंसति—

यन्निवत्याहुरन्यानि च्छन्दांꣳसि वर्षीयाꣳसि कस्माद्बृहत्युच्यत इत्येषा हीमाँल्लोकान् व्याप्नोन्नान्यच्छन्दः किञ्चन यानि सप्त चतुरुत्तराणि च्छन्दाꣳसि तानि बृहतीमभिसम्पद्यन्ते तस्माद्बृहत्युच्यते ॥ ५ ॥

अन्यानि पङ्क्तिप्रभृतीनि च्छन्दांसि वर्षीयांसि चतुरुत्तराणि बह्वक्षराणि तानि परित्यज्य कथमेषा बृहत्युच्यते ? इति यथा ब्रह्मवादिन आहुस्तत्रेदमुत्तरम् । एषेत्यादि तच्च स्पष्टम् । किञ्चैतानि सप्तचतुरुत्तराणि गायत्र्यादीनि जगत्यन्तानि च्छन्दांसि सन्ति तानि बृहतीमभिसम्पद्यन्ते । कथं ? उच्यते । एका गायत्री जगती चैका तयोरक्षराणि मिलित्वा द्वासप्ततिर्भवन्ति । तानि द्वेधाविभागे सति षट्त्रिंशदक्षरात्मिके द्वे बृहत्यौ भवतः । एवमुष्णिक् त्रिष्टुभौ द्वे बृहत्यौ तथानुष्टुप्पङ्क्ती द्वे बृहत्यौ स्वयञ्च बृहतीति । एवं सर्वाण्यपि च्छन्दांसि बृहतीमभिसम्पद्यन्तेऽतो बृहतीत्युच्यत इति प्रशंसा ॥ ५ ॥

अथ माध्यन्दिने बृहत्यस्तित्वविषये ब्रह्मवादिन आक्षेपमवतारयति—

यन्निवत्याहुर्गायत्रं प्रातःसवनं त्रैष्टुभम्माध्यन्दिनꣳसवनञ्जागतं तृतीयसवनङ्कस्माद्बृहत्या मध्यन्दिने स्तुवन्तीति ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

तस्योत्तरमाह—

बहिष्पवमानेन वै देवा आदित्यꣳ स्वर्गं लोकमहरन् स नाध्रियत तं बृहत्या मध्यन्दिने स्तभ्नुवꣳस्तस्माद्बृहत्या मध्यन्दिने स्तुवन्त्यादित्यꣳ ह्येषा मध्यन्दिने दाधार ॥ ७ ॥

पूर्वं देवा बहिष्पवमानेनादित्यं स्वर्गं लोकमहरन्नगमयन्। स नाध्रियत तेन पवमानेन तत्र धृतो नाभूत्। तस्मध्यन्दिने पवमाने बृहत्याः स्तोत्रेण स्तम्नुवन्नधः प्रच्युतितः स्तम्भितवन्तः। यस्मादेवन्तस्मान्मध्यन्दिने स्तुवन्ति। हि यस्मादेषा मध्यन्दिने दाधारादित्यमित्येतदुत्तरम्। एतावता बृहत्या मध्यन्दिने प्रसङ्गमुक्तम् ॥ ७ ॥

कथं माध्यन्दिनसवनस्य त्रैष्टुभत्वप्राप्तिरिति तत्प्रकारमाह—

**यैरु कैश्च च्छन्दोभिर्मध्यन्दिने स्तुवन्ति तानि त्रिष्टुभमभि सम्पद्यन्ते तस्मात्त्रिष्टुभो नयन्ति माध्यन्दिनात्सवनात् ॥ ८ ॥**

उशब्दोऽप्यर्थे। यैः कैश्चापि च्छन्दोभिर्मध्यन्दिने सवने माध्यन्दिनपवमाने पृष्ठेषु चतुर्षु स्तुवन्ति तानि त्रिष्टुभो न गच्छन्ति। समवेतानि च्छन्दांसि त्रिष्टुभमभि सम्पद्यन्ते। तस्मान्माध्यन्दिनात्सवनात्त्रिष्टुभः सकाशान्नयन्ति। त्रिष्टुप्सम्पत्तिप्रकारं छन्दसामित्युन्नेतव्यम्। कथम्माध्यन्दिने पवमाने 'उच्चात' इति गायत्रे तृचे गायत्रामहीयवे द्वे सामनी गातव्ये तदर्थं तृचस्य द्विरावृत्त्या षट् गायत्र्यो भवन्ति। तथा मैत्रावरुणे पृष्ठे 'कया न' इति गायत्रतृचोत्पन्ने वामदेव्यसप्तदशस्तोमत्वात् सप्तदश गायत्र्यस्ताः संयतास्त्रयोविंशतिगायत्र्यो भवन्ति। पुनश्च 'पवमाने पुनान' इति बार्हते तृचे रौरवयौधाजयसामद्वयार्थं द्विरावृत्तेः षट् बृहत्यो भवन्ति। तथा होतुः पृष्ठे 'अभित्वा शूर' इति प्रगाथे ककुबुत्तराकारं गानात्प्रथमे पर्याये प्रथमविष्टावात्तिस्रो बृहत्यः। इतरयोः पर्याययोरेकैकेति मिलित्वा पञ्च बृहत्यः शिष्टा द्वादशककुभः स्युः। यद्वा रथन्तरमकृत्वा 'त्वामिद्धि' इति बृहत्सामपक्षेऽपि पञ्चैव बृहत्यो द्वादश ककुभः स्युः। तथा ब्राह्मणाच्छंसिनः पृष्ठेऽपि 'तच्चोदसमम्' इति प्रगाथे नौधसः प्रयोगे सप्तदशस्तोमत्वात् सप्तदश बृहत्यः। एवमच्छावाकपृष्ठे 'तरोभिः' इति प्रगाथे कालेये सप्तदशबृहत्य इति द्वयोर्मेलने चतुस्त्रिंशद्भवन्ति पूर्वोक्तैः षड्भिः पञ्चभिश्च मिलित्वा सर्वाः पञ्चचत्वारिंशद्बृहत्यः। पूर्वोक्तरथन्तरबृहतोरन्यतरस्मिन्प्रयोगेऽवशिष्टा द्वादश ककुभस्त्रयोविंशतिषु गायत्रीषु मध्ये चतसृभिर्गायत्रीभिर्मिलित्वा द्वादश बृहत्यो भवन्ति। तन्मेलनमेवं स्वत एकैकस्याः ककुभोऽष्टाविंशत्यक्षराणि गायत्र्याश्चैकस्मिन् पादे अष्टावक्षराणि तानि मिलित्वा षड्विंशदक्षरैरेका बृहती सम्पद्यत एवं द्वादश बृहत्योऽपि योजनीयाः। तदेवं पञ्चचत्वारिंशद्बृहतीभिः सप्तपञ्चाशद्बृहत्यो भवन्ति। एता अवशिष्टैकोनविं-

शतिर्गायत्रीणां सप्तपञ्चाशत्पादैर्मिलित्वा तावत्संख्याकास्त्रिष्टुभः स्युः । 'पवमाने प्रतुद्रव'इति तृचेऽशने तिस्रःसिद्धास्तिस्रस्त्रिष्टुभ इति माध्यन्दिनसवनगतानि सर्वाणि च्छन्दांसीत्यष्टषष्ठित्रिष्टुभो भवन्ति ।अयं त्रिष्टुप्सम्पादनप्रकारो भगवता कात्यायनेनोपग्रन्थे दर्शितः । तद्यथा 'यैरु कैश्च च्छन्दोभिरिति षष्ठित्रिष्टुभ आसां सिद्धिस्त्रयोविंशतिगायत्र्यः पञ्चचत्वारिंशतं बृहत्यो द्वादश ककुभश्चतसृभिर्गायत्रीभिस्ता बृहत्यस्ताः सप्तपञ्चाशतं तावन्त्यक्षराणि गायत्र्यस्तैस्त्रिष्टुभस्त्रिष्वास्वौशने इति' इति ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य चतुर्थः खण्डः ।

---

## अथ पञ्चमः खण्डः ।

अस्मिन् खण्डे गायत्रव्यतिरिक्तानि चत्वारि सामानि स्तूयन्ते क्रमेण तत्रादावामहीयवं स्तौति—

**प्रजापतिरकामयत बहु स्यां प्रजायेयेति स शोचन्नमहीयमानोऽतिष्ठत्स एतदामहीयवमपश्यत्तेनेमाः प्रजा असृजत ताः सृष्टा अमहीयन्त यदमहीयन्त तस्मादामहीयवम् ॥ १ ॥**

पूर्वं प्रजापतिरेकाकी सन्नकामयत 'बहु स्यां प्रजायेय' इति । स तस्यामवस्थायां स्वव्यतिरिक्तस्य कस्यचिदभावादमहीयमानोऽपूज्यमानः शोचन्नतिष्ठत् । स प्रजोत्पत्त्युपायत्वेनैतदामहीयवन्नाम सामापश्यत् । तेन प्रयुक्तेन साम्नेमा देवमनुष्यादिरूपाः प्रजा असृजत ताः सृष्टाः प्रजा अमहीयन्त अपूज्यन्त स्वाभिः प्रजाभिः । यदमहीयन्त येन साम्ना सृष्टास्तस्मादामहीयवमिति शब्दसामान्येन स्तुतिः । अमहीयुना प्रजापतिना दृष्टत्वात् आमहीयवमिति तन्नाम सम्पन्नमित्यर्थः॥१॥

अथोक्तसाम्नः 'स्तौषे' इति निधनं प्रजापतेः श्रैष्ठ्यसाधनत्वेन प्रशंसति—

**ता अस्मात्सृष्टा अपाक्रामꣳस्तासान्दिवि सद्भूम्याददइति प्राणानादत्त ता एनं प्राणेष्वात्तेषु पुनरुपावर्त्तन्त ताभ्य उग्रꣳशर्म्म महिश्रव इति पुनः प्राणान् प्रायच्छत्ता अस्मादुदेवायोधꣳस्तासाꣳ स्तौष इति**

मन्यूनवाऽटणात्ततो वै तस्मै ताः श्रैष्ठयायातिष्ठन्त ॥२॥

ताः सृष्टाः प्रजा अस्मात् स्रष्टुः सकाशादपाक्रामन्नपागच्छन् । स प्रजापतिस्तासामपगतानां प्राणान् 'दिविसद्' इति पादेनादत्त–आत्तवान् । ताः स्वीयेषु प्राणेषु चक्षुरादिष्वात्तेषु प्रजापतिना स्वीकृतेषु पुनरेनमुपावर्त्तन्तोपागमन्। ताभ्यः उपावृत्ताभ्यः 'उग्रꣳशर्म्म' इति पादेन पुनः प्राणान् प्रायच्छत् । ता लब्धप्राणा अस्मात्पूर्वं प्राणापहारात्कारणादुदयोधन्नेवोन्मुखा एवायुध्यन्त। केचित् 'अस्मा' इति पठन्ति। अस्मा एनं प्रजापतिमुद्दिश्येत्यस्यार्थः । स प्रजापतिरेषां प्राणापहारजन्यो मन्युः सञ्जात इति बुध्वा 'स्तौष' इति स्तुतिप्रकाशेन निधनेन तासां मन्यूनवाशृणान्निकृत्य हिंसितवान् । ततः खलु कारणान्मन्यूपगमादस्मै प्रजापतये श्रैष्ठयायातिष्ठन्त समजानत ॥ २ ॥

अथ विदुषः फलमाह—

तिष्ठन्तेऽस्मै समानाः श्रैष्ठयाय य एवँ वेद ॥ ३ ॥

स्पष्टोऽर्थः ॥ ३ ॥

पुनस्तदेव प्रशंसति—

प्रजानाञ्च वा एषा सृष्टिः पापवसीयसश्च विधृतिर्यद्दामहीयवम् ॥ ४ ॥

यदेतद्दामहीयवमिति तदेषां प्रजानाञ्च सृष्टिर्वै सृष्टिकर्तृसृष्टिसाधनभूता च। सृष्टेः स्त्रीलिङ्गमपेक्ष्यैषेति साम्नः स्त्रीलिङ्गनिर्द्देशः । किञ्चामहीयवमेव पापवसीयसञ्च पापस्य पुण्यस्य च विधृतिर्विधरणी विवेचनीत्यर्थः ॥ ४ ॥

अथ विदुषः फलम्—

विधृतिः पापवसीयसो भवति य एवँ वेद॥ ५ ॥

स्पष्टम् ॥ ५ ॥

एवमामहीयवं प्रशस्य रौरवयौधाजयौशनानि प्रशंसितुमाख्यायिकामाह—

देवा वै यशस्कामाः सत्रमासताग्निरिन्द्रो वायुर्मखस्तेऽब्रुवन्यन्नो यशऽऋच्छात्तन्नः सहासदिति तेषाम्मखं यश आर्च्छत्तदादायापाक्रामत्तदस्य प्रासहादित्सन्त तं पर्य्ययतन्त स्वधनुः प्रतिष्टभ्यातिष्ठत्तस्य धनुरार्त्निरूर्द्ध्वा पतित्वा शिरोऽच्छिनत्स प्रवर्ग्योऽभवद्यज्ञो वै मखो यत्

**प्रवर्ग्यं प्रवृञ्जन्ति यज्ञस्यैव तच्छिरः प्रतिदधाति ॥ ६ ॥**

पूर्वमग्न्यादयश्चत्वारो देवा यशोऽर्थे सत्रमासत तस्मिन् समये ते देवा एवमब्रुवन् । यद्यशो नोऽस्माकम्मध्ये प्रथमं ऋच्छात् प्राप्नुयात्तद्यशो नोऽस्माकं सह साधारणमसद्भवत्विति समयं कृत्वा सत्रमासत । तेषाम्मध्ये मखो दैवं यश आर्च्छत् प्राप्नोत् । स तद्यश आदायापाक्रामत् । अस्यापगतस्य तद्यशः प्रासह्य प्रसह्येन बलात्कारेणादित्सन्त तदर्थन्तं पर्य्ययतन्त परितोऽयुध्यन् । स धन्वी धनुः प्रतिष्टभ्य शिर आततज्यं कृत्वाऽतिष्ठत् । तस्य धनुर्ज्या वल्मीका भूमावुत्पतिता अखादन्त । ततो धनुरार्त्निर्धनुषः कोटिरूर्ध्वा पतित्वा तस्य मखस्य शिरोऽच्छिनत् । उपदीकानां धनुर्ज्याच्छेदः शाखान्तरतोऽवगन्तव्यः ।तथाहि तैत्तिरीयकं 'स धनुः प्रतिष्टभ्यातिष्ठत्ता उपदीका अब्रुवन्वरं वृणामहा अथ वरमिमं रन्धयाम यत्र क्व च स्वानान्तदपोऽभितृणदामेति तस्मादुपदीका यत्र क्व च स्वनन्ति तदपोऽभिवृन्दन्ति वरे वृते ह्यासां तस्य ज्यामप्यादँस्तस्य धनुर्विप्रमाणं शिर उदवर्त्तयत्' इति । स तच्छिरः प्रवर्ग्योऽभवत् । यज्ञो वै मख उच्यते यत् प्रवर्ग्यं प्रवृञ्जन्ति यजमानस्य तत्तेन यज्ञस्य छिन्नं शिरः प्रतिदधाति । स तत् कुर्वन्त्येतत् प्रासङ्गिकम् । अयमर्थः सर्वोप्यध्वर्य्युब्राह्मणे स्पष्टमाम्नायते 'देवा वै सत्रमासत ऋद्धिपरिमितं यशस्कामास्तेऽब्रुवन्यन्नः प्रथमं यश ऋच्छात् सर्व्वेषान्नस्तत्सहासत्' इत्यादिना ॥ ६ ॥

अथ रौरवं स्तूयते ।

**तद्देवा यशो व्यभजन्त तस्याग्नी रौरवं प्रावृहत ॥७॥**

तद्यशो देवा व्यभजन्त तस्याग्नी रौरवं प्रावृहतेति । तद्यशो देवा व्यभजन्त तस्य विभक्तस्य रौरवं भागं अग्निः पृथक् चकार ॥ ७ ॥

एतावता किं यशो लब्धमित्यत आह—

**तद्वै स पशुवीर्य्यं प्रावृहत पशवो वै रौरवम् ॥ ८ ॥**

तत्तेन रौरवविभागेनैव सोऽग्निः पशुवीर्य्यं पशुलक्षणं सामर्थ्यमेव प्रावृहत । तदपि कुत ? इत्याह रौरवं साम पशवः खलु तत्र पशुवाचकेडानिधनोपेतत्वादित्यभिप्रायः ॥ ८ ॥

**पशुमान् भवति य एवँ वेद ॥ ९ ॥**

विदुषः स्तुतिः ॥ ९ ॥

अथ रौरवस्याग्निसम्बन्धं दर्शयति—

**अग्निर्वै रुरस्तस्यैतद्रौरवम् ॥ १० ॥**

रूरू इति शब्दायमानो दहतीति रूरोऽग्निस्तत्सम्बन्धाद्रौरवं साम ॥ १० ॥

प्रकारान्तरेण रौरवसंज्ञां विब्रुवन् स्तौति—

**असुरा वै देवान् पर्य्ययतन्त तत एतावग्नी रूरौ विष्वञ्चौ स्तोभावपश्यत्ताभ्यामेनान् प्रत्यौषन्ते प्रत्युष्यमाणा अरवन्त यदरवन्त तस्माद्रौरवम् ॥ ११ ॥**

पूर्वं हि देवानसुराः पर्य्ययतन्त परितोऽयुध्यन्त । ततोऽग्नेरेतौ रूरौ विष्वञ्चौ सर्वतो व्याप्तौ 'ऊहो ३ 'ऊवाऽण्यया औ ३ होवा'इति द्वौ स्तोभावपश्यत्ताभ्यामेनान्प्रत्यौषददहत्। ते प्रत्युष्यमाणा अरवन्त शब्दमकुर्वन्। यदरवन्त तत्तस्माद्रौरवन्नाम सम्पन्नम्। रूरूरवयोरुभयत्र रेफसाम्याद्रूरसम्बन्धाद्रवसम्बन्धाच्च रौरवमिति नाम भवति ॥ ११ ॥

इन्द्रस्य यौधाजयाख्ययशःसम्बन्धमाह—

**अथेन्द्रो यौधाजयं प्राबृहत तद्वै स व्वज्रं प्राबृहत व्वज्रो वै यौधाजयम् ॥ १२ ॥**

अथेत्यानन्तर्य्यार्थे। इन्द्रो यौधाजयं यौध्यान् अजयत । वज्रभावकल्पनमेवं वज्रस्यैव परिकुर्वद्भिस्तेन तत्कार्य्यसिद्धेर्यौधाजयस्य वज्रकारणत्वमेव वज्रं वाक् इत्यनेनोच्यते ॥ १२ ॥

अथ विदुषः फलमाह—

**व्वज्रं भ्रातृव्याय प्रहरति य एवँ व्वेद ॥ १३ ॥**

स्पष्टोऽर्थः ॥ १३ ॥

अथ निर्वचनद्वारा तदेव प्रशंसति।

**इन्द्रो वै युधाजित्तस्यैतद्यौधाजयम् ॥ १४ ॥**

युधा युद्धेन शत्रून् जयतीतीन्द्र एव युधाजित् तस्य सम्बन्धि तत् साम यौधाजयम् ॥ १४ ॥

अथ निर्वचनान्तरप्रदर्शनेन प्रशंसति—

**युधा मर्य्या अजैष्मेति तस्माद्यौधाजयम् ॥ १५ ॥**

हे मर्य्या मर्त्याः, युधा अजैष्म असुरानितीन्द्रोऽब्रवीदिति शेषः। तस्माद्युधाजस्य हेतुत्वात् यौधाजयमिति नाम सम्पन्नमिति स्तुतिः ॥१५॥

अथ वायोरौशनसम्बन्धमाह—

**अथ वायुरौशनं प्राबृहत ॥ १६ ॥**

स्पष्टम् ॥ १६ ॥

औशनस्वीकार एव प्राणाख्यवीर्य्यस्वीकार इत्याह—

तद्वै स प्राणवीर्यँ प्रावृहत प्राणा वा औशनम् ॥ १७ ॥

औशनसामभागपृथक्करण एव प्राणाख्यस्य वीर्य्यस्य पृथक्कारः। तत्र हेतुः, औशनं साम प्राणाः खलु तस्मिन् स्वरनिधनसद्भावात् स्वरस्य प्राणनिरोधमन्तरेणोच्चारणानुपपत्तेः ॥ १७ ॥

विदुषः स्तुतिः—

सर्व्वमायुरेति य एवँ व्वेद ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

औशनसंज्ञानिर्वक्ति—

व्वायुर्व्वा उशनॐस्तस्यैतदौशनम् ॥ १९ ॥

उशन् वशकान्तावित्यस्य कर्म्मणि रूपम्। काम्यते सर्वैःप्राणरूपत्वेनेत्युशन्वायुरेव तस्य सम्बन्धित्वादौशनामिति साम्नो नाम सम्पन्नम्॥१९

उशन् सम्बन्धादौशनमित्युक्त्वोशनसः सम्बन्धादौशनमाह—

उशना वै काव्योऽसुराणां पुरोहित आसीत्तं देवाः कामदुघाभिरुपामन्त्रयन्त तस्मा एतान्यौशनानि प्रायच्छन् कामदुघा वा औशनानि ॥ २० ॥

पूर्वं मुशनानाम कवेः पुत्रोऽसुराणां विरोचनादीनां पुरोहित आसीत्तं देवाः कामदुघाभिर्गोभिरुपामन्त्रयन्त। कथन्ताभिरनुमन्त्रणन्तत्राह। अस्मा उशनस एतान्यौशनानि सामानि कामधेनुसदृशानि प्रायच्छन्। तेषां कामधुक्त्वप्रसिद्धिरुच्यते 'कामदुघा'इत्यादिना ॥२०॥

अथ विदुषः स्तुतिः—

कामदुघा एनमुपतिष्ठन्ते य एवँ व्वेद ॥ २१ ॥

य एवं जानाति-एनं कामदुघा गाव उपतिष्ठन्ते समीपं प्राप्नुवन्ति दोहनशीलबहुगोयुक्तो भवतीत्यर्थः ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य पञ्चमः खण्डः।

---

## अथ षष्ठः खण्डः।

एवं माध्यन्दिनं पवमानमुक्त्वा बृहद्रथन्तरं विवक्षुः प्रजापतेर्मनसि बृहतः प्रादुर्भावमाह—

प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तूष्णीं

मनसा ध्यायत्तस्य यन्मनस्यासीत्तद्बृहत्समभवत् ॥१॥

बहुभावाय प्रकर्षोत्पत्तिं कामयमानः स प्रजापतिस्तूष्णीम्भिर्ध्या- पारम्मनसाऽन्येण यदचिन्तयत्तस्य ध्यातुर्मनसि यदासीत्तद्बृह- त्साम समभवत् सम्भूतं सामत्वेन परिणतमित्यर्थः ॥ १ ॥

अथान्तःस्थितगर्भस्य प्रजननार्थं प्रजापतेर्ध्यानमाह—

स आदधीत गर्भो वै मेऽयमन्तर्हितस्तं वाचा प्रजनया इति ॥ २ ॥

स प्रजापतिरादधीत आध्यायत्। ध्यानप्रकार उच्यते मेऽन्त रयं गर्भो निहितस्तं खलु गर्भं वाचा साधनेन प्रजननायोत्पाद- यामीति ॥ २ ॥

अथ वाक्सृष्टिमाह—

स वाचं व्यसृजत सा वाग्रथन्तरमन्वपद्यत ॥ ३ ॥

स ध्यायन् प्रजापतिर्वाचं व्यसृजत सा च सृष्टा वाक् रथन्तरमनु रथन्तरसामानुसृज्य पश्चादपद्यतागच्छदुत्पन्नाऽऽसीत् ॥ ३ ॥

अथ वाक्सम्बन्धेन रथन्तरशब्दनिर्वक्ति—

रथम्मर्त्याः क्षेप्लातारीदिति तद्रथन्तरस्य रथन्तरत्वम् ॥४॥

हेमर्त्या मर्त्याः, रथन्तरवद्देवानां वाहनभूतां वाचामिदं साम क्षेप्ला क्षितभावेनातारीदागच्छदितीन्द्रोऽब्रवीत्। तत्तेन रथन्तरस्य रथ- न्तरत्वमायातम्। इन्द्रस्योक्तप्रकारकवचनमेव तच्छब्दप्रवृत्तिनिमित्तभू- तमित्यर्थः ॥ ४ ॥

अथ बृहत उत्पत्तिं सनिर्वचनान्दर्शयति—

ततो बृहदनु प्राजायत बृहन्मर्त्या इदꣳ स ज्योग- न्तरभूदिति तद्बृहतो बृहत्त्वम् ॥ ५ ॥

ततो रथन्तरसृष्टेरनु पश्चाद् बृहत्साम प्राजायत। स इति लिङ्गव्य- त्ययः। तदिदं बृहत्साम हे मर्त्या ज्योक् चिरकालं रथन्तरोत्पत्त्यन- न्तरकालपर्य्यन्तमतः प्रजापतेर्मनस्यभूत् स्थितमासीदिति यदिन्द्रोऽ- ब्रवीत् तद्बृहत्साम्नो बृहत्त्वं सम्पन्नम् ॥ ५ ॥

अथ बृहत्प्रजापतेर्ज्येष्ठपुत्रत्वेन प्रशंसति—

यथा वै पुत्रो ज्येष्ठ एवं बृहत्प्रजापतेः ॥ ६ ॥

यथा ज्येष्ठपुत्रो मनुष्याणामेवं बृहत्प्रजापतेर्ज्येष्ठपुत्रस्थानीयं भवति ६॥

ननु रथन्तरात्पश्चाद् बृहदुत्पन्नं कथं ज्येष्ठपुत्रत्वमस्येति तत्राह—

**ज्येष्ठब्राह्मणं वा एतत् ॥ ७ ॥**

ज्येष्ठं प्रथमं ब्राह्मणं यस्य बृहत एतत् ज्येष्ठब्राह्मणम् । तथाहि रथन्तरसृष्टिप्रकाशकात्स वाचं व्यसृजत सा वाग्रथन्तरमन्वपद्यत तद्रथन्तरं मय्यां इत्यादिकाद् ब्राह्मणात्प्रथमं बृहत्सामप्रकाशकं तस्य यन्मनस्यासीत्तद्बृहत् समभवदिति ब्राह्मणं पूर्वभावित्वाज्ज्येष्ठम् । अतः पश्चादुत्पन्नस्यापि बृहतो रथन्तरादपि ज्येष्ठपुत्रत्वं युक्तम् ॥ ७ ॥

अथ विदुषः फलम्—

**प्रज्यैष्ठ्यमाप्नोति य एवँ वेद ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

एवं बृहतो ज्येष्ठत्वं सिद्धं कथं रथन्तरस्य पूर्वप्रयोगप्राप्तिरिति कश्चिद् ब्रह्मवादिनां प्रश्नमवतारयति—

**यन्न्वित्याहुर्बृहत्पूर्व्वं प्रजापतौ समभवत्कस्माद्रथन्तरं पूर्व्वँ योगमानश इति ॥ ९ ॥**

यद्यदि नु-अथ-इति-एवं वक्ष्यमाणप्रकारेणाहुर्ब्रह्मवादिनः । इति शब्दनिर्दिष्टमर्थं विवृणोति । बृहत्साम पूर्वं प्रजापतौ सम्भूतम् । कस्मात्कारणाद्रथन्तरं सामोभयसामसु अहःसु पृष्ठ्यषडहादिषु सर्वेषु पृष्ठ्येषु पूर्वं योगमानश इति प्रयोगं प्राप्नोति ॥ ९ ॥

तस्य परिहारमाह—

**बृहदेव पूर्व्वँ समभवद्रथन्तरन्तु पूर्व्वँ सृष्टमासृजत तस्मात्पूर्व्वँ योगमानशे ॥ १० ॥**

यद्यपि बृहदेव पूर्वं प्रजापतेर्मनसि समभवत् । न पितुर्विशेषोऽस्ति रथन्तरं पूर्वं सृष्ट्या उत्पत्त्या असृजत सृष्टमभूत् । तस्मादिति तस्यैवोपसंहारः ॥ १० ॥

अथ ज्योगामयाविनः प्रयोग उभेऽपि कार्य्ये इति विवक्षुराह—

**तयोः समानन्निधनमासीत्तस्मिन्नातिष्ठेतान्त आजिमैतां तयोर्हसिति बृहत्प्राणमुदजयदसिति रथन्तरमपानमभिसमवेष्टत ॥ ११ ॥**

पूर्वं द्वयोर्बृहद्रथन्तरयोः समानं निधनमासीत् । तस्मिन्नेकस्मिन्निधने नातिष्ठेतां न समजानताम् । ममैवेदम् ममैवेदमिति कलहमकुरुतान्तदर्थन्त आजिं संग्रामं समेतां समगच्छतम् । तयोर्मध्ये बृहत् स्वेन निधनेन 'हस्' इत्यनेन प्राणमुदजयत् जितवत् । रथन्तरन्तु स्वेन-

'अस्' इतिनिधनेनापानमनन्तरमाभिसमवेष्टत समावृणोत् । अनेनोभयत्रानुगतं सकारमेव पूर्वन्निधनमुभयोरासीदिति मन्तव्यम् ॥ ११ ॥

ज्योगामयाविने ते उभे विदधाति—

**प्राणापानौ वै बृहद्रथन्तरे ज्योगामयाविन उभे कुर्य्यादपक्रान्तौ वा एतस्य प्राणापानौ यस्य ज्योगामयति प्राणापानावेवास्मिन्दधाति ॥ १२ ॥**

'हस्'इति निधनस्य प्राणमुदजयद्धेतुत्वात्तन्निधनं बृहत्सामापि प्राण एव । अपानसंवेष्टनहेतुत्वात्'अस्'इति निधनस्य तद्युक्तं रथन्तरमपानम् । तथा सति यस्य ज्योगामयति तस्य प्राणापानावपक्रान्तौ खलु । अतस्तस्य प्रयोग उभे बृहद्रथन्तरे कुर्य्यात् । तेनास्मिन् रोगिणि प्राणापानावेव दधाति पुनः स्थापयति । माध्यन्दिने पवमाने बृहतीषु रथन्तरं कार्य्यं बृहत्सामपृष्ठं कार्यमिति तयोर्व्यवस्था ॥ १२ ॥

अथ बृहद्रथन्तरप्रसङ्गात्तद्विषयं कञ्चित्प्रश्नमुपाक्षिपति—

**यन्निवत्याहुरुभे बृहद्रथन्तरे बहिर्णिधने कस्माद् बृहद्बहिर्णिधनानि भजतेऽन्तर्णिधनानि रथन्तरमिति॥१३॥**

हस् अस्' इति बृहद्रथन्तरयोरुभयोर्बहिर्निधनत्वात् कथं ? बार्हतेष्वहःसु श्यैतादीनि बहिर्निधनानि प्रयुज्यन्ते रथन्तरेष्वन्तर्निधनानि प्रयुज्यन्ते ॥ १३ ॥

रथन्तरेष्वन्तर्निधनानि नौधसादीनि यदि विरुद्धमित्याक्षिपेयुस्तेषामुत्तरम्—

**प्राणो बृहत्तस्माद्बहिर्णिधनानि भजते बहिर्हि प्राणोऽपानो रथन्तरं तस्मादन्तर्णिधनानि भजतेऽन्तर्ह्यपानः ॥ १४ ॥**

बृहतः प्राणरूपत्वाद्बहिर्निधनभाक्त्वं युक्तन्तत्र हेत्वभिधानं 'बहिर्हि प्राण' इति रथन्तरं त्वपान एव तस्मादन्तर्वर्त्यपानरूपत्वादन्तर्निधनभाक्त्वम् । तस्मादित्यस्य विवरणमन्तर्ह्यपान इति ॥ १४ ॥

निधनवैषम्ये हेत्वन्तरमाह—

**महावृक्षौ वै बृहद्रथन्तरे निधनेन समर्प्ये ॥१५॥**

बह्वाश्रयत्वाद्बृहद्रथन्तरे महावृक्षत्वेन निरूप्येते । अतस्ते निधनेन विषमेण समर्प्ये सङ्गमयितव्ये ॥ १५ ॥

निधनसाम्ये दोषमाह—

**यद्वै महावृक्षौ समृच्छेते बहु तत्र विभग्नं प्रभग्नं शेते ॥ १६ ॥**

यद्यत्र खलु महावृक्षौ समृच्छेते। तत्र बहुशाखास्कन्धादिकं परस्परसंघर्षणाद्विभग्नं प्रभग्नं च सञ्छेते भूमौ वैषम्ये तु नोक्तदोष इत्यर्थः॥१६॥

अथ बृहद्रथन्तरयोरन्यतरप्रयोगेऽप्यन्तरस्यापि फलसिद्ध्यै तयोर्द्वयोर्माहात्म्यं मनसा ज्ञातव्यमित्याह—

**ऐरं वै बृहदैडंरथन्तरम्मनो वै बृहद्वाग्रथन्तरं साम वै बृहदृग्रथन्तरं प्राणो वै बृहदपानो रथन्तरमसौ वै लोको बृहदयंरथन्तरमेतानि मनसान्वीक्ष्योद्गायेत्क्लृप्ताभ्यामेवाभ्यामुद्गायति ॥ १७ ॥**

यद्बृहत्सामतदैरं वै'इरा—अन्नं तत्सम्बन्धि तत्साधनमित्यर्थः। यद्रथन्तरन्तदैडं वै पशुसाधनं खलु शिष्टं सुज्ञानम्। एतानीरादिरूपाण्येतेयोः सम्बन्धीनि मनसाऽन्वीक्ष्य सम्भाव्य पश्चादेते उद्गायेत्।एवं कुर्वन्नुद्गाताऽन्यतरप्रयोगेऽपि क्लृप्ताभ्यां प्रयुक्ताभ्यामुभाभ्यामुद्गायति। उभयोरुद्गाने यत् फलन्तदन्यतरेणापि लभत इत्यर्थः। एतेषां मनसान्वीक्षणस्यान्यतरप्रयोगेऽपि कर्त्तव्यत्वं सूत्रकारोऽप्याह 'बृहता रथन्तरेण वा स्तोष्यमाणः प्राक् स्तोमयोगाद्दश व्याहृतीर्मनसा ध्यायेदैरमैडमिती'ति ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
षष्ठः खण्डः।

---

## अथ सप्तमः खण्डः।

बृहद्रथन्तरयोः स्तुतिप्रकारं समुन्नीय दर्शयति—

**पशवो वै बृहद्रथन्तरे अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौत्यष्टाशफांस्तत्पशूनवरुन्धे ॥ १ ॥**

बृहद्रथन्तरे उभे अपि पशवो वै तयोरनुष्ठानात् सिद्धेः। अत उभयोः प्रथमाया ऋचः 'अभित्वा'त्वामिद्धि' इत्यनयोर्ऋचोरित्यर्थः। अष्टाक्षरेणादितोऽष्टाक्षरैः प्रस्तौति प्रस्तावभागं गायेत्। 'अष्टाक्षरसंख्या ऋगक्षरसंख्या ऋगक्षरमात्रविषया न स्तोभादिविशिष्टविषया 'अभित्वाशूरनोनुमो वा' इति रथन्तरे 'औ हो ई त्वामिद्धि हवामहा३प' इति बृहती-

ति विभागसंबन्धेनाष्टाक्षरप्रस्तावेनाष्टाशफान् पशून् प्राप्नोति यजमानः॥१॥

अथोत्तरयोर्ऋचोः प्रस्तावभागमाह—

**द्व्यक्षरेणोत्तरयोर्ऋचोः प्रस्तौति द्विपाद्यजमानो यजमानमेव यज्ञे पशुषु प्रतिष्ठापयति ॥ २ ॥**

रथन्तरस्योत्तरयोर्ऋचोः 'ईशानमस्य जगतः 'न जातो न जनिष्यते' इत्यनयोर्ऋचोः 'ईशो वा न जीवे'ति द्व्यक्षरेण प्रस्तावभागं गायेत्। तथा च बृहति 'औ हाई तु वा३मे औहाई महा३ प' इति द्व्यक्षरेण प्रस्तौति। द्व्यक्षरस्योक्ताष्टाक्षरं मिलित्वा प्रशस्यते। यजमानोऽपि द्विपात्तमेव यज्ञे यज्ञफलभूतेषु पशुषु प्रतिष्ठापयति प्रस्तोता ॥ २ ॥

अथ प्रस्तावमुक्त्वा रथन्तरस्य प्रतिहारभागनियममाह—

**पञ्चाक्षरेण रथन्तरस्य प्रतिहरति पाङ्क्ताᳫंस्तत्पशूनवरुन्धे ॥ ३ ॥**

आ ईशानमा२३ ईन्द्रा३'इति प्रथमायां 'न जातो ना२ ३ जा२' इति मध्यमायां 'गव्यन्तस्त्वा२ ३हा२'इत्युत्तमायामिति रथन्तरस्य तिसृष्वपि प्रतिहारानियमात्तत्तेन पञ्चाक्षरप्रतिहारेण पाङ्क्तानवयवगतपञ्चसंख्यायोगेन पाङ्क्तसम्बन्धान् पशूनवरुन्धे यजमानः। रोमाणि त्वङ्मांसास्थिमज्जेति पशूनां पञ्चावयवाश्चत्वारः पादा आत्मा चेति वा॥ ३ ॥

अथ बृहतः प्रतिहारभागमाह—

**चतुरक्षरेण बृहतः प्रतिहरति चतुष्पदस्तत्पशूनवरुन्धे ॥ ४ ॥**

बृहतः प्रथमायां 'त्वां काष्ठा ४ औ होवा'इति। मध्यमायां'महस्तवा ३४ औहो वा'इति। उत्तमायां 'सत्रावाजा ३४ औहो वा'इति ॥ ४ ॥

अथ बृहद्रथन्तरयोः ककुबुत्तरा गानं विदधाति—

**न वै बृहन्न रथन्तरमेकञ्छन्दो यच्छत्ततः ककुभावुत्तरे उपादधुस्तस्माद्बृहती प्रथमा ककुभावुत्तरे तस्माद्बृहद्रथन्तरे एकर्चेन कुर्वन्ति न हि ते एकञ्छन्दोऽयच्छत् ॥ ५ ॥**

बार्हते प्रगाथे बृहद्रथन्तरे गीयेते तत्र पूर्वा बृहत्युत्तरा विष्टारपाङ्क्तिः। एवञ्च सत्युक्तप्रगाथे एकां बृहतीं द्वे ककुभे च सम्पादयितुमाह। बृहत्साम रथन्तरं वा एकं छन्दो न खल्वयच्छत्-नियन्तुन्न शा-

क्रोत्। ततः कारणादुत्तरे ऋचौ ककुभौ सम्पाद्योपादधुः पूर्वे ऋचः। यद्यस्मादेवन्तस्मादिदानीन्तनैरपि बृहती प्रथमा कार्या ककुभावुत्तरे। तत्प्रकार एवं, बृहती तत एव सिद्धा तस्याश्चतुर्थं पादं पुनरावर्त्य विष्टारपंक्त्योश्च पादद्वयं मिलित्वा एकाङ्ककुभङ्कुर्य्यात्। तस्या एव द्वितीयपादं पुनरावर्त्यावशिष्टपादद्वयेनान्याङ्ककुभामिति। तस्मादेव बृहद्रथन्तरे एकर्च्चेनैकच्छन्दस्केन कुर्वन्ति। तस्मादित्युक्तविवरणम् ॥ ५ ॥

'न हि त' इत्यादि बृहद्गाने कश्चिद्विशेषमाह—

नव बृहतो रोहान् रोहति नव प्राणाः प्राणानेवावरुन्धे ॥ ६ ॥

बृहतः साम्नो नव रोहानारोहणान्युच्छ्रायानारोहत्यारोहत् प्राणानां नवत्वमसकृदुक्तं सङ्ख्यासाम्यात्। नव प्राणान् यजमान आत्मनि तद्दधाति ॥ ६ ॥

अथ तृचे तान् विभज्य दर्शयति—

त्रीन् प्रथमायाᳫँ रोहति भूतं भवद्भविष्यत्तानेवावरुन्धे त्रीन् मध्यमायाᳫँ रोहत्यात्मानं प्रजां पशुᳫँस्तानेवावरुन्धे त्रीनुत्तमायाᳫँरोहति त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठति ॥ ७ ॥

प्रथमायामृचि त्रीन् रोहति द्वितीयायां तृतीयायाञ्च त्रीनिति नव रोहाः स्युः। प्रथमायां रोहत्रयेण भूतवर्त्तमानभविष्यत्कालीना भोगाः सन्ति तानेव यजमानोऽवरुन्धे। शिष्टं सुज्ञानम् ॥ ७ ॥

उक्तार्थवेदनपूर्वकारोहणफलमाह—

सर्व्वान् कामानवरुन्धे य एवँ विद्वान् बृहतो रोहान्रोहति ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

रथन्तरे उद्गातृप्रस्तोतृभागयोर्म्मध्ये व्यवधानायोद्गातुः कञ्चिद्व्यवधानं विधत्ते—

वज्रेण वा एतत्प्रस्तोतोद्गातारमभिप्रवर्त्तयति यद्रथन्तरं प्रस्तौति समुद्रमन्तर्द्धायोद्गायेद्वागित्यादेयं वाग्वै समुद्रः समुद्रमेवान्तर्दधात्यहिᳫँसायै ॥ ९ ॥

प्रस्तोता रथन्तरन्तत्प्रस्तावभागं प्रस्तौतीति यत्? एतद्वज्रेणैव-

प्रस्तोतोद्गाताच प्रवर्त्तयति प्रेरयति । अतस्तत्परिहाराय समुद्रमन्त-र्ध्याय व्यवधायोद्गायेदुद्गाता । समुद्रस्यान्तर्धातुमशक्यत्वात्तदुपाय उच्यते वागिति । वागेवेदमित्यादेयं मनस्याधानं कर्त्तव्यं ध्यातव्य-मित्यर्थः । वाचः समुद्रस्य च कः प्रसङ्ग ? इत्यत्राह यः समुद्रः स वाग्वै । समुद्रवत् सर्वपदार्थानां स्वान्तर्निधानाद्वाक् समुद्र इत्युच्यते । तथा च वाङ्निधानेन समुद्रमेवान्तर्निहितवान् भवत्यहिंसायै ॥ ९ ॥

अथोक्तदोषपरिहाराय तत्र कञ्चिद्विशेषमाह—

**बलवद्गेयं वज्रमेवं प्रवृत्तं प्रत्युदुगृह्णाति ॥ १० ॥**

बलवदिति स्पष्टाक्षरमुद्गात्रा गातव्यम् । तथा सत्यस्य दौर्बल्याभावा-त्प्रस्तावरूपं वज्रमेवोदूगृह्णात्यूर्द्धमेव स्तभ्नाति ॥ १० ॥

तत्रैवोपायान्तरमाह—

**बलवला कुर्वता गेयमभिलोभयतेव वज्रमेवाभि-लोभयति ॥ ११ ॥**

बलवला कुर्वता गेयं स्तोभवता गेयमभिलोभयता—इवेति । अभि-लोभनं हिंसनं वज्रमभिलोभयामीति ध्यायता गेयमित्यर्थः । तथा सति वज्रमेवाभिलोभयति हिनस्ति ॥ ११ ॥

रथन्तरगाने नियमविशेषमाह—

**क्षिप्रङ्गेयꣳ स्वर्गस्य लोकस्य समष्ट्यै ॥ १२ ॥**

क्षिप्रमविलम्बेन गातव्यम् । तच्च स्वर्गस्याविलम्बेन समष्ट्यै सप्राप्त्यै भवति ॥ १२ ॥

अत्रैव नियमविशेषमाह—

**देवरथो वै रथन्तरमक्षरेणाक्षरेण प्रतिष्ठापयतोद्गेय-मरेणारेण हि रथः प्रतितिष्ठति ॥ १३ ॥**

रथन्तरं साम देवानां वै रथः । तदक्षरेणाक्षरेण प्रतिष्ठापयतोद्गेयम् । हि यस्माद्रथः अरेणारेण रथाङ्गस्य शङ्कवो नेम्याधारभूता अराः प्र-त्यरं हि रथः प्रतितिष्ठति ॥ १३ ॥

अथ तस्य भूस्पर्शगानं विधत्ते—

**यो वै देवरथमनन्वालभ्यातिष्ठत्यवास्मात्पद्यत इयं वै देवरथ इमामालभ्योद्गायेन्नास्मादवपद्यते ॥ १४ ॥**

यो हि देवरथं रथन्तरमनन्वालभ्यालम्भनं स्पर्शनमकृत्वा आतिष्ठ-त्यारोहति सोऽस्माद्देवरथादवपद्यतेऽधःपतति । यथा लौकिकरथमन-

घलभ्यारोहन्नवपद्यते तद्वत् । अतस्तदवलम्बनस्य क उपाय ? इत्युच्यते । इयं पृथिव्येव हि देवरथः । इयं वै लोको रथन्तर'मित्युक्तत्वात्तस्मादिमामालभ्योद्गेयम् ॥ १४ ॥

पुनस्तत्रैव कंचिन्नियममाह—

**ईश्वरं वै रथन्तरमुद्गातुश्चक्षुः प्रमथितोः प्रस्तूयमाने सम्मीलेत्स्वर्दृशं प्रतिवीक्षेत नैनश्चक्षुर्जहाति ॥ १५ ॥**

रथन्तरं साम स्तूयमानमुद्गातुश्चक्षुः प्रमथितोः प्रमाथितुमीश्वरं वै समर्थं खलु । अतस्तस्मिन् प्रस्तूयमाने चक्षुः सम्मीलेन्मुकुलितं कुर्यात् । पुनः स्वर्दृशं स्वर्दृशमिति पदं गीयमानं प्रतिवीक्षेतावलोकयेत् । एवं सत्येनमुद्गातारं चक्षुर्न जहाति नान्धो भवति ॥ १५ ॥

रथन्तराश्रयभूतायामृच्यध्ययनप्राप्तं 'तस्थुष' इति पदं निन्दित्वा प्रकारान्तरेण पठितव्यमित्याह—

**प्रजननं वै रथन्तरं यत्तस्थुष इत्याहास्थायुकोद्गातुर्वाग्भवत्यपि प्रजननꣳ हन्त्यस्थुष इति वक्तव्यꣳसुस्थुष इति वा स्थायुकोद्गातुर्वाग्भवति न प्रजननमपि हन्ति ॥ १६ ॥**

रथन्तरं साम प्रजननस्यापत्याद्युत्पादनस्य हेतुत्वात् स्वयमपि प्रजननमेव । तथा च यद्यदि तस्थुष इत्याहोद्गाता न हि तस्य वाग्रन्थन्तरात्मिका स्थायुका स्थितिस्वभावा भवति न प्रसृता । अत एव प्रजननमुद्गातुः प्रजाद्युत्पादनसामर्थ्यमपिहन्ति । कथं तस्य परिहार ? इति तत्राह । अस्थुष इति वक्तव्यन्तथोक्ते वाचामस्थायुकदोषः प्रिरिहृतो भवति । अथवा सुस्थुष इति वक्तव्यं तेनास्य रथन्तररूपाया वाचः शोभनस्थायुकत्वं भवति प्रजननमपि नपिहन्ति । अयमभिप्रायः अस्थुष इत्युक्तेरुद्गातृ रथन्तररूपा वाक् प्रसृता भवति । रथन्तरगानस्य फलरूपं प्रजननमपि न हन्ति । सुस्थुष इत्युक्तौ सुशब्दश्रवणात् प्रजननक्षयाभावेन सुप्रजननं भवति ॥ १६ ॥

अथ रथन्तरगानात्पूर्वं 'व्यस्ते गोषु' इत्ययं मन्त्रो जपतव्य इति विधित्सुराह—

**पृष्ठानि वा असृज्यन्त तैर्देवाः स्वर्गं लोकमायꣳस्तेषाꣳ रथन्तरम्महिम्ना नाशक्नोदुत्पतत् ॥ १७ ॥**

पूर्वं देवा रथन्तरादीनि षट् पृष्ठानि सृष्ट्वा रथन्तरव्यतिरिक्तै-

रितरैः प्रयुक्तैः सह स्वर्गं लोकमायन् । तेषां मध्ये रथन्तरपृष्ठं महिम्ना प्रवृद्धेन माहात्म्येन निमित्तेन तत्र तत्र विप्रकीर्णत्वेनेत्यर्थः। तेनोत्पतदपि रथन्तरं स्वर्गं गन्तुं नाशक्नोत् ॥ १७ ॥

इदानीं स्वर्गसाधनत्वेन विदधाति—

**तस्य वशिष्ठो महिम्नो विनिधाय तेन स्तुत्वा स्वर्गं लोकमैत्तान् संभृत्योद्गायेत् ॥ ॥ १८ ॥**

तस्य रथन्तरस्य महिम्नो माहात्म्यानि विप्रकीर्णानि विनिधाय विशेषेणैकत्र स्थाप्य तेन स्तुत्वा वशिष्ठः स्वर्गं लोकमैदगच्छत् । तस्मात्तन्महिम्नः संभृत्योद्गेयमितरैरपि ॥ १८ ॥

अथ गातव्यं संभृतमहिमानमन्त्रन्दर्शयति ।

**यस्ते गोषु महिमा यस्ते अप्सु रथे वा ते स्तनयित्नौ य उ ते यस्ते अग्नौ महिमा तेन सम्भव रथन्तर द्रविणवन्न एधि ॥ १९ ॥**

अस्यायमर्थः' हे रथन्तर यो यो महिमा ते तव सम्बन्धी गवादिषु अग्न्यन्तेषु विप्रकीर्णो वर्त्तते तेन सर्वेण सम्भव समर्थितं प्रवृद्धं भव । तथा भूतं सत् द्रविणवत् बहुद्रविणोपेतं सन्नोऽस्मदर्थमेधि भव समागच्छ वा ॥ १९ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यास्य सप्तमः खण्डः ।

---

## अथाष्टमः खण्डः ।

अथाष्टमनवमयोर्वामदेव्यं स्तूयते तत्रादौ निर्वचनद्वारा तत्प्रशंसति—

**अपो वा ऋत्व्यमार्च्छंस्तासां वायुः पृष्ठे व्यवर्त्तत ततो वसु वामꣳसमभवत्तस्मिन् मित्रावरुणौ पर्य्यपश्यतां तावब्रूतां वामं मर्य्या इदं देवेष्वाजानीति तस्माद्वामदेव्यम् ॥ १ ॥**

ऋत्व्यमृतुसंबन्धि प्रजननसामर्थ्यमप उदकानि खल्वाच्र्छद गछत् । तासां प्राप्तार्त्विंयानामपां वायुः पृष्ठे देशे व्यवर्त्तत–अनुप्रवृत्तोऽभूत् । ततोऽद्भ्यः सकाशात् वामं वननीयं वसु धनं समभवत् । तत्सम्भूतं धनं मित्रावरुणौ पर्य्यपश्यतां दृष्टवन्तौ दृष्ट्वा च तावब्रूताम्। किमिति ?

उच्यते। हे मर्त्या वाममिदं धनं साममलक्षणं देवेष्वाजनि उदभूदिति तस्मादेवं ताभ्यामुक्तत्वाद्वामदेव्यमिति तन्नाम सम्पन्नम्॥ १॥

अथोत्पन्नं वामदेव्यं सर्वदेवतासम्बन्धद्वारेण प्रशंसति—

**तत्परिगृह्णन्तावब्रूतामिदमविदावेदन्नौमाभ्यर्त्तिढ्व-मिति तत्प्रजापतिरब्रवीन्मद्वा एतदध्यजनि मम वा एतदिति तदग्निरब्रवीन्मा वा एतदन्नमजनि मम वा एतदिति तादिन्द्रोऽब्रवीच्छ्रेष्ठस्था वा एतदहं वः श्रेष्ठो-ऽस्मि मम वा एतदिति तद्विश्वे देवा अब्रुवन्नस्मद्देवत्यं वा एतद्यदध्योऽधि समभूदस्माकं वा एतदिति तत्प्रजा-पतिरब्रवीत्सर्व्वेषान्न इदमस्तु सर्व्वं इदमुपजीवामेति त-त्पृष्ठेषु न्यदधुः सर्व्वदेवत्यं वै व्वामदेव्यम् ॥२॥**

तद्वसु परिगृह्णन्तौ मित्रावरुणावब्रूतामिदं वस्वविदाव । आवां लब्धवन्तौ स्व अत इदं नौ—आवाभ्यामेव। अतो हे देवा अभ्यर्त्ति-ढ्वं नो अतिबाधध्वमित्यब्रूताम्।एवमुक्ते तद्वसु प्रजापतिरब्रवीत्।एतद्व-सु मदधि मत्तोऽजनि प्रादुरभूत्। अतो ममैव खल्वेतदिति। तदेव धनं प्रत्यग्निरेवाब्रवीदेतद्वसु मामनु खल्वजनि। 'अग्नेरपि' इति श्रुतेर-ग्न्यनन्तरमाप उत्पन्नास्ताभ्योऽस्योत्पन्नत्वादित्यभिप्रायः। ममैवैतदिति तथा तद्धनमिन्द्रोऽब्रवीदेतद्धनं श्रेष्ठस्था वै श्रेष्ठे तिष्ठतीति श्रेष्ठस्थाः। तिष्ठतेः'सर्वधातुभ्योऽसुन्नि'त्यसुन् प्रत्ययो व्यत्ययेन पुल्लिङ्गता। श्रेष्ठविषयं ह्येतद्वामदेव्यम्। अहञ्च वो युष्माकम्मध्ये श्रेष्ठोऽस्मि—अतो ममैवैतदिति। तदेव धनं विश्वे देवा अपां सर्वदेवत्यत्वात् तत्रोत्पन्नं धनमस्मद्देवत्यम्। अतोऽस्माकमेवेत्युक्तवान् । एवं वसुविषयं विवदमानेषु सत्सु प्रजाप-तिरब्रवीत्। इदं धनन्नः सर्वेषामस्तु । अतः सर्वमिदं धनमुपजीवा-मेति। एवमुक्ते तद्वामदेव्यं धनं पृष्ठेषु रथन्तरादिषु न्यदधुर्देवाः। अत इदं वामदेव्यं सर्व्वदेवत्यं वै ॥ २॥

एतदेव विभज्य दर्शयितुमादौ प्रजापतेर्भागं दर्शयति।

**यत्कवतीषु तेन प्राजापत्यं को हि प्रजापतिर्यदनि-रुक्तासु तेन प्राजापत्यमनिरुक्तो हि प्रजापतिः॥ ३ ॥**

यत् कवतीषु कशब्दोपेतासु 'कया न' इत्यादिषु तिसृषु गायति तेन तत्साम प्राजापत्यम्। उक्तस्यैव समर्थनं कोहीति। यः प्रजापतिः स

को हि कशब्दवाच्यः खलु कोऽहं स्यामिति 'को हं वै नाम प्रजापति'रिति तैत्तिरीयकम् । तथाऽनिरुक्तास्वस्पष्टदेवताविशेषासूक्तास्वेवर्क्षु गीयते । अतोऽप्येतत्प्राजापत्यं तत् समर्थितम् । अनिरुक्तो हिप्रजापतिरनिरुक्तत्वं सर्वरूपत्वेनावशिष्टविशेषरूपत्वाभिप्रायम् ॥ ३ ॥

अग्नेर्भागं दर्शयति ।

यद्गायत्रीषु तेनाग्नेयं गायत्रच्छन्दा ह्यग्निः ॥ ४ ॥

यत् 'कयान' इत्यादिषु गायत्रीषु गीयते तेन तदाग्नेयं भवति॥ ४ ॥

यत् पृष्ठेषु न्यदधुस्तेनैन्द्रं सर्वाणि हि पृष्ठानीन्द्रस्य निष्केवल्यानि ॥ ५ ॥

यद्यस्माद्वामदेव्यं पृष्ठेषु न्यदधुस्तेनैतदैन्द्रं भवति । कुत ? इत्याह सर्वाणि हि पृष्ठानि चत्वारीन्द्रस्य निष्केवल्यान्यसाधारणानि ॥ ५ ॥

अथास्य मित्रावरुणयोर्भागमाह ।

यन्मैत्रावरुणोऽनुशंसति तेन मैत्रावरुणम् ॥६॥

यद्यस्मान्मैत्रावरुणदैवत्यशस्त्रे वामदेव्यमनुशंसति तेन मैत्रावरुणमिति 'तेन वामदेव्यमग्नेर्गायत्र्यभवादिति' श्रुतेः ॥ ६ ॥

अथेन्द्रस्य भागं दर्शयत्यथैतस्य वैश्वदेवत्वमाह—

यद्बहुदेवत्यमुत्तमं पदं तेन वैश्वदेवं सर्वेष्वेव रूपेषु प्रातितिष्ठति ॥ ७ ॥

यद्यस्मादुत्तमं पदं वामदेव्यतृचस्यान्तिमं 'शतं भवा स्यूतये' इत्येतत्पदं बहुदेवत्यन्तेन तद्वैश्वदेवमित्थमुक्तरीत्या सर्वेष्वेवरूपेषु सर्वदेवतासम्बन्धिषु प्रतितिष्ठति प्रतिष्ठितं भवति ॥ ७ ॥

अथ वामदेव्याद्रथन्तरादिसृष्टिं विवक्षुस्तत्साधनत्वेन वामदेव्ययोनिभूतां गायत्रीमुपदिशन्नाह—

प्रजापतिर्वा एतां गायत्रीं योनिमपश्यत्स आदीधीतास्माद्योनेः पृष्ठानि सृजा इति ॥ ८ ॥

प्रजापतिः खल्वेतां 'कयान' इतीमां गायत्रीं योनिं वामदेव्यस्य योनिभूतामपश्यत् । दृष्ट्वा च स प्रजापतिरादीधीताध्यायत् । किमिति? अस्माद्गायत्रीरूपाद्योनेः पृष्ठानि षडपि सृजै इति सृजानीति ॥ ८ ॥

अथोक्तसाधनाद्रथन्तरसृष्टिमाह—

स रथन्तरमसृजत तद्रथस्य घोषोऽन्वसृज्यत ॥ ९ ॥

स प्रजापतिर्गायत्रीभ्य उत्पन्नाद्वामदेव्याद्वा रथन्तरं पृष्ठं प्रथममसृजत। तत् पृष्ठमनु रथस्य घोषोऽन्वसृज्यत। न चानर्थकोऽयं रथघोषः सृष्ट्युपन्यास इति मन्तव्यं सप्रयोजनत्वात्। तथा हि रथन्तरमनुसृष्ट्योत्पन्नत्वात्पृष्ठस्य प्रथमेऽहनि रथन्तरं रथघोषेणोपाकुर्वन्ति। वामदेव्ययोने रथन्तरपृष्ठोत्पत्तिप्रकार इत्थं ज्ञातव्यः। रथन्तरस्य बार्हतप्रकार इत्थं ज्ञातव्यः। रथन्तरस्य बार्हतप्रगाथो योनिस्तत्र प्रथमायां त्रयो गायत्र्याः पादा एकश्च जागतः। द्वितीयायां विष्टारपङ्क्तौ द्वौ गायत्रौ पादौ द्वौ च जागतौ। अतो वामदेव्याधारायामृचि गायत्रीपादसद्भावाद्गायत्र्यामुत्पन्नमित्युच्यते। साम्नः साम्नोत्पत्तिपक्षेऽपि स्तोत्रियद्वारा पूर्वोक्त एव सम्बन्धः॥ ९॥

अथ बृहद्वैरूपयोर्गायत्रीयोनेः सकाशात् सृष्टिमाह—

**स बृहदसृजत तत्स्तनयित्नोर्घोषोऽन्वसृज्यत स वैरूपमसृजत तद्वा तस्य घोषोऽन्वसृज्यत॥ १०॥**

बृहद्वैरूपयोरपि बार्हतप्रगाथाभ्यामेवोत्पत्तेस्तयोः पूर्ववद्गायत्रीपादसद्भावाद्गायत्र्या एवोत्पत्तिस्तनयित्नुघोषेण बृहतः स्तुत्यशक्यत्वात्तत्समानेन दुन्दुभिघोषेणोपाकरणम्। तथा वा तद्घोषस्य रूपानन्तरं सृष्टत्वादुपवाजयमाना वैरूपेण स्तुवीरन्नुपवाज्यमाना वा॥ १०॥

अथोक्तसाधनाद्वैराजसृष्टिमाह—

**स वैराजमसृजत तदग्नेर्घोषोऽन्वसृज्यत॥ ११॥**

राजगानासम्भवादग्निमन्थनघोष एव तत्र घोषः। वैराजस्य गायत्रीसम्बन्ध एवं वैराजस्य प्रथमापि वा 'सोममिन्द्रमन्नू उत्व' इति त्रिंशदक्षरा उत्तरे त्रयस्त्रिंशदक्षरे' इति तृचस्य षण्णवत्यक्षराणि ताश्चतस्रो गायत्र्यः सम्पद्यन्ते। अतस्तस्य तत उत्पत्तिः॥ ११॥

अथ ततः शाक्वरसृष्टिमाह—

**स शाक्वरीरसृजत तदपां घोषोऽन्वसृज्यत॥ १२॥**

शक्वरीशब्दस्य स्त्रीलिङ्गत्वात्तच्छब्दपरामर्शाय शक्वरीसाध्यं पृष्ठं सामैवानु पश्चाद्पां घोष इति व्याख्येयम्। अपां घोषेण सह शाक्वरस्योत्पन्नत्वात्तदाश्रयमहानाम्नीगानसाधिका अप उपानिदधुः। ध्वनिसम्बन्धस्तु यो यः साम गायति स स उदकघोषमातयतीत्येवं ज्ञातव्यः। गायत्र्या अस्योत्पत्युपचारः प्रायशो महानाम्नीषु उपसर्गाव्यतिरिक्तासु 'शिक्षाशचीना'मित्यादिषु गायत्रीपादानां प्रायशः सम्भवादुपपद्यते॥ १२॥

अथ ततो रैवतात्पत्तिमाह।

**स रेवतीरसृजत तद्गवां घोषोऽन्वसृज्यत ॥१३॥**

नन्वत्र रेवतीनामेव सृष्टिराम्नायते। उत्तरं वारवन्तीयमेव वारवन्तीनां स्तोत्रीयासु विधास्यति। सूत्रकारेणापि वारवन्तीयस्य स्तोत्रे 'धेनुः सम्वासयेयु'रित्याह? नैष दोषः। अत्र रेवतीवारवन्तीययोर्विकल्पमेके ब्रुवते। अन्ये तु रेवतीशब्देन स्तोत्रीया उच्यन्त इत्याहुः। निदानञ्च 'षष्ठेहनि रेवतीषु वारवन्तीयं पृष्ठं भवती'ति रेवतीनां गायत्रीत्वात्ततो रैवतसृष्टिसम्बन्धः ॥ १३ ॥

उक्तमर्थं संग्रहेण दर्शयति—

**एतैर्व्वा एतानि सह घोषैरसृज्यन्त ॥ १४ ॥**

एतैर्वा उक्तैः खलु घोषै रथादिसम्बन्धिभिः सहैतानि रथन्तरादीन्यसृज्यन्तेति घोषाणां सह सृष्टिप्रयोजनं पूर्वमुक्तम् ॥ १४ ॥

उक्तार्थवेदनफलमाह—

**सर्व्वेऽस्मिन् घोषाः सर्व्वाः पुण्या व्वाचो व्वदन्ति य एवँ व्वेद ॥ १५ ॥**

अस्मिन् वेदितरि-एनं विषयीकृत्येत्यर्थः। सर्वाः पुण्या इत्युक्तस्य विवरणं पुण्या वाच एनमुच्चरन्तीत्यर्थः ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्याष्टमः खण्डः।

## अथ नवमः खण्डः।

अथोक्तसम्बन्धमपेक्ष्य पृष्ठानां वामदेव्यत्वेन तदेव प्रशंसति—

**पिता वै व्वामदेव्यं पुत्राः पृष्ठानि ॥ १ ॥**

स्पष्टम् ॥ १ ॥

कुत इति तदुपपादयति—

**एतस्माद्वा एतानि योनेरसृज्यन्त ॥ २ ॥**

एतस्माद्वामदेव्ययोनेः सकाशाद्भवत्येवम् ॥ २ ॥

किं तत इत्याह—

**तस्मात् पृष्ठानाᳬस्तोत्रं व्वामदेव्येनानुष्टुवन्ति शान्त्यै ॥ ३ ॥**

यस्मादेवन्तस्मात् षण्णामपि पृष्ठानां स्तोत्रं वामदेव्येन स्तुवन्ति। पृष्ठस्तोत्रवैगुण्यनिबन्धनायाशान्तेरपनयनाय ॥ ३ ॥

एवमपि शान्तिः कथमिति तत्राह—

यद्धि पुत्रोऽशान्तं चरति पिता तच्छमयति ॥ ४ ॥

एवं लोकसिद्धत्वात् स्पष्टम् ॥ ४ ॥

अथ वामदेव्यस्यान्तरिक्षस्थानीयत्वञ्चाह—

अयं वै लोको मध्यमो वामदेव्यमेतस्माद्वा इमौ लोकौ विवृवञ्चाववसृज्येतां बृहच्च रथन्तरञ्च ॥ ५ ॥

इदं वामदेव्यमयं मध्यमो लोकोऽन्तरिक्षं खल्वेतस्मादन्तरिक्षाद्विष्वञ्चाववभितोऽतो विद्यमानावयं च भूर्लोकोऽसौ द्युलोकश्चासृज्येतां यद्बृहच्च रथन्तरं चास्ति ॥ ५ ॥

अस्त्वेवं त्रयाणां लोकत्रयात्मकत्वं कथमनेन वामदेव्यस्य स्तुतिरिति तत्राह—

यद्रथन्तरेण स्तुवन्ति ये रथन्तराः पशवोऽन्तरीक्षन्त उपश्रयन्ति यद्बृहता स्तुवन्ति ये बार्हताः पशवोऽन्तरीक्षन्त उपश्रयन्ति ते वामदेव्यस्य स्तोत्रेणावरुद्धाः ॥६॥

यदि रथन्तरेण स्तुवन्ति ये राथन्तराः पशवः सन्ति ते सर्वेऽप्यन्तरिक्षमुपश्रयन्ति । एवं बृहत् स्तुत्यापि बार्हताश्च पशवोऽन्तरिक्षमेवोपश्रयन्ति। बृहद्रथन्तरयोरपि पशुहेतुत्वात्तदुभयफलभूताः पशवोऽप्यन्तरिक्षमेवोपश्रयन्त्येवमेकैकस्तोत्रप्रयोगे । वामदेव्यस्य स्तोत्रप्रयोगे तु उभयेऽपि पशवोऽवरुद्धाः स्युः। यद्वा यदुभयविधपशूनामन्तरिक्षाश्रयणं तदन्तरिक्षरूपवामदेव्यस्तुतिप्रसादाल्लभ्यमित्यर्थः ॥ ६ ॥

अथ वामदेव्यगाननियममाह—

ध्रुव आसीनो वामदेव्येनोद्गायेत्पशूनामुपधृत्यै ॥७॥

ध्रुवो निश्चल आसीन उपविष्टः । नियमगानं पशूनां सञ्चरतां पुनरुपावर्त्तनाय भवति ॥ ७ ॥

अथ वेदितुः फलमाह—

उपैनं पशव आवर्त्तन्ते यएवँ वेद ॥ ८ ॥

सुस्पष्टम् ॥ ८ ॥

अथ ध्रुव आसीनो गायेदित्युक्तमेव नियमं वाक्यद्वयेन प्रपञ्चयति—

अन्तरिक्षं वै वामदेव्यमधून्वतेवोद्गेयमधूतमिवान्तारिक्षं पशवो वै वामदेव्यमहिंसतेवोद्गेयं पशूना-

महिंसायै ॥ ९ ॥

अधून्वतेव अङ्गान्यकम्पतेव । अहिंसतेव अङ्गान्यपीडतेव । सुज्ञानमन्यत् ॥ ८ ॥

अथ वामदेव्यगाने प्रकारविशेषविषयं ब्रह्मवादिनः प्रश्नन्तदुत्तरञ्चावतारयति—

कथमिव वामदेव्यं गेयमित्याहुः ॥ १० ॥

वामदेव्यं कथं केन प्रकारेण गेयमित्यस्येत्याहुरित्यभिज्ञानामुत्तरम्॥१०॥

इतिशब्दोक्तेन प्रकारविशेषं दर्शयति—

यथांकुली पुत्रान् सन्दश्यासम्भिन्दती हरति यथा वातोऽप्सु शनैर्वाति ॥ ११ ॥

यथा—अंकुली मार्ज्जारी स्वपुत्रान् सन्दश्यासम्भेदं कुर्व्वती हरति यथा वा वायुः पर्व्वताग्रादिवैलक्षण्येनाप्सु शनैर्वात्येवङ्गेयमिति ॥११॥

अथ नियमान्तरमाह—

स्वधूर्व्वामदेव्यङ्गेयम् ॥ १२ ॥

अत्र धूरिति प्रकार उच्यते । स्वैवानन्यसाधारणी धुर्य्यसृतिः स्वधूः । तथा वामदेव्यं गेयम् ॥ १२ ॥

अथोक्तप्रकारेण गानफलमाह—

यो वै स्वधूर्व्वामदेव्यङ्गायति स्वधूर्भवति ॥ १३ ॥

अनन्याधीतो भवतीत्यर्थः ॥ १३ ॥

स्वधूरित्येतद्विवृणोति—

यात्यस्यान्यो नियानेन नान्यस्य नियानेन याति ॥१४॥

अस्योद्गातुर्नियानेन निगमनेन मार्गेणान्य उद्गाता याति नायमन्यस्य नियानेन मार्गेण याति ॥ १४ ॥

स्वधूर्गेयमित्युक्तं तद्विवृणोति—

न बृहतो न रथन्तरस्यानुरूपङ्गेयꣳ स्वेनैवायतनेन गेयमायतनवान् भवति ॥ १५ ॥

बृहतो रथन्तरस्य न यदनुरूपमनुकूलन्तेनैव तन्न गेयम् । किन्तु वामदेव्यस्य यत् स्वमायतनं नियता गीतिस्तस्यां गानमेवास्य रूपे स्थितिः । य एवं गायति सोऽप्यायतनवान् भवति । अथ वामदेव्यं स्वस्तोत्रियाणामनिरुक्तत्वस्य पूर्वमुक्तत्वात् स्वयमप्यनिरुक्तं भवति ॥ १५ ॥

तद्रूपत्वं स्तोतुकाम आह—

देवा वै पशून् व्यभजन्त ते रुद्रमन्तरायᳬंस्तान्वा-मदेव्यस्य स्तोत्र उपेक्षते ॥ १६ ॥

पूर्वं देवाः प्रजापतिना सृष्टान् पशून् व्यभजन्त परस्परं विभाग-मकुर्वन्। ते विभजमाना विभागात् रुद्रमन्तरायन्नन्तरितवन्तः। तान् वामदेव्यस्य स्तोत्रे क्रियमाणानुपेक्षते-उपेत्य पश्यति। पशून् घातु-कामो रुद्रः ॥ १६ ॥

उक्तदोषपरिहाराय तस्यानिरुक्तत्वमाह—

अनिरुक्तङ्गेयम् ॥ १७ ॥

तस्मादिदानीन्तनैरप्यानिरुक्तं देवतायाः फलस्य वा कस्य चिन्नि-र्वचनमकृत्वा वामदेव्यं गातव्यम्। अनिरुक्तकवतीव्यतिरिक्तास्वेतन्न गा-तव्यमित्यर्थः ॥ १७ ॥

उक्तवैपरीत्ये दोषमाह—

यन्निराह रुद्राय पशूनपि दधाति रुद्रस्ताᳬंसमां पशून् घातुको भवति ॥ १८ ॥

यद्यपि हि निराह निर्ब्रूते तां समान्तास्मिन् सम्वत्सरे रुद्राय पशू-नपिदधाति स्थापितवान् भवति। स रुद्रस्तां समां पशून् घातुको भवति। तस्मात् कवतीष्वेव गातव्यामिति तस्य स्तुतिः ॥ १८ ॥

अथ पशुकामस्य निरुक्तमपि स्तोत्रियान्तरं वामदेव्यस्य प्राह्य-मित्याह—

रेवतीषु वामदेव्येन पशुकामः स्तुवीत ॥ १९ ॥

'रेवतीर्नं' इत्याद्या रेवत्यः ॥ १९ ॥

अथ तासां गोसम्बन्धमाह—

आपो वै रेवत्यः पशवो वामदेव्यमद्भ्य एवास्मै पशून् प्रजनयति ॥ २० ॥

अद्भ्यो धान्यादिसमृद्धिस्तद्द्वारा रयिर्धनं भवतीति रेवत्य आपः। वामदेव्यस्यान्तरिक्षरूपत्वात् पशुसम्बन्धः पूर्वमुक्तः। तथा सति रेवतीषु वामदेव्यगानेनाद्भ्यः समुद्रात् पशूनेवास्मै यजमानाय प्रज-नयति ॥ २० ॥

अथोक्तप्रयोगे किञ्चिद्दोषमाह—

अनवर्त्तिः पशुतो भवति प्रजा त्वस्य मीलितेव

**भवति ॥ २१ ॥**

अवर्त्तिर्द्वारिरभ्यन्तद्ग्राहित्यमनवार्त्तैः पशुतः पशुभिरनवर्त्तिरवरिद्धो भवति। यदि तथाऽप्यस्य प्रजा पुत्रादिलक्षणा मीलितेव सङ्कुचितेव भवति रेवतीनामुदकरूपत्वात्। बहूदकप्रदेशे प्रजासमृद्ध्यभावादित्य-भिप्रायः ॥ २१ ॥

उक्तदोषपरिहाराय कवतीभ्य एव निर्वक्तव्यमित्याह—

**कवतीभ्यो ह्येति प्रजापतेः ॥ २२ ॥**

हि यस्मात् पूर्वस्मिन् दोषोऽस्ति—अतः कशब्दवाच्यप्रजापतेः सम्बन्धिनीभ्यः कवतीभ्य एति-एतव्यं वामदेव्यम्। यद्वा उक्तदोषप-रिहाराय कवतीभ्यो वामदेव्यमिति हीत्यनुवादः ॥ २२ ॥

इति ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य
नवमः खण्डः।

## अथ दशमः खण्डः।

उक्तं सर्वेषु पृष्ठेषु द्वितीयन्नियमेन मैत्रावरुणसामेति। अधुना रथन्त-रपृष्ठेनौधसं कार्य्यं बृहत् पृष्ठे श्यैतमिति विवक्षुराह—

**इमौ वै लोकौ सहास्तान्तौ व्ययन्तावब्रूतां विवाहं विवहावहै सह नावास्त्विति ॥ १ ॥**

पूर्वमिमौ भूर्लोकद्युलोकौ सहास्तां तौ पश्चाद्वियुज्यमानावित्यब्रूतां किमिति? विवाहं विवधं पृथग्वहनं विवहावहै करवावहै। आख्यातगतो विवाहशब्दोऽनुवादः। परस्परोपकार्य्योपकारकभावं करवावहा इत्यर्थः। तदेवाह सह नावस्त्विति यदेकेन लब्धं तदुभयोरस्त्वित्युक्त्वा तथा कुरुतामित्यर्थः ॥ १ ॥

अथ विवाहप्रकारं दर्शयति—

**तयोरयममुष्मै श्यैतं प्रायच्छन्नौधसमसावस्मै ॥ २ ॥**

तयोर्म्मध्येऽयं भूर्लोकोऽमुष्मै द्युलोकाय स्वस्वभूतं श्यैतं साम प्रायच्छत्तथाऽसौ द्युलोकोऽस्मै भूर्लोकाय नौधसं प्रायच्छत् ॥ २ ॥

ततः किञ्जातमित्याह—

**तत एनयोर्न्निधने विपर्य्यक्रामतां देवविवाहो वै श्यैतनौधसे ॥ ३ ॥**

ततः परस्पराविवाहादेतयोः श्यैतनौधसयोर्निधने विपर्ययकामतां विपारिवृत्याश्रयतां व्यत्यस्ते अभूतामित्यर्थः। श्यैतनौधसे सामनीयं परस्परं विवाहं कृतवती। असौ देवविवाहो देवेभ्यः कृतो विवाहः खलु। अतो नातिक्रमणीय इत्यर्थः ॥ ३ ॥

अथोक्तार्थवेदनफलमाह—

**प्रवसीयाꣳसं विवाहमाप्नोति य एवँ वेद ॥ ४ ॥**

प्राप्नोतीति सम्बन्धः ॥ ४ ॥

अथ रथन्तरबृहतोरन्यतरस्यापि प्रयोगे लोकत्रयप्राप्तिफलं वक्तुमुभयोः प्रयोगेन क्लृप्तिं दर्शयति।

**इतो वा इमे लोका ऊर्ध्वाः कल्पमाना यन्त्यमुतोऽर्वाञ्चः कल्पमाना आयन्ति ॥ ५ ॥**

रथन्तरं पृष्ठं कुर्वते यजमानाय इतोऽस्माल्लोकादारभ्योर्ध्वाः उपर्युपरि वर्त्तमाना भूरादिलोकाः कल्पमानाः स्वं स्वं भोगं प्रयच्छन्तो यन्ति। तथा बृहत् पृष्ठं कुर्वतोऽमुतः स्वर्गादारभ्य स्वं स्वं भोगं कल्पमाना अर्वाञ्चोऽवाङ्मुखा आयन्ति त्रयोऽपि लोकाः ॥ ५ ॥

तयोरन्यतरानुष्ठानेऽपि लोकत्रयात् क्लृप्तिं दर्शयति।

**यद्रथन्तरेण स्तुवन्तीमँ ल्लोकं तेन युनक्त्यन्तरिक्षं वामदेव्येन नौधसेनामुं यद् बृहता स्तुवन्त्यमुँ ल्लोकं तेन युनक्त्यन्तरिक्षं वामदेव्येन श्यैतेनेमम् ॥६॥**

यद्रथन्तरेण स्तुवन्त्युद्गातारस्तेनेमं भूर्लोकं युनक्ति भोगसाधनत्वेन यजमानस्तस्य तल्लोकरूपत्वात्। वामदेव्येनान्तारिक्षलोकं युनक्ति तल्लोकभोगं प्राप्नोति तेन यजमानः। 'अयं वै लोको मध्यमो यद्वामदेव्यमि'त्युक्तत्वात् 'नौधसेनामुं लोकं युनक्ति यजमानः' एवं बृहत् पृष्ठविषयेऽपि व्याख्येयम् ॥ ६ ॥

अथोक्तार्थवेदनफलं दर्शयति—

**क्लृप्तानिमाँल्लोकानुपास्ते य एवँ वेद ॥ ७ ॥**

स्वस्वभोगभरितान् लोकानाप्नोतीत्यर्थः ॥ ७ ॥

पूर्वत्र नौधसेनामुं श्यैतेनेममिति यदुक्तं तत् स्पष्टं दर्शयति।

**बृहद्रथन्तरे वै श्यैतनौधसे यद्रथन्तराय नौधसं प्रति प्रयुञ्जन्ति बृहदेवास्मै तत्प्रति प्रयुञ्जन्ति बृहद्धये-**

**तत्परोक्षं यन्नौधसं यद् बृहते श्यैतं प्रति प्रयुञ्जन्ति रथन्तरमेवास्मै तत्प्रति प्रयुञ्जन्ति रथन्तरꣳ ह्येतत्परोक्षं यच्छ्यैतम् ॥ ८ ॥**

'अल्पाच्तरम्'इति बृहतोऽल्पत्वेन पूर्वनिपातनाद्रथन्तरं वै श्यैतं बृहद्वै नौधसमिति क्रमोऽवगन्तव्यः । अथ 'अग्निर्मूर्द्धा' 'भुवो यज्ञस्य' हविषो याज्यानुवाक्ये इत्युक्ते 'अग्निर्मूर्द्धा' इत्येषानुवाकानुवाक्या 'भुवो यज्ञस्य' इत्येषा याज्या तद्वदत्रापि। एवं सत्यनेन रथन्तरबृहतोः श्यैतनौधसरूपत्वप्रतिपादनेन श्यैतनौधसयोर्द्युलोकभूलोकयोः सम्बन्ध उक्तो भवति। यद्येनं रथन्तराय नौधसं साम प्रति प्रयुञ्जन्ति प्रतिनिधित्वेन योजयन्ति तत्तेनास्मै रथन्तराय बृहदेव प्रति प्रयुञ्जन्ति । रथन्तरप्रयोगपक्षे बृहद्रूपनौधसप्रयोगेण बृहद्रथन्तरे उभे अपि प्रयुक्ते भवतः। उक्तस्य नौधसस्य बृहत्त्वसमर्थनं 'बृहद्ध्येतत्'इत्यादि वा। एवमुक्तवैपरीत्येनोत्तरवाक्यं व्याख्येयम् ॥ ८ ॥

उक्तार्थवेदनपूर्वकं प्रयोगं प्रशंसति—

**उभाभ्यां बृहद्रथन्तराभ्यां स्तुते य एवँ वेद ॥ ९ ॥**

य एवं विद्वान् बृहता वा रथन्तरेण स्तुते उभाभ्यामपि स्तुतवान् भवति ॥ ९ ॥

अथ नित्यमपि नौधसं कामनाभेदेन ब्रह्मवर्चसफलार्थमपि विधित्सुराह—

**देवा वै ब्रह्म व्यभजन्त तान्नोधाः काक्षीवत आगच्छत्तेऽब्रुवन्नृषिर्न आगꣳस्तस्मै ब्रह्म ददामेति तस्मा एतत् साम प्रायच्छन्यन्नोधसे प्रायच्छꣳस्तस्मान्नौधसं ब्रह्म वै नौधसम् ॥ १० ॥**

पूर्वन्देवा ब्रह्म साम लक्षणं वेदभागं व्यभजन्त मह्यमयं मह्यममयमिति विभज्य लब्धवन्तः। तान्विभज्यमानान्नोधा ऋषिः काक्षीवतः कक्षीवत्पुत्र आगच्छत्। ते देवा अब्रुवन् किमिति ? ऋषि र्नोऽस्मानागमगात्-तस्मै नोधसे ब्रह्म सामभागं किञ्चिद्ददामेति। एवमुक्त्वा तस्मा एतत् साम प्रायच्छन्। यन्नोधसे प्रायच्छन् तस्मात्तत्सम्बन्धादेतत्साम नौधसमभवत्। अतोऽस्य ब्रह्मभागरूपत्वादेतत् ब्रह्मसाम खलु ॥ १० ॥

अथ ब्रह्मवर्चसायैतद्विधत्ते—

**ब्रह्मवर्चसकाम एतेन स्तुवीत ब्रह्मवर्चसी भवति ॥ ११ ॥**

स्पष्टम् ॥ ११ ॥

नौधसमुक्त्वा श्यैतं विधास्यामीति प्रतिजानीते—

**अथैतच्छ्यैतम् ॥ १२ ॥**

वक्ष्यतीति वाक्यशेषः ॥ १२ ॥

अथ नित्यमपि श्यैतमभिसन्धिभेदेन पशुकामप्रयोगार्थमपि विधित्सुस्तस्य पशुसम्बन्धं दर्शयति—

**प्रजापतिः पशूनसृजत तेऽस्मात्सृष्टा अपाक्रामꣳस्तानेतेन साम्नाभिव्याहरत्तेऽस्मा अतिष्ठन्त ते श्यैता अभवन् यच्छ्यैता अभवꣳस्तस्माच्छ्यैतं पशवो वै श्यैतम् ॥१३॥**

पूर्वं प्रजापतिना सृष्टाः पशवस्तस्मै भोगायानवकल्पमानास्ततोऽपाक्रामन्। तानेतेन श्यैतेन साम्नाभिव्याहरत् आभिमुख्येनाह्वयत्। तस्योत्तमे पादे 'हुम्' इति पशुघोषानुकरणस्य विद्यमानत्वात् आहूता अस्मै प्रजापतये भोगायातिष्ठन्त समजानत। अतस्ते श्यैता अभवन्। श्यैतशब्दश्च श्यतेर्गतिकर्मणोवाश्नातेर्व्याप्तिकर्म्मण उत्पन्नः। अतः शेत्याः शेतव्या अभवन्नित्यर्थः। अतस्तद्धेतुत्वेन श्यैतत्वं सामान्याक्षरयकारमादौ सम्बध्य श्यैतमिति प्रयुक्तं ब्राह्मणे। अतः पश्वाह्वानसाधनत्वात् श्यैतं पशव एव ॥ १३ ॥

अथ पशुकामाय विधत्ते—

**पशुकाम एतेन स्तुवीत पशुमान् भवति ॥ १४ ॥**

स्पष्टम् ॥ १४ ॥

अथ श्यैतस्यान्त्यपादे 'हुंमा' इत्येतस्य विद्यमानत्वात् प्रजानां वृद्धिसाधनमेतत्सामेति प्रशंसति—

**प्रजापतिः प्रजा असृजत ताः सृष्टा अशोचꣳस्ताः श्यैतेन हुंमा इत्यभ्यजिघ्रत्ततो वै ताः समैधन्त समेधन्ते ताꣳ समां प्रजा यत्रैवं विद्वाञ्छ्यैतेनोद्गायति ॥१५॥**

पूर्वं प्रजापतिना सृष्टाः प्रजा अनभिवृद्धा अशोचन्। ताः प्रजाः श्यैतेन तत्र ह्यता 'हुंमा' इत्येनेनाभिजिघ्रत् शिर आघ्रातवान्। ततः खलु ताः समैधन्त सम्यगवर्द्धन्त। अतो यत्रैवमुक्तार्थाभिज्ञः श्यैतेनोद्गायति तां समां तस्मिन् संवत्सरे प्रजाः समेधन्ते सम्यग्वर्द्धन्ते ॥ १५ ॥

अथोद्गाता श्यैतेनोद्गायति प्रजासम्वर्द्धको भवतीति तद्दर्शयति—

**एष वै यजमानस्य प्रजापतिर्यदुद्गाता यच्छ्यैतेन हि-**

कुरोति प्रजापतिरेव भूत्वा प्रजा अभिजिघ्रति ॥ १६ ॥

स्पष्टोऽर्थः ॥ १६ ॥

तत्रत्यवसुनिधनं प्रशंसति—

ऽवसुनिधनं भवति पशवो वै ऽवसु पशुष्वेव प्रतितिष्ठति ॥ १७ ॥

पशूनां निवाससाधनत्वेन धनरूपत्वं प्रसिद्धमतस्तत्प्रयोगेण पशुषु प्रतिष्ठितो भवति यजमानः ।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे सप्तमाध्यायस्य दशमः खण्डः ।

सप्तमाध्यायः समाप्तिमगमत् ।

# अष्टमोऽध्यायः ।

## अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

उक्तो माध्यन्दिनस्तस्मिंश्च पवमानश्च सप्तमे वरुणहोत्रादीनाञ्च पृष्ठानि त्रीण्युक्तानि यथाक्रमं तस्मिन्। ब्रह्मसामानि काम्यानि कालेयतः आर्भवं यज्ञायज्ञीयमुक्थानि प्रवक्ष्यन्तेऽधुनाष्टमे। श्यैतनौधसे उभे अपि नित्य एवाग्निष्टोमे विकल्पेन प्रयुज्यमाने अभिसन्धिभेदात्काम्ये अपि भवत इत्युक्तमथाभिचारप्रयोगार्थं ब्रह्मसाम विदधाति—

आऽक्कारणिधनं काण्वं ऽवषट्कारणिधनमभिचरणीयस्य ब्रह्मसाम कुर्य्यादभिनिधनम्माध्यन्दिने पवमाने॥ १॥

अभिचरणीयस्याभिचारसम्बन्धिनस्तत्प्रयोजनस्य यागस्य ब्रह्मसाम ब्राह्मणाच्छंसिनः साम वषट्कारनिधनं कुर्य्यात् 'अभित्वा पूर्व्वपीतये' इत्यत्र ब्रह्मसाम कार्य्यं तत्र 'उपा'निधनमस्ति तत् स्थाने

'वाषाड्'इति निधनं कुर्य्यादित्यर्थः। पवमाने तु माध्यन्दिने बृहतीषु मध्यमायामभिनिधनं कार्य्यम् 'औ हो होहा ई आ ई ही ऊ नू साः आ २३४ भी'इति। अत्र कल्पाः 'अथातो ब्रह्मसामानावभिचरतः श्यैतस्य प्रतिपत्तथा आज्यानि च पुनानः सोम धारयेति रौरवमेकस्यामभिनिधनं काण्वमेकस्यां वैश्रवसमेकस्यामुद्वत्प्राजापत्यं वा यौधाजयन्तिसृषु वषट्कारनिधनं ब्रह्मसामैष ब्रह्मा य ऋत्विज इति कालेयमभिचरणीया विष्टुतयः समानमितरं ज्ज्योतिष्टोमेनेति' ॥ १ ॥

अथोभे सामनी प्रशंसति—

**देवेषुर्वा एषा यद्वषट्कारोऽभीति वा इन्द्रो वृत्राय वज्रं प्राहरदभीत्येवास्मै वज्रं प्रहृत्य देवेष्वावषट्कारेण विध्यति ॥ २ ॥**

वषट्कार इति यत् एषा देवेषुर्वै देवसम्बन्धी बाण एव। इषुशब्दापेक्षयैषेति स्त्रीलिङ्गता। तथा अभीत्युक्त्वा खलु वृत्राय तद्वधार्थं वज्रमिन्द्रः प्राहरत्। अभीत्यस्याभिमुख्यमित्यर्थः। तेन शत्रोरभिमुखं गच्छतीत्यर्थः सूच्यते। अतस्तदुभयोः प्रयोगेन भीत्येवास्मै स्वविरोधिने वज्रं प्रहृत्य देवबाणरूपेण विध्यति। तं विरोधिनं केवलनिधनयोरप्रयोगात्तद्धारयोः साम्नोरेव प्रयोग इति मन्तव्यम् ॥ २ ॥

अथ पशुकामप्रयोगे ब्रह्मसामार्थे त्रैककुभं विदधाति—

**त्रैककुभं पशुकामाय ब्रह्मसाम कुर्यात् त्वमङ्गप्रशꣳसिष इत्येतासु ॥ ३ ॥**

'त्वमङ्ग' इत्येतासूपपन्नं त्रैककुभाख्यं साम पश्वर्थिप्रयोगे ब्राह्मणाच्छꣳसिसाम कार्य्यम् ॥ ३ ॥

**इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त रायो वाजो बृहद्गिरिः पृथुरश्मिस्तेऽब्रुवन् को नः पुत्रान् भरिष्यतीत्यहमितीन्द्रोऽब्रवीत्ताꣳस्त्रिककुब्वधिनिधायाचरत्स एतत्सामापश्यद्यत्त्रिककुब्वपश्यत्तस्मात्त्रैककुभम् ॥ ४ ॥**

पूर्वमिन्द्रो यतीन् वेदविरुद्धनियमोपेतान् यतीन् तान् शालावृकेभ्योऽरण्यश्वभ्यः प्रायच्छत् वधार्थं तेषां मध्ये रायोवाजप्रभृतयस्त्रय उदशिष्यन्त तेभ्यः उद्गताः शिष्टा अभवन्। ते चासतिका एवमब्रुवन्। को महाभागोऽस्मान् पुत्रान् पुत्रवद्रक्षणीयान् कृत्वा भरिष्यतीति। तदि-

न्द्रोऽहं रक्षिष्यामीत्यब्रवीत् । तानवशिष्टांस्त्रिककुप् व्युच्छ्रितप्रदेश आसीत् । त्रिककुप्सु व्याधिनिधायाचरत् । स तदेतत्सामापश्यत् । यत्त्रिककुप् समपश्यत्तस्मादेतत् तंज्ञकमभवत् अस्थास्यत् ॥ ४ ॥

कथं तेषां जीवनकल्पनमिति तत्राह—

**स आत्मानमेव पुनरुपाधावत्त्वमङ्ग प्रशंꣳसिषो देवः शविष्ठमर्त्यन्नत्वदन्योमवघन्नास्ति च मर्डितेन्द्र ब्रवीमि ते वच इति स एतेन च प्रगाथेनैतेन साम्ना सहस्रं पशून सृजत तानेभ्यः प्रायच्छत्ते प्रत्यतिष्ठन् ॥ ५ ॥**

स इन्द्रः स्वव्यतिरिक्तस्य—एतेषां प्रतिष्ठानात् बहिः कस्यचिदप्यभावादात्मानमेव पुनरुपाधावत् 'त्वमङ्ग' इति प्रगाथेन । अयमुत्तरग्रन्थ एवास्माभिर्व्याख्यातः । स एवमात्मानमेव प्रशस्य एतेनोक्तेन प्रगाथेन एतेन त्रैककुभेन साम्ना च पशुसहस्रमसृजत तान् सृष्टानिन्द्रेण लब्ध्वा ते प्रतिष्ठिता अभवन् ॥ ५ ॥

एवमस्य साम्नः पशुरूपप्रतिष्ठासाधनत्वं सामर्थ्योक्तकामनायोग्यत्वाभिधानद्वारेणोपसंहरति—

**यः पशुकामः स्याद्यः प्रतिष्ठाकाम एतस्मिन् प्रगाथ एतेन साम्ना स्तुवीत प्रसहस्रं पशूनाप्नोति प्रतिष्ठति ॥६॥**

ननु केवलमुपक्रमे पशुकामनैव चोदिता, उपसंहारे तु प्रतिष्ठापि चोद्यतेऽतः कथन्तयोरविरोधो निर्णयस्योपक्रमोपसंहारैकवाक्यताधीनत्वादिति ? नायं विरोधः । तैर्वाक्यादौ भरणस्यैव प्रार्थ्यमानत्वात् पश्वादिद्वारमन्तरेण केवलप्रतिष्ठाया अभावात् पशुरूपप्रतिष्ठैवोक्तेति बोद्धव्या । निगदव्याख्यानमेतत् ॥ ६ ॥

तदेव पुनः प्रशंसति—

**त्रिवीर्यं वा एतत्साम त्रीन्द्रियमैन्द्र्य ऋच ऐन्द्रꣳ सामैन्द्रीति निधनमिन्द्रिय एव वीर्ये प्रतितिष्ठति ॥ ७ ॥**

एतत्त्रैककुभं साम त्रिवीर्यं वै वीर्यत्रयोपेतं खलु तदेव विविच्य दर्शयति । ऋचोऽप्यैन्द्र्यः सामाप्यैन्द्रं निधनमप्यैन्द्रमिति । अतस्त्रीन्द्रियं य एतेन स्तूयात् स इन्द्रिय एव तस्य विवरणं वीर्य इति तत्र प्रतिष्ठितो भवति ॥ ७ ॥

अथ दीर्घरोगिणः प्रयोगे ब्रह्मसाम विदधाति—

**श्रैशोकं ज्योगामयाविने ब्रह्मसाम कुर्यात् ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

अथ शब्दनिर्वचनद्वारेण तत्प्रशंसति—

इमे वै लोकाः सहासꣳस्तेऽशोचꣳस्तेषामिन्द्र एतेन साम्ना शुचमपाहन्यत्त्रयाणाꣳशोचतामपाहꣳस्तस्मात्त्रैशोकम् ॥ ९ ॥

पूर्वमिमे भूरादिलोकाः सहैकस्मिन्नवस्थाने अतिष्ठन् । ते इति हविर्लाभवृष्टिप्रदानादिपरस्परोपकारादिभावेनाशोचन् । तेषां शुचं दुःखमेतेन त्रैशोकेन साम्ना अपाहन् । यद्यस्माच्छोचतां त्रयाणां शोकमपाहन् तस्मात् शोकत्रयापनोदेन त्रैशोकसंज्ञामलभत ॥ ९ ॥

अथापगतानां शुचामन्यत्र प्राप्तिं दर्शयति—

यामस्मादपाहन् सा पुꣳश्चलीं प्राविशद्यामन्तरिक्षात्सा क्लीबं याममुष्मात्सैनस्विनम् ॥ १० ॥

यां शुचमिन्द्रोऽस्माद्भूर्लोकादपाहन् सा पुंश्चलीमन्यान् पुरुषान् प्रति चलन्तीं व्यभिचारिणीमित्यर्थः । एवमुत्तरत्रापि योज्यम् । क्लीबः षण्ढः । एनस्वी महापातकदोषग्रस्तः ॥ १० ॥

अथैतेषु धनादीच्छामन्वयव्यतिरेकाभ्यां प्रसङ्गान्निन्दति—

तस्मात्तेषान्नाशंसेतव्या य एषामाशामेति तस्मा एव शुचोऽपभजते ॥ ११ ॥

तस्मात्प्राप्तशोकत्वात्तेषामाशा पुंश्चल्यादीनां सम्बन्धिनी धनादीच्छा नैतव्या न प्राप्तव्या । यस्तु मोहादाशां प्राप्नोति तस्मा एव शुचः तामेव शुचमपभजते कष्टं प्राप्नोति ॥ ११ ॥

अथ प्रकृतेऽसङ्गत्वं दर्शयन्नुपसंहरति—

शुचा वा एष विद्धो यस्य ज्योगामयति यत्त्रैशोकं ब्रह्मसाम भवति शुचमेवास्मादपहन्ति ॥ १२ ॥

यस्य यजमानस्य चिरकालो रोगः प्राप्नोति एष शुचा विद्धोऽपहतः खलु । अनेन विध्यर्थवादगतज्योगामयशोकयोर्वैयधिकरण्यं परिहृतं भवति । शिष्टं स्पष्टम् ॥ १२ ॥

तत्रत्यनिधनमप्युक्तविषयेऽनुकूलमित्याह—

दिवेति निधनमुपयन्ति व्युष्टिर्वै दिवा व्येवास्मै वासयति ॥ १३ ॥

यत्र साम्नि दिवेति निधनमुपयन्तीह गातारः सा दिवा व्युष्टिर्वै 'उच्छीविवासे' विवासस्तमोऽपवर्ज्जनं प्रकाश इत्यर्थः । अतस्तत्प्रयोगेनास्मै ज्योगामयाविने आमयाख्यं तमो विवासयति परिहरत्येव ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य प्रथमः खण्डः ।

## अथ द्वितीयः खण्डः ।

अथ प्रतिष्ठार्थिनः प्रयोगे ब्रह्मसाम विधत्ते—

आष्कारणिधनं काण्वं प्रतिष्ठाकामाय ब्रह्मसाम कुर्य्यात् ॥ १ ॥

'आष्' इतिकरणमुच्चारणमाष्कारः तन्निधनोपेतं काण्वं काण्वेन दृष्टं ब्रह्मसाम 'तच्चोदस्ममृतीषह'मित्यादिषु कुर्य्यात् ॥ १ ॥

अथ निधनद्वारैतत्प्रशंसति—

कण्वो वा एतत्सामर्त्ते निधनमपश्यत् स न प्रत्यतिष्ठत्स वृषदंशस्याषिति क्षुवत उपाशृणोत्स तदेव निधनमपश्यत्ततो वै स प्रत्यतिष्ठद्यदेतत्साम भवति प्रतिष्ठित्यै ॥ २ ॥

कण्वः पूर्वमेव तत्साम निधनरहितं केवलमपश्यत् । स निधनस्य प्रतिष्ठारूपत्वात्तदभावेनाप्रतिष्ठितोऽभूत् । स किन्निधनं प्रतिष्ठासाधनत्वेन करवाणीति चिन्तयन् तदा वृषदंशस्य मार्जारस्य 'आष्' इति क्षुवतः शब्दमुपाशृणोत् । स एतदेवोपश्रयणान्निधनं भविष्यतीत्यवगत्य तदेव प्रयुक्तवान् । ततश्च प्रतिष्ठितोऽभूत् । अतो यत्साम एतन्निधनकं भवेत् तच्च प्रतिष्ठित्यै भवति ॥ २ ॥

अप्रजार्थिनः प्रयोगे ब्रह्मसाम विदधाति—

वसिष्ठस्य जनित्रं प्रजाकामाय ब्रह्मसाम कुर्य्यात् ॥ ३ ॥

तच्चोदस्ममित्यादि वसिष्ठस्य जनित्रम् ॥ ३ ॥

अस्य प्रजासम्बन्धमाह—

वसिष्ठो वा एतत्पुत्रहतः सामापश्यत्स प्रजया पशुभिः प्राजायत यदेतत्साम भवति प्रजात्यै ॥ ४ ॥

पूर्वं हतपुत्रो वसिष्ठः प्रजात्यर्थमेतत्सामापश्यत्तदेव प्रयुज्य प्रजापशुसमृद्धोऽभूत् अतः प्रजार्थिभिरेतत्कर्त्तव्यम् ॥ ४ ॥

स्वर्गार्थिनः प्रयोगे ब्रह्मसामाह—

आथर्वणं लोककामाय ब्रह्म साम कुर्य्यात् ॥ ५ ॥

अत्र यद्यपि लोकसामान्यं श्रूयते तथाप्यर्थवादे 'अमर्त्यं लोकम्' इति विशेषश्रुतेरत्रापि स एवेति निश्चयः । अत्र कल्पः लोककामस्य नौधसस्य स्थाने आथर्वणं ब्रह्मसामोद्यत्योर्विष्टुतयः । समानमितरत् ज्योतिष्टोमेनेति ॥ ५ ॥

एतत्साम प्रशंसति—

अथर्वाणो वा एतल्लोककामाः सामापश्यंस्तेनामर्त्यं लोकमपश्यन् यदेतत्साम भवति स्वर्गस्य लोकस्य प्रज्ञात्यै ॥ ६ ॥

एतत्सामापश्यन्निति सम्बन्धः । अमर्त्यं दिव्यं लोकं स्वर्गमित्यर्थः । यदेतदित्यादिरुपसंहारः ॥ ६ ॥

भ्रातृव्यवतो यजमानस्य तदपमानार्थप्रयोगे ब्रह्मसाम विदधाति—

अभीवर्त्तं भ्रातृव्यवते ब्रह्मसाम कुर्य्यात् ॥ ७ ॥

स्पष्टम् ॥ ७ ॥

अथैतन्निर्वचनद्वारा प्रशंसति—

अभीवर्त्तेन वै देवा असुरानभ्यवर्त्तन्त यदभीवर्त्तो ब्रह्मसाम भवति भ्रातृव्यस्याभिवृत्त्यै ॥ ८ ॥

देवानामसुरवधार्थे अभिमुखावर्त्तनसाधनत्वादेतत्सामाभीवर्त्तमभवत् । सुज्ञानमितरत् ॥ ८ ॥

यज्ञविभ्रष्टाय ब्रह्मसाम विधत्ते—

श्रायन्तीयं यज्ञविभ्रष्टाय ब्रह्मसाम कुर्य्यात् ॥ ९ ॥

औद्गात्रावच्छेदसोमापहृतवित्तसामातिपवनादिक्रतुविलोपनिमित्तं यस्य जायते स यज्ञविभ्रष्टस्तत्प्रायश्चित्तम् ॥ ९ ॥

श्रीणातेः पाकार्थात् श्रायन्तीयमित्यर्थान्निर्वचनमिति विवक्षुराह—

प्रजापतिरुषसमभ्यैत्स्वां दुहितरं तस्य रेतः परापतत्तदस्यांन्यषिच्यत तदश्रीणादिदं मे माऽदुषदिति तत्सदकरोत्पशूनेव ॥ १० ॥

पूर्वं प्रजापतिः स्वदुहितरमेवोषसमभ्यैदभ्यगच्छत् । तस्य रेतः परापतत् । तदस्यां पृथिव्यामभिषिच्य च तदश्रीणात् अपचत् । केनाभिप्रायेण?

मादुषदिति दुष्टस्माभूदिति। तत्पक्कं रेतः सदकरोत् तदेव विवृणोति पशूनकरोदिति। एतत् श्रायन्तीयमभवदिति शेषः ॥ १० ॥

एवं प्रशस्य प्रकृतमुपसंहरति—

यच्छ्रायन्तीयं ब्रह्मसाम भवति श्रीणाति चैवेनꣳ सद्य करोति ॥ ११ ॥

यद्यस्य प्रयोगे एतद्ब्रह्मसाम भवति, तत एनं यज्ञविभ्रष्टं श्रीणाति पचति शुद्धं करोति ततः सद्य यज्ञसाधकञ्च करोति ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य द्वितीयः खण्डः ।

## अथ तृतीयः खण्डः ।

उक्ताः कामनाभेदेन ब्रह्मसामाविशेषा अथास्मिन् खण्डे कालेयं स्तूयते तत्र तावत्कालेयनामनिर्वचनेन प्रशंसति—

देवाश्च वा असुराश्चैषु लोकेष्वस्पर्द्धन्त ते देवाः प्रजापतिमुपाधावꣳस्तेभ्य एतत्साम प्रायच्छदेतेनैनान् कालयिष्यद्ध्वमिति तेनैनानेभ्यो लोकेभ्योऽकालयन्त यदकालयन्त तस्मात्कालेयम् ॥ १ ॥

पूर्वं देवाश्चासुराश्चैतेषां लोकानामाधिपत्यायास्पर्द्धन्त । अस्माकमेव भूयासुरस्माकमेवेति तेषु मध्ये देवाः स्वपितरं प्रजापतिमनुप्राप्ताः। तेभ्य एषामाधिपत्यायैतत्साम प्रायच्छत् किमिति? एतेन साम्नैनानसुरान् कालयिष्यद्ध्वमपनयथेति सुज्ञानमन्यत् ॥ १ ॥

विदुषः फलमाह ।

एभ्यो वै लोकेभ्यो भ्रातृव्यं कालयते य एवँ वेद ॥ २ ॥

य एवमवगच्छति सोऽपि स्ववैरिणं लोकत्रयान्निःसारयति ॥ २ ॥

अथास्य स्तोत्रियगततरोभिरिति पादद्वारेणैतत्साम प्रशंसति—

स्तोमो वै देवेषु तरो नामासीद्यज्ञोऽसुरेषु विवद्वसुस्ते देवास्तरोभिर्वो विवद्वसुमिति स्तोमेन यज्ञमसुराणामावृञ्जत ॥ ३ ॥

पूर्वं देवेषु तरो नामा स्तोम आसीत। असुरेषु विवद्वसुरिति नामा यज्ञ आसीत्। एवं सति 'तरोभिर्वो विवद्वसु'मिति पादेन देवाः स्तोम-

साधनमसुराणां यज्ञमवृञ्जत अवर्जयन् अच्छिन्दन्नित्यर्थः। यद्यप्यन्यार्थावेतौ तथापि श्रुतिसामान्यमात्रेण च स्तुतिर्द्रष्टव्या ॥ ३ ॥

अथ विदुषः फलमाह—

स्तोमेन यज्ञं भ्रातृव्यस्य वृङ्क्ते य एवँ वेद ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

एतत्साम तृतीयसवनस्य सन्ततिरूपमिति प्रशंसति—

साध्या वै नाम देवा आसꣳस्तेऽवच्छिद्य तृतीयसवनम्माध्यन्दिनेन सवनेन सह स्वर्गँ लोकमायꣳस्त देवाः कालेयेन समतन्वन्यत्कालेयं भवति तृतीयसवनस्य सन्तत्यै ॥ ५ ॥

पूर्वं साध्या नाम देवा आसन् ते तृतीयसवनमवच्छिद्याननुष्ठाय माध्यन्दिनेन सवनेन सह तदनुष्ठानात् ते स्वर्गमायन् अगच्छँस्ते देवाः। अतः साध्यास्तृतीयसवनस्य विच्छेदमवगत्य कालेयेन साम्ना समतन्वन् तत्सवनमविच्छिन्नमकुर्वन्। अतस्तृतीयसवनाविच्छेदाय तद्भवतीति स्तुतिः ॥ ५ ॥

अथ तृतीयसवनकालेययोः कः सम्बन्ध इति तं दर्शयति—

विदद्वसु वै तृतीयसवनं यत्तरोभिर्वो विदद्वसुमिति प्रस्तौति तृतीयसवनमेव तदभ्यति वदति ॥ ६ ॥

तृतीयसवनं विदद्वसु वै लब्धधनं खलु तस्मिन् हि सम्पूर्णे क्रतुसमाप्तेर्वस्वादिलक्षणफललाभात्। अतः कालेये यत् 'तरोभिर्वो विदद्वसुम्' इति पठत्युद्गाता तत्तेन तृतीयसवनमेवाभिलक्ष्याति वदति अतीति धात्वर्थानुवादः ॥ ६ ॥

अथैतत्साम सर्वपृष्ठस्वरूपत्वेन प्रशंसति—

सर्व्वाणि वै रूपाणि कालेयं यत्पदप्रस्तावन्तेन राथन्तरं यद्बृहतो रोहान् रोहति तेन बार्हतं यत् स्तोभवान् प्रतिहारस्तेन बार्हतं यद्रवादि डन्तेन राथन्तरꣳसर्व्वेष्वेव रूपेषु प्रतितिष्ठति ॥ ७ ॥

यत्कालेयमस्ति तद्रथन्तरबृहतोरुभयोरपि पाणिपादप्रस्तावादिलक्षणानि रूपाणि सन्ति। तान्येव खलु तेषां तस्मिन्विद्यमानत्वात्। तथा हि यत्पदप्रस्तावं भवति पादान्ते प्रस्तावभागपरिसमाप्तिर्भवति तेन

राथन्तरं रूपम्। रथन्तरस्य पादप्रस्तावः पूर्वमुक्तस्तथा यद्बृहतश्चानूोहा-नूोहति तेन बार्हतमपि रूपम् । तत्रापि बृहत्पृष्ठेऽपि रोहत्रयस्योक्तत्वात्। यत्कालेयस्य प्रतिहारस्तोभवान् तेन बार्हतं रूपम्। तथाहि कालेये 'हु वा ई भ रौ वा ३ ४ ३ औ ३ ४ वा' इति प्रतिहारस्तोभवान् । बृहत्यपि 'त्वां काष्ठा ३ ४ औ हो वा' इति तत्र स्तोभो विद्यते अतस्तद्रूपत्वं युक्तं तथा 'हो ५ ईडा' इति कालेयं द्रवादिडं कालेयं भवत्यतो राथन्तरं रूपम् । तथा हि निदानं द्रवदिडारथन्तरपृष्ठेति ऊर्द्ध्वेडा बृहत्पृष्ठ इति वैरूप-शाक्करयो रथन्तरकार्य्यत्वात् वैराजरैवतयोश्च बृहत्कार्य्यत्वात् कारण-भूतोभयरूपत्वप्रतिपादनमत इदं कालेयं सर्वेष्वेव षण्णां पृष्ठानां रूपेषु प्रतितिष्ठति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे अष्टमाध्यायस्य तृतीयः खण्डः ।

## अथ चतुर्थः खण्डः ।

उक्तम्माध्यन्दिनं सवनमथ तृतीयसवनस्यादौ गायत्रीसम्बन्धं विवक्षुराख्यायिकामाह—

साध्या वै नाम देवा आसᳬंस्ते सर्व्वेण यज्ञेन सह स्वर्गँल्लोकमायᳬंस्ते देवाश्छन्दाᳬंस्यब्रुवन्सोममाहर-तेति ते जगतीं प्राहिण्वन्सा त्रीण्यक्षराणि हित्वैकाक्ष-रा भूत्वागच्छात्रिष्टुभं प्राहिण्वन् सैकमक्षरᳬंहित्वा त्र्यक्षरा भूत्वागच्छद्गायत्रीं प्राहिण्वᳬंश्चतुरक्षराणि वै तर्हि च्छन्दाᳬंस्यासन् सा तानि चाक्षराणि हरन्त्याग-च्छदष्टाक्षरा भूत्वा त्रीणि च सवनानि हस्ताभ्यां द्वे सवने दन्तैर्द्दᳬंष्ट्वा तृतीयसवनं तस्माद्वे अᳬंशुमती स-वने धीतं तृतीयसवनं दन्तैर्हि तद्दᳬंष्ट्वा धयन्त्यहरत्त-स्य ये ह्रियमाणस्याᳬंशवः परापतᳬंस्ते पूतीका अभ-वन् यानि पुष्पाण्यवाशीयन्त तान्यर्ज्जुनानि यत्प्राप्रो-थस्ते प्रप्रोथास्तस्मात्तृतीयसवन आशिरमवनयन्ति य-मेव तं गावः सोममदन्ति तस्य तᳬं रसमवनयन्ति स-सोमत्वाय ॥ १ ॥

पूर्वं साध्याख्या देवा आसन्। ते सर्वेण यज्ञेन सोपकरणेन सोमादिसाधनमादायैव स्वर्गं लोकमायन्नगमन्। ते प्रसिद्धा वस्वादयो देवा आदौ स्वर्गसाधनयज्ञार्थसोमाहरणाय च्छदांसि गायत्र्यादीनि यूयं सोमं द्युलोकात् आहरतेत्युक्तवान्। तान्यपि तथैवाङ्गीचक्रुरिति शेषः। तथोक्तास्ते जगतीं प्राहिण्वन्प्रेरयन्। सा तत्रत्यैः सोमपालैः सह युद्ध्वा त्रीण्यक्षराणि हित्वैकाक्षरा भूत्वा पुनर्देवानागच्छत्। चतुरुत्तराणि वै तर्हि च्छन्दांसि वक्ष्यति तदभिप्रायकमिदम्। पुनस्ते त्रिष्टुभं प्राहिण्वन्। सापि पूर्ववत् सोमपालेष्वेकमक्षरं हित्वा त्र्यक्षरा भूत्वा पुनरागच्छत्। ते पुनर्गायत्रीं प्राहिण्वन्। छन्दांसि सर्वाणि चतुरुत्तराण्यासन्। अतः सा गायत्री द्युलोके सोमरक्षकैः कृशानुप्रभृतिभिर्जितानि जगतीत्रिष्टुभोश्चतुरक्षराणि हरन्ती अष्टाक्षरा भूत्वा आगच्छत्। पुनः किं कुर्वत्यागच्छदित्युच्यते त्रीणि च सवनानि सवनत्रयपर्य्याप्तानि सोमद्रव्याण्यादायेति। तद्विविच्योच्यते हस्ताभ्यां द्वे सवने धृत्वा दन्तैस्तृतीयसवनं दंष्ट्वाऽऽगच्छत्। यस्मादेवं तस्माद्धस्ताभ्यां धृते द्वे सवने प्रातर्म्मध्यन्दिनसवनयोग्ये सोमद्रव्ये पीडाभावात् अंशुमती अभूताम्। तृतीयसवनं धीतं पीतसारभूतं तत्र हेतुमाह दन्तैर्हि तद्द्रव्यं दष्ट्वा धयन्ती पिबन्ती अहरत्। ह्रियमाणस्य सोमस्य पतिताः अंशवः पूतीका अभवन्। तस्य सोमस्य यानि पुष्पाण्यवाशीयन्त अवशादितानि प्रभ्रष्टान्यासन्। शदेः पाघ्रेत्यादिना शीयादेशः। तान्यर्ज्जुनानि हरितवर्णान्यभवन्। यत् प्राप्रोथत् अधनुताङ्गानि प्रप्रोथाख्या ओषधय आसन्। तस्मात्सोमाभावे पूतीकादीनां प्रतिनिधित्वेन स्वीकर्त्तव्यतामभिधातुं प्रासङ्गिकानामेषां उपन्यासः। तस्माद्धृतत्वात्तृतीयसवन आशिरं दधिपयोद्रव्यमवनयन्ति। यमेव तं सोममोषधीनां सारं गावोऽदन्ति भक्षयन्ति तस्य सोमस्य तं रसमवनयन्ति। आशिरावनयने हेतुः ससोमत्वाय सरसत्वाय॥१॥

एवं गायत्रीं प्रशस्येदानीं सवनसम्बन्धमाह—

ते त्रिष्टुब्जगत्यौ गायत्रीमब्रूतामुप त्वायावेति साऽब्रवीत् किं मे ततः स्यादिति यत्कामयस इत्यब्रूताᳪं साब्रवीन्मम सर्व्वं प्रातः सवनमहमुत्तरे सवने प्रणयानीति तस्माद्गायत्रं प्रातःसवनं गायत्र्युत्तरे सवने प्रणयति ॥ २ ॥

ते गायत्र्यपहृताक्षरचतुष्टये त्रिष्टुप्जगत्यौ गायत्रीमब्रूताम् किमिति ? त्वा त्वां उपायावेति उपगच्छावेति। सा पुनरब्रवीत्। मे मह्यं ततो युष्म-

कुपगममार्कि फलं स्यादिति ? ते पुनरब्रूतां, तर्हि यत् फलं कामयस इति। सा ते प्रत्यब्रवीत् किमिति ? उच्यते। मम तावत् प्रथमं प्रातःसवन मद्दमुत्तरेऽपि सवने प्रणयानि प्रापयानीति ते तथाऽस्त्वित्यङ्गीचक्रतुरिति शेषः। यस्मादेवन्तस्मात् पूर्वं गायत्रं प्रातःसवनमुत्तरेऽपि सवने गायत्री प्रणयति। अयमर्थस्तैत्तिरीयके 'कद्रुश्च वै सुपर्णी च'इत्यनुवाके प्रतिपादितः॥ २॥

अथ तयोर्गायत्रीप्राप्तिप्रकारं दर्शयति—

**तान्त्रिष्टुप् त्रिभिरक्षरैरुपैत्सैकादशाक्षरा भूत्वा प्राजायत ताञ्जगत्येकेनाक्षरेणोपैत्सा द्वादशाक्षरा भूत्वा प्राजायत॥ ३॥**

तां गायत्रीं त्रिष्टुबवशिष्टैस्त्रिभिरक्षरैरुपैदन्तः प्राविशत्। ततो गायत्र्या अष्टाक्षरेण सह एकादशाक्षरा भूत्वा प्राजायत प्रकृष्टाऽभूत्। तथैकाक्षरा जगत्यपि गायत्रीसंयुक्ता द्वादशाक्षरा प्राजायत॥ ३॥

अथ गायत्र्याः सर्वच्छन्दोव्याप्तिरुक्तार्थनिबन्धनेत्याह—

**तस्मादाहुर्गायत्री वाव सर्व्वाणि च्छन्दांसि गायत्री ह्येतान् पोषान् पुष्यन्त्यैदिति॥ ४॥**

तस्मात्त्रिष्टब्जगत्योः स्वरूपप्रदानादसाधारणसोमापहरणाच्च गायत्री वाव गायत्र्यैव सर्वाणि च्छन्दांसि। गायत्री ह्येतान् प्रागुक्तैकादशाक्षरद्वादशाक्षररूपात्मनः पोषान् पुष्यन्ती प्राप्नुवन्त्येतद्यज्ञमगच्छत्। तदेव तृतीयसवने गायत्रं कर्त्तव्यमिति प्रतिपादितम्॥ ४॥

अथार्भवपवमानगतानि गायत्रसंहितादिसामानि विधास्यन्नादौ 'स्वादिष्ठया'इति तृचं गायत्रसंहिताया आधारभूतं सस्तुतिकं विदधाति·

**इन्द्रस्तृतीयसवनाद्बीभत्समान उदक्रामत्तद्देवाः स्वादिष्ठयेत्यस्वदयन्मदिष्ठयेति मद्वदकुर्व्वन् पवस्व सोम धारयेत्यपावयन्निन्द्राय पातवे सुत इति ततो वै तदिन्द्र उपावर्त्तत यत् स्वादिष्ठया मदिष्ठयेति प्रस्तौति तृतीयसवनस्य सेन्द्रत्वाय॥ ५॥**

पूर्वमिन्द्रस्तृतीयसवनात् पीतत्वेन गतसाराद्बीभत्समानोऽयोग्यत्वेनापेक्ष्यमाण उदक्रामदुद्गतवान्। तत्सवनं देवाः 'स्वादिष्ठया'इति स्वादुत्मवाचिना पदेनास्वदयन् स्वादुमकुर्वन्'मदिष्ठया'इति द्वितीयपदेन मह·

पुष्टिमदकुर्व्वन् 'पवस्व सोमधारया' इति द्वितीयपादेनापावयन् पूतमकुर्व्वन्। एवं सवनं तद्योग्यं सम्पाद्य 'इन्द्राय पातवे सुतः' इति पादेनैन्द्रमुपावर्त्तयन्निति शेषः। तत्र पादे तत इन्द्राय पातवे पातुमिति इन्द्रस्य पानार्थश्रवणात्स्वार्हतामवगत्येन्द्रस्तत्सवनमुपावर्त्तत-अभिमुखमगच्छत्। शिष्टं सुज्ञानम् ॥ ५ ॥

अथासुरपशुविनाशकत्वद्वारेणैतत्प्रशंसति—

स्वादिष्ठा वै देवेषु पशव आसन् मदिष्ठा असुरेषु ते देवाः स्वादिष्ठया मदिष्ठयेति पशूनसुराणामवृञ्जत ॥६॥

पूर्वं स्वादिष्ठाः पशवो देवेष्वासन् मदिष्ठा असुरेषु तत्तद्भागस्यैव तैस्तैः प्रयुक्तत्वात्। तदा देवा विदित्वाऽसुराणां प्रत्युपायं 'स्वादिष्ठया मदिष्ठय' इति पादं पठित्वा तानपि स्वयमलभन्त। अतस्तेषां पशूनवृञ्जतेत्युच्यते ॥ ६ ॥

विदुषः फलमाह—

पशून् भ्रातृव्यस्य वृङ्क्ते य एवँ वेद ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

अथोक्ते च तृचे संहितमपि विधत्ते—

तासु सꣳहितम् ॥ ८ ॥

गेयमिति शेषः ॥ ८ ॥

अथैतदन्वर्थनामत्वेन प्रशंसति—

साध्या वै नाम देवा आसꣳस्तेऽवच्छिद्य तृतीयसवनम्माध्यन्दिनेन सवनेन सह स्वर्ग्गं लोकमायꣳस्तद्देवाः सꣳहितेन समदधुर्यत्समदधुस्तस्मात्सꣳहितम् ॥ ९ ॥

सन्धानहेतुत्वात्संहितमिति नामाभूत्, शिष्टं कालेयार्थवद्योज्यम् ॥९॥

अथैतन्माध्यन्दिनसवनान्तेन कालेयेन सह स्तौति—

कालेयं पुरस्ताद्भवति सꣳहितमुपरिष्टादेताभ्याꣳ हि तृतीयसवनꣳ सन्तायते ॥ १० ॥

कालेयस्य पूर्व्वं तृतीयसवनं सन्तत्यर्थमुक्तमस्यापि तदर्थत्वमिदानीमुच्यतेऽत उभयोर्म्मिलित्वा माध्यन्दिनतृतीयसवनयोः सन्तानसाधकत्वम् ॥ १० ॥

अथ कालेयवदस्यापि सर्व्वपृष्ठत्वमिति स्तौति—

सर्व्वाणि वै रूपाणि सꣳहितं यत्पदप्रस्तावन्तेन

राथन्तरं यद्बृहतो रोहात्रोहति तेन बार्हतं यत्पदनिधनन्तेन राथन्तरꣳसर्व्वेष्वेव रूपेषु प्रतितिष्ठति ॥ ११ ॥

उक्तमिदं पूर्वम् ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणेऽष्टमाध्यायस्य चतुर्थः खण्डः।

---

## अथ पञ्चमः खण्डः।

अथ सफ-पौष्कले विधातुं तयोश्छन्दसी विदधाति—

उष्णिक्ककुभावेते भवतः ॥ १ ॥

अत्रापि 'अभ्यर्हितम्' इत्युष्णिक्शब्दस्य पूर्व्वनिपातः। अतः 'पवस्व मधुमत्तम' 'इन्द्रमच्छ सुता' इत्येते ककुबुष्णिहौ भवत इत्यर्थः ॥ १ ॥

अथैतत् स्तौति—

उष्णिक्ककुब्भ्यां वा इन्द्रो व्वृत्राय व्वज्रं प्राहरत्ककुभि पराक्रमतोष्णिहा प्राहरत्तस्मात् ककुभो मध्यमं पदं भूयिष्ठाक्षरं पराक्रमणꣳ हि तदभि समौहत्तस्मादुष्णिह उत्तमं पदं भूयिष्ठाक्षरं पुरो गुरुरिव हि व्वज्रः ॥ २ ॥

उष्णिक्ककुब्भ्यां खलु पूर्वमिन्द्रो वृत्रवधार्थं वज्रं प्राक्षिपत। तद्विभज्य दर्शयति ककुभि पराक्रमत शत्रोरभिमुखं लङ्घितवान्। तत उष्णिहा च्छन्दसा प्राहरद्वज्रं यस्मादेवं कृतवांस्तस्मात् ककुभश्छन्दसो मध्यमं पदं पादो भूयिष्ठाक्षरं प्रकृतद्वादशाक्षरो भवति 'मध्यमाश्च ककुप्' इति हि ककुभो लक्षणम्। पराक्रमणसाधने 'पवस्व मधुमत्तम' इति ककुभि मध्यमपादे द्वादशाक्षराणि सन्ति तदक्षराधिक्यमेव खलु पराक्रमणमभित उभे पार्श्वे समौहदष्टाक्षरौ पादौ सम्यगवहत्। तद्वा तत् ककुप्छन्द इन्द्रस्य पराक्रमणं खल्वभिसमौहत् अभिसमवहत। अतो मध्यमपादाधिक्यं युक्तमेव तस्मादेव वज्रप्रहरणसाधनत्वादेवोष्णिहमुत्तमं पदं भूयिष्ठाक्षरमष्टाक्षरपादद्वयापेक्षयाऽधिकाक्षरम् 'उष्णिक् त्रिपदान्तो द्वादशः' इति हि लक्षणम्। वज्रोऽपि पुरो गुरुरिवाग्रभागे स्थूल इव खलु वज्रः ॥ २ ॥

उक्तार्थस्य फलकथनम्—

व्वज्रं भ्रातृव्याय प्रहरति य एवँ व्वेद ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

पुनस्ते प्रशंसति—

नासिके वा एते यज्ञस्य यदुष्णिक्ककुभौ तस्मात् समानं च्छन्दः सती नाना यज्ञं वहतस्तस्मात् समानाया नासिकायाः सत्या नाना प्राणावुच्चरतः ॥ ४ ॥

यस्मादेते च्छन्दसी यज्ञस्य नासिके तस्मात्समानमेकं छन्दः सती सत्यौ नाना पृथक्भूते एव ते यज्ञं वहतः। यस्मादेवमभूत् तस्मादिदानीमपि लोके समानाया एकस्या एव नासिकायाः सत्याः सकाशाद्दिवसभेदेन प्राणावुच्छ्वासौ नाना पृथगेवोच्चरत उद्गच्छतः ॥ ४ ॥

अथ प्रासङ्गिकमनयोर्नियमविशेषमाह—

प्राणा वा उष्णिक्ककुभौ तस्मात्ताभ्यान्न वषट्कुर्वन्ति यद्वषट्कुर्य्युः प्राणानग्नौ प्रदध्युः ॥ ५ ॥

स्पष्टोऽर्थः ॥ ५ ॥

पूर्वत्रानयोः प्राणोद्गमनसाधननासिकात्वेनोक्तमिदानीं सामद्वयं विधत्ते—

तासु सफं विफमिव वै तृतीयसवनं तृतीयसवनस्य सफत्वायाथैतत्पौष्कलमेतेन वै प्रजापतिः पुष्कलान् पशूनसृजत तेषु रूपमदधाद्यदेतत्साम भवति पशुष्वेव रूपन्दधाति ॥ ६ ॥

पौष्कलं कुर्व्वन्नेतेन वै पुष्कलान् समग्रान् पशूनसृजत। तेष्वेव सृष्टेषु पुनरेतेनैव रूपेणापत्योत्पादनलक्षणां पुष्टिमदधात् स्थापितवान्। एवं पशुपौष्कल्यहेतुत्वात् पुष्कलमिति निर्व्वचनद्वारा स्तुतिः॥६॥

अथ श्यावाश्वान्धीगवे उभे अपि सामनी विधित्सुस्तयोरुभयोः समानं स्तोत्रियं प्रशंसति—

पुरोजिती वो अन्धस इति पथ्या चाक्षर्य्या च विराजौ भवतः पथ्यया वै देवाः स्वर्गं लोकमायन्नक्षर्य्येया ऋषयो नु प्राजानन्यदेते पथ्या चाक्षर्य्या च विराजौ भवतः स्वर्गस्य लोकस्य प्रज्ञात्यै ॥ ७ ॥

अस्मिंस्तृचे प्रथमानुष्टुबुत्तरे गायत्र्यौ। एवं सति पथ्या पादैः सम्पन्नाऽक्षर्य्या चाक्षरपरिगणनया सम्पन्ना च द्वे विराजौ भवतः 'द-

शाक्षरा विराट्' इति श्रुते विराजि दशसंख्यासद्भावादत्रापि मिलित्वा दशपादानां सम्भवात् । तृचस्य मिलित्वाऽशीत्यक्षराणि तानि विराट् संख्यया विभक्तानि समान्येव भवन्ति इति 'पद्याक्षर्य्या च विराजौ भवतः' इत्युक्तं यद्वा प्रथमायामृचि दशपदानि सन्ति ततः पद्या विराट् 'ऋचाक्षर्य्या विराड्' इति विज्ञेयम् । अस्त्वेवं किं ततः स्यादिति चेदतो भवतीत्याह । पूर्वं पद्यया हि विराजा देवाःस्वर्गं लोकमायन् पदस्याक्रमणसाधनत्वादेतदुचितम् । अक्षर्य्यया तु विराजा च ऋषयोऽअनुक्रमेण स्वर्गं प्राजानन् । अक्षरविराट् प्रयोगेण यज्ञन्तद्वारा तत्फलभूतं स्वर्गं चेति क्रमः । अत इदानीन्तनैरपि पद्या चाक्षर्य्या च विराजौ कर्त्तव्ये भवतः किमर्थं ? स्वर्गस्य प्रज्ञात्यै परिज्ञानाय ॥ ७ ॥

अथास्मिंस्तृचे प्रथमं श्यावाश्वं विधत्ते—

तासु श्यावाश्वम् ॥ ८ ॥

स्पष्टम् ॥ ८ ॥

तासु 'पुरोजितीव' इत्याद्यासु तिसृषु ऋक्ष्वेतत्प्रशंसति—

श्यावाश्वमार्च्चनानसꣳ सत्रमासीनं धन्वोदवहन् स एतत्सामापश्यत्तेन वृष्टिमसृजत ततो वै स प्रत्यतिष्ठत्ततो गातुमविन्दत गातुविद्वा एतत्साम ॥ ९ ॥

आर्च्चनानसमर्च्चनानसः पुत्रं श्यावाश्वमृषिं सत्रमासीनमितरे सत्रिणः क्रोधाद्धन्व निरुदकप्रदेशमुदवहन्नुदगमयन् । स तृषार्त्तः सन्नेतत्सामापश्यत् । स वृष्टिमसृजत ततः खलु वृष्ट्यां सत्यां सस्योत्पत्तौ पृथिव्यां प्रत्यतिष्ठत् । ततो गातुं यज्ञानुष्ठानमार्गमविन्दत । इत्थं गातुविन्मार्गलम्भनं खल्वेतत्साम मार्गलिप्सुना श्यावाश्वेन दृष्टत्वादपि श्यावाश्वमभूदिति ज्ञातव्यम् ॥ ९ ॥

अथ विदुषः फलमाह—

विन्दते गातुं प्रति तिष्ठत्येतेन तुष्टुवानः ॥ १० ॥

एतेन साम्ना तुष्टुवानोऽपि यजमानो गातुं लौकिकवैदिकाविधेयं मार्गं विन्दते प्रतितिष्ठति ॥ १० ॥

अथैतत्सामगतं स्तोभद्वयं प्रशंसति—

इन्द्रस्तृतीयसवनाद्बीभत्समान उदक्रामत्तन्देवाः श्यावाश्वेनैहायि एहियेत्यन्वाह्वयन् स उपावर्त्तत यदेतत्साम भवति तृतीयसवनस्य सेन्द्रत्वाय ॥ ११ ॥

ऋजीषदोषदुष्टत्वेनापगतमिन्द्रं देवाः पूर्वं श्यावाश्वेन साम्ना 'प्रहायि पहिया' इत्याह्वयन्। एहीत्यस्य विकारः 'एहा२ इ' एवमाहूतः सवनं प्रत्युपागच्छत्। इतरत्सुज्ञानम् ॥ ११ ॥

अथान्धीगवं विधत्ते—

अथैतदान्धीगवमन्धीगुर्वा एतत्पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै मध्ये निधनमैडम्भवत्येतेन वै तृतीयसवनं प्रतिष्ठितं यन्मध्ये निधनमैडन्न स्यादप्रतिष्ठितं तृतीयसवनँ स्यात् ॥ १२ ॥

अथ श्यावाश्वेष्वेवं प्रतिष्ठितं यन्मध्ये निधनमैडमिति-ऐडं इडासम्बन्धि मध्ये निधनमेतत्साम कर्त्तव्यम्। किं ततस्तत्राह, एतेन खलु मध्ये निधनेन तृतीयसवनं हि प्रतिष्ठितं निधनं हि प्रतिष्ठा तन्मध्ये भवति तेन प्रतिष्ठासिद्धिः। तथेह मध्येन हि प्रतिपुरुषा इडाः सन्तः प्रतितिष्ठन्ति भूमौ। इडाशब्दः पशुवाची पशवश्च प्रतिष्ठाहेतुरिति। इडानिधनत्वादपि तृतीयसवनं प्रतिष्ठितमत एवास्य साम्नः पशुपोषहेतुत्वम्। उक्तमर्थं व्यतिरेकेण द्रढयति यन्मध्ये निधनमैडन्न स्यादिति स्पष्टम्॥१२॥

अथ मध्ये निधनमेव पुनः प्रशंसति—

दशाक्षरं मध्यतो निधनमुपयन्ति दशाक्षरा विराड्विराज्येव प्रतितिष्ठति ॥ १३ ॥

'अपः श्वानं श्नथिष्टना २३४५' इति दशाक्षरनिधनं साम मध्यत उपयन्ति स्तोतारः। विराडपि दशाक्षरा तेन विराज्येव यजमानः प्रतितिष्ठति ॥ १३ ॥

अथ कावं साम विदधाति—

अभिप्रियाणि पवत इति कावं प्राजापत्यँ साम॥१४॥

'अभिप्रियाणि'इति तृचे गीयमानं कावं कविना भार्गवेन दृष्टं प्राजापत्यं साम भवत्यनिरुक्तासु-ऋक्षु गीयमानत्वात्। इदं प्राजापत्यं यथा वामदेव्यं 'कयान' इत्यनुक्तासु गीयमानन्तद्वत् ॥ १४ ॥

अथैतत् स्तौति—

प्रजा वै प्रियाणि पशवः प्रियाणि प्रजायामेव पशुषु प्रतितिष्ठति ॥ १५ ॥

लोके प्रजाः पशवः प्रियाणि। अत्रापि प्रियाणीति श्रुतत्वाच्च तत्प्रयोगेन प्रजायां पशुषु च प्रतिष्ठितो भवति यजमानः॥ १५॥

अथौशनकावे सह स्तौति—

रश्मी वा एतौ यज्ञस्य यदौशनकावे देवकोशो वा एष यज्ञमभिसमुब्जितो यदेते अन्ततो भवतो यज्ञस्यारिष्ट्यै॥ १६॥

यदौशनकावे एतौ यज्ञस्य रश्मी वै बन्धनरज्जू। रश्मिशब्दापेक्षया 'एतौ' इति पुंलिङ्गनिर्देशः। यदेते उक्ते सामनी अन्ततो भवत एष यज्ञमभिसमुब्जितः। यज्ञमुद्दिश्य देवकोशो देवानां निधानागारं खलु समुब्जितः। तच्च यज्ञस्यारिष्ट्यै अहिंसायै भवति॥ १६॥

इति ताण्ड्यमहाब्राह्मणेऽष्टमाध्यायस्य पञ्चमः खण्डः।

## अथ षष्ठः खण्डः।

देवा वै ब्रह्म व्यभजन्त तस्य यो रसोऽत्यरिच्यत तद्यज्ञायज्ञीयमभवत्॥ १॥

पूर्वं देवा ब्रह्म वेदराशिं व्यभजन्त ममायं भागो ममायं भाग इति विभागमकुर्वन्। तस्य विभज्यमानस्य ब्रह्मणो रसोऽत्यरिच्यत तद्यज्ञायज्ञीयं सामाभवत्॥ १॥

अथैतद्विधत्ते—

ब्रह्मणो वा एष रसो यद्यज्ञायज्ञीयं यद्यज्ञायज्ञीयेन स्तुवन्ति ब्रह्मण एव रसे यज्ञं प्रतिष्ठापयन्ति॥ २॥

अत एतद्यज्ञायज्ञीयं ब्रह्मणो रसः खलु शिष्टं स्पष्टम्। यद्यपि यच्छब्दयोगादनुवादत्वं तथाप्यपूर्वत्वाद्विधिरेवाभ्युपगन्तव्यः॥ २॥

अथैतन्निर्वचनद्वारा प्रशंसति—

योनिर्वै यज्ञायज्ञीयमेतस्माद्वै योनेः प्रजापतिर्यज्ञमसृजत तस्माद्यज्ञायज्ञीयम्॥ ३॥

एतद्यज्ञायज्ञीयं साम योनिर्वै—उत्पत्तिहेतुः। तदेव साधयति एतस्मात् खलु यज्ञायज्ञीयाद्योनेः प्रजापतिर्यज्ञमसृजत। यज्ञमिति जात्यभि-

प्रायेणैकवचनम् । यद्वस्मादेतस्मात् साम्नो यज्ञं यज्ञं वीप्सया सर्वोऽपि यज्ञः परिगृह्यते कृत्स्नं यज्ञजातमसृजत । तस्माद्यज्ञयज्ञसम्बन्धाद्यज्ञायज्ञीयमिति नामास्य सम्पन्नम् ॥ ३ ॥

अथैतत्सामप्रयुक्तं प्रशंसति—

तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानमस्तोषत योनेर्यज्ञं प्रतनवामहा इति यज्ञन्ततः स्तुवन्ति योनौ यज्ञं प्रतिष्ठापयन्ति ॥ ४ ॥

तस्मादेव कारणात् पुरा ब्राह्मणा अनुष्ठातारो यज्ञस्यादिभूतं बहिष्पवमानमस्तोषत स्तोत्रमकुर्वत । कया बुद्ध्या योने रेतस्य साम्नः सकाशाद्यज्ञं प्रतनवामहा इति बुद्ध्या । अतोऽप्यस्य योनित्वं सिद्धमतोऽद्याप्यन्ततः स्तुवन्ति योनावेव यज्ञं समापयन्तीति ॥ ४ ॥

अथैतत्सर्वयज्ञात्मकत्वेन प्रशंसति—

असुरेषु वै सर्व्वो यज्ञ आसीत्ते देवा यज्ञायज्ञीयमपश्यꣳस्तेषां यज्ञायज्ञा वो अग्नय इत्यग्निहोत्रमवृञ्जत गिरागिरा च दक्षस इति दर्शपूर्णमासौ प्रप्र वयममृतञ्जातवेदसमिति चातुर्म्मास्यानि प्रियम्मित्रन्नशꣳसिषमिति सौम्यमध्वरम् ॥ ५ ॥

पूर्व्वमसुरेष्वेव सर्वो यज्ञ अग्निहोत्रादिचतुर्भेदभिन्नः सर्वो यज्ञ आसीन्न देवेषु । ते देवाः स्वाधीनकरणोपायत्वेन यज्ञायज्ञीयमपश्यन् । दृष्ट्वा च तेषां सम्बन्ध्यग्निहोत्रमवृञ्जत 'यज्ञायज्ञाव' इति पादेन । अत्राग्नय इति श्रूयमाणत्वात् अग्निहोत्रवर्जनस्यायमुचितः । अग्निहोत्रं तेभ्यः सकाशाद्वियुज्य स्वयमलभतेत्यर्थः । यद्वा क्रमोऽत्र सम्बन्धहेतुः, अग्निहोत्रदर्शपूर्णमासौ चातुर्मास्यानि सौम्योऽध्वर इति क्रमः । अतस्तत्राग्निहोत्रप्राथम्यात् स्तोत्रीयायामपि 'यज्ञायज्ञा' इत्यस्य प्रथमपादत्वात्तेन तद्वर्जनमुचितम् । एवमुत्तरत्रापि तत्तत्साहश्यानुक्रमाद्वा सम्बन्ध्येवावगन्तव्यः । द्वितीयपादे 'दक्षस' इति दकारः श्रूयतेऽतो दर्शपूर्णमासौ प्रावृञ्जत । तृतीयपादे प्रकर्षवाची प्रशब्दः श्रूयतेऽतस्तेनाक्षयसुकृतफलानि चातुर्मास्यान्यवृञ्जत चातुर्मास्यानामक्षयसुकृतसाधनत्वं 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति श्रुतेः । 'प्रियम्मित्रन्न' इति चतुर्थपादे प्रियशब्दः श्रूयते सोमयागश्च देवानामतिशयेन प्रियः । अतस्तेन पादेन सौम्याध्वरमवृञ्जत ॥ ५ ॥

अथैतत् स्वस्तोत्रीयगतपदवीप्साद्वारेण प्रशंसति—

यज्ञा वो अग्नये गिरा च दक्षसे प्र वयममृतञ्जातवेदसम्प्रियम्मित्रन्नशꣳसिषामिति वै तर्हि च्छन्दाꣳस्यासꣳस्ते देवा अभ्यारम्भमाभिनिवर्त्यं च्छन्दोभिर्यज्ञमसुराणामवृञ्जत ॥ ६ ॥

पूर्व्वमसुराणां यज्ञे विनापि वीप्सया 'यज्ञावो अग्नये गिरा च दक्षसे प्रवयम्'इति खलु च्छन्दांऽसि च्छन्दोऽवयवभूताः पादा अक्षराणि वा आसन् । ते देवा एतदवगत्याभ्यारम्भमभ्यस्य पदं ते देवा इमभिनिवर्त्यारिभ्यः सकाशाद्यज्ञं छन्दोभिः प्रावृञ्जत ॥ ६ ॥

अथ वेदितुः फलमाह—

च्छन्दोभिर्यज्ञं भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥ ७ ॥

स्पष्टम् ॥ ७ ॥

अत्र गिरागिरेति पादे गकारमकृत्वा इरा इरेति पठितव्यमिति विवक्षुराह ।

एतद्धस्म वा आह कूशाम्बः स्वायवो ब्रह्मा लातव्यः कꣳस्विदद्याशिशुमारी यज्ञपथेऽप्यस्ता गरिष्यति॥८॥

एतद्धस्माह वक्ष्यमाणमिदमुवाच खलु। आहेत्यस्य भूतकालसम्बन्धज्ञापनार्थं स्मेति प्रयोगः। क आह? कूशाम्ब एतन्नामा आचार्य्यः स्वायवः स्वायोः पुत्रः ब्रह्मा श्रुतादिना परिवृढो लातव्य एतद्गोत्रसम्बन्धकथनमेतदिति । उक्तमर्थं विवृणोति, अद्यास्मिन् दिने कं स्वित् कं वा शिशुं शिशुमारी यज्ञपथेऽप्यस्ता प्रक्षिप्ता सती गरिष्यतीति ॥ ८ ॥

का शिशुमारी कथं गरिष्यतीति तदुभयं दर्शयति—

एषा वै शिशुमारी यज्ञपथेऽप्यस्ता यज्ञायज्ञीयं यद्गिरागिरेत्याहात्मानं तदुद्गाता गिरति ॥ ९ ॥

यज्ञायज्ञीयं सामेति यत् एषैव शिशुमारी शिशुवत्प्रयोगानाभिज्ञानां घातिनी यज्ञपथे यज्ञस्य मार्गे औद्गात्ररूपेऽप्यस्ता अभिप्रास्ता तथा सति यत् गिरा गिरेति ब्रूयादुद्गाता तेनात्मानमेव गिरति ॥ ९ ॥

कः परिहार इति तमाह—

ऐरङ्कृत्वोद्गेयमिरायां यज्ञं प्रतिष्ठापयत्यप्रमायुक उद्गाता भवति ॥ १० ॥

पेरमिरासम्बन्धं कृत्वा गेयं 'गिरा गिरा' इत्यधीतमपि 'इरा इरा' इति कृत्वा गातव्यमित्यर्थः। तेन यज्ञमिरायां भूमावेव प्रतिष्ठापयतीति। अत उद्गातुरपि मरणदोषो नास्ति। इदमेव वाक्यं विषयीकृत्य नवमस्य प्रथमपादेऽध्ययनगतो गिराशब्दो ब्राह्मणविहित इराशब्दश्च विकल्पेन प्रयोगे प्रयोक्तव्यावुत इराशब्द एवेति? न विकल्प इराशब्द एव प्रयोक्तव्य इति सिद्धान्तितम्। सोऽपि इराशब्दो न गातव्यो गातव्यो वेति विचार्य्य गातव्य एवेति सिद्धान्तितम्। तद्विचारद्वयमत्रार्थनिर्णयाय प्रदर्श्यते तत्र प्रथमन्दर्शयति।

इरा गिरा विकल्पः स्यादुतैरैवाविशेषतः।
आद्ये मैवं बाधपूर्वमिरायाविहितत्वतः॥

ज्योतिष्टोमे श्रूयते यज्ञायज्ञीयेन स्तुवीतेति 'यज्ञायज्ञा' इत्यनेन शब्देनयुक्तायामृच्युत्पन्नं साम यज्ञायज्ञीयन्तस्यामृचि गिराशब्दः पठ्यते 'यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे' इति तत्र सामगा योनिगानमधीयानाः सहैव गकारेण गायन्ति गा इरा गिरा इति। ब्राह्मणे तु गकारलोपपूर्वकमाकारयकारादिकं गानं विधीयते 'पेरं कृत्वोद्गेयमिति' गिराशब्दे गकारलोपादि भवति। इरायाः सम्बन्धि गानमैरं तादृशं कृत्वा प्रयोगकाल उद्गानं कर्त्तव्यमित्यर्थः। तत्र योनिगानब्राह्मणयोः समानबलत्वेनाविशेषाभावाद्विकल्पेन प्रयोक्तव्यमिति प्राप्ते ब्रूमः 'न गिरागिरेति ब्रूयाद्यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेदिति' गकारसहितगाने बाधमुक्त्वा गकाररहितं 'इरा' पदं गेयत्वेन विधीयते। तत्पदादेरिकारस्य गानार्थमाकारो यकार इकारश्चेति त्रीन् वर्णान् प्रयुज्य तत्र वा 'ईरा इरा' इत्येव मन्तव्यम्। अथ द्वितीयं दर्शयति,

इरा पदन्न गेयं स्याद्गेयं वा गीत्यनुक्तितः।
न गेयं गीयमानस्य स्थाने जाते प्रगीयते॥

ब्राह्मणेन विहित इराशब्दो न गातव्यः कुतः? पेरमिति शब्देन गीतेरनुक्तत्वात्। पाणिनीयेन 'विमुक्तादिभ्योऽण्' इति सूत्रेणेराशब्दादण् प्रत्ययो मत्वर्थीयो विहितः। तथा सति 'इरा' पदोपेतं कृत्वेत्येतावानेवार्थो भवति यदि प्रगीतेरापदसम्बन्धस्तद्धितेन विवक्ष्यते तदानीमाकारो यकार इकारो रेफ आकारश्चेत्येतैः पञ्चभिर्वर्णैर्निष्पन्नमा ईरारूपं गीयमानेराशब्दप्रातिपदिकं भवति। तादृशात् प्रातिपदिकात् पाणिनीयेन 'वृद्धाच्छः' इति सूत्रेण प्रत्ययान्तरेण प्रत्ययान्तरे सति 'आ' ईरीतं कृत्वेति ब्राह्मणपाठो भवेत्। तस्मान्न गेयमिति

प्राप्ते ब्रूमः, गीयमानस्य गिरापदस्थाने इरापदं विधीयत इति पदमा-त्रस्य बाधो गानं तु न बाध्यते । किञ्च विमुक्तादिसूत्रेणाण् प्रत्ययेऽपि पूर्व्वस्मात् 'मतौ स्थः सूक्तसाम्नोः' इति सूत्रात्सामानुवृत्तेरैरं सामेत्यर्थो भवति । सामत्वञ्च गीतिसाध्यं तदा तु 'तस्य विकारः' इत्यस्मिन्नर्थेऽण् प्रत्ययः । तदानीं गिराया विकार इति विग्रहे यथोक्तं गानं लक्ष्यते तस्माद्गातव्यम् ॥ १० ॥

अथैतस्य स्तोत्रीयातृतीयपादे प्रप्रवयमित्येतस्मिन् प्रप्रेत्येवं नि-न्दित्वा प्रप्रीं वयमिति पठितव्यमित्याह—

**वैश्वानरे वा एतदुद्गातात्मानं प्रदधाति यत्प्रप्र वय-मित्याह प्रप्रीं वयमिति वक्तव्यं वैश्वानरमेव परि-क्रामति ॥ ११ ॥**

अस्याग्नेयत्वादेतदेतेनोद्गाताऽऽत्मानं वैश्वानरेऽग्नौ प्रदधाति प्रक्षि-पति यद्येतत् प्रप्रवयमित्याह ब्रूयात् । अत्राग्नौ प्रक्षेपवाचिनः प्रशब्दस्य सद्भावात्तत्परिहार उच्यते । प्रप्रीं वयमिति वक्तव्यन्तत्र परीत्यक्षरद्वयस-द्भावाद्वैश्वानरमेव परि अतीत्य क्रामतीति । अतो नोक्तदोष इत्यर्थः॥११॥

प्रियमित्रमेति चतुर्थपादेन शब्दं परित्यज्य प्रकारान्तरद्वयेन पठितव्य इत्याह—

**यो वै निह्नुवानं छन्द उपैति पापीयानुद्गाता भवत्येतद्वै निह्नुवानं छन्दो यन्न शंसिषमिति नु शंसिषमिति वक्तव्यं सुशंसिषमिति वा न निह्नुवानं छन्द उपैति वसीयानुद्गाता भवति ॥ १२ ॥**

य उद्गाता निह्नुवानं क्रियमाणं कर्म्म निह्नुवानं छन्दो निह्नु-ववाचिपादोपेतत्वाच्छन्दोऽपि निह्नुवानन्तदुपैति प्राप्नोति स उद्गमि-ष्यन्नुद्गाता पापीयान् भवति । किं तन्निह्नुवानं छन्द इति ? तद्दर्शयति 'न शंसिषम्' इति यत्तदेव निह्नुवानं छन्दः शंसन् स्तुवन्नप्युद्गाता नुशंसिषमिति ब्रूते । अतोऽस्य निह्नुवरूपत्वमतोऽनुशंसिषमिति वक्त-व्यम् । नु इत्येतस्येदानीन्तनकालवाचित्वान्नापह्नवदोषः । यद्वा सुशंसि-षमिति वक्तव्यम् । तथा सति नोक्तदोषवच्छन्दःप्राप्तिः । अत उद्गाता-वानुद्गाता वसीयान् प्रशस्यो भवति ॥ १२ ॥

अथ वाक्प्रकारनिधनं यज्ञायज्ञीयं तन्न स्वरूपेण प्रयोज्यात्

किन्तु प्रथमाक्षरं प्रयोक्तव्यमित्याह—

यस्य वै यज्ञा ऽवागन्ता भवन्ति ऽवाचश्छिद्रेण स्रव-न्त्येते वै यज्ञा ऽवागन्ता ये यज्ञायज्ञीयान्ता एतद्वाच-श्छिद्रं यदनृतं यदग्निष्टोमयाज्यनृतमाह तदन्वस्य यज्ञः स्रवत्यक्षरेणान्ततः प्रतिष्ठाप्यमक्षरेणैव यज्ञस्य च्छिद्रम-पि दधाति ॥ १३ ॥

यस्य यजमानस्य यज्ञा वागन्ता वागिति निधनान्ता भवन्ति ते वाचश्छिद्रेण व्यवधानेन स्रवन्ति निष्फला भवन्ति। वागन्तानन्यान् दर्शयति, एते खलु यज्ञा वागन्ता ये यज्ञा यज्ञायज्ञीयस्तोत्रान्ताः स्युः। कथमस्य वाचश्छिद्रत्वसम्भव इति ? तदुपपादयति यदनृतमेतदेव वाचश्छिद्रन्तदपि कथमत्र सम्भवतीति ? तदत्र सम्भावयति, यद्यपि अग्निष्टोमयाज्यनृतमाह ब्रूते तदनृतच्छिद्रमन्वस्य यजमानस्य यज्ञः स्रवति गलितो भवति तस्य परिहार उच्यते। अन्ततो अग्निष्टोमसामान्ते ऽक्षरेण 'वाक्' इत्यक्षरद्वयेन 'वा' इत्याद्याक्षरेणैव प्रतिष्ठाप्यं समापनीय-मेतत्साम तथा सत्येकेनैवाक्षरेणैव यज्ञस्य छिद्रमनृतवदनमनृतवदनुरू-पमपिदधात्युद्गाता ॥ १३ ॥

उक्तैकाक्षरस्तुत्यन्तरमाह—

ऽविराजो वा एतद्रूपं यदक्षरं ऽविराज्येवान्ततः प्र-तितिष्ठति ॥ १४ ॥

यदक्षरमस्त्येतद्विराजो ऽन्नस्य रूपं खलु। अश्नोतीत्यक्षरं 'विराडि-त्यन्ननाम' विराज इति व्युत्पत्त्या 'अन्नं विराडिति' श्रुतिश्च। तस्यान्नस्य रूपं स्वयशसा लोके व्याप्तं भवति। ततोऽक्षरं विराजो रूपमित्युच्यते। अतोऽक्षरमन्ते सम्पादनेन स यज्ञोऽन्ततो ऽविराज्येव प्रतिष्ठितो भवति॥१४॥

इति ताण्ड्यमहाब्राह्मणेऽष्टमाध्यायस्य षष्ठः खण्डः।

## अथ सप्तमः खण्डः।

अथास्य प्रथमस्तोत्रीयायां सवनानि त्रीण्यपि च्छन्दांस्यवरोहेण सम्पाद्य प्रशंसति—

इतो वै प्रातरूर्द्धानि च्छन्दांᳫसि युज्यन्तेऽमुतोऽवा-ञ्चि यज्ञायज्ञीयस्य स्तोत्रे युज्यन्ते यज्ञा वो अग्नये गिरा च

दक्षस इति द्वादशाक्षरं प्रवयममृतं जातवेदसमित्येकाद शाक्षरं प्रियम्मित्रन्न शꣳसिषमित्यष्टाक्षरम् ॥ १ ॥

प्रातः सवन इतो गायत्रमारभ्योर्ध्वानि छन्दांसि त्रिष्टुबादीनि युज्यन्ते प्रयुज्यन्ते । तृतीयसवनान्ते यज्ञायज्ञीयस्तोत्रे त्वमुतो जागता-दर्वाञ्च्यवरोहक्रमाणि छन्दांसि युज्यन्ते तत्कथमिति? स्वयमेव प्रद-र्शयति । आदितः पादद्वयेनावृत्तान्यक्षराणि विहाय द्वादशाक्षराणि तज्जागतं छन्दः । एवमुत्तरयोरपि द्रष्टव्यम् ॥ १ ॥

अथोक्तच्छन्दस्त्रयमेकीकृत्यानुष्टुभं सम्पाद्य प्रशंसति—

अनुष्टुभमुत्तमाꣳ सम्पादयतीयं वा अनुष्टुबस्या-मेव प्रतितिष्ठति ॥ २ ॥

उक्तप्रकारेण पादचतुष्टयाक्षरपरिगणनायामेकत्रिंशदक्षराणि भव-न्ति । 'न वा एकेनाक्षराणि च्छन्दांसि वियन्ति'इति शास्त्रादनुष्टुप्छन्दो भवति । ततश्च कथं प्राशस्त्यमिति तद्दर्शयति । एषाऽनुष्टुबियं वै भूरेव खलु । अनुष्टुभः समसंख्यारूपपादचतुष्टयसद्भावात्प्रतिष्ठात्मिका भूमि-रपि सर्वेषां प्रतिष्ठा । अतस्तद्रूपत्वेन स्तुतिः । अतोऽनया स्तुवन् यजमानोऽस्यामेव भूमौ प्रतिष्ठितो भवति ॥ २ ॥

अथ सम्पादितमेवानुष्टुभं द्वेधा प्रशंसति—

वाग्वा अनुष्टुब्वाच्येव प्रतितिष्ठति ज्यैष्ठ्यं वा अनुष्टुब्जैष्ठ्य एव प्रतितिष्ठति ॥ ३ ॥

उक्तप्रकारेणैव सर्ववागात्मिकानां जगतीत्रिष्टुब्गायत्रीणामनुष्टु-बन्तः पातित्वादनुष्टुब्वागित्युच्यते । अत एव हेतोरनुष्टुभो ज्येष्ठत्व-मपि । शिष्टं स्पष्टम् ॥ ३ ॥

अथ यज्ञायज्ञीयस्य गानं प्रश्नोत्तराभ्यां दर्शयति—

कथमिव यज्ञायज्ञीयङ्गेयमित्याहुर्यथाऽनड्वान् प्र-स्त्रावयमाण इत्थमिव चेत्थमिव चेति ॥ ४ ॥

कथमिव यज्ञायज्ञीयं साम गेयमिति गानप्रकारविषयं प्रश्नं कुर्वन्ति ब्रह्मवादिनस्तत्रेदमुत्तरमभिज्ञा आहुः कथं? यथाऽनड्वान् प्रस्त्रावयमाणो मूत्रधारां सततं वक्रां भूमौ पातयमान इत्थमिव पृथक् पृथक् प्रकार-मनृजु कुर्वन्नेति तद्वत् गेयमित्याहुः । इतिशब्द अभिज्ञोत्तरसमाप्तिद्यो-तनार्थः ॥ ४ ॥

इत्थमिव चेत्थमिवेत्युक्तं विवृणोति—

वैश्वानरं वा एतदुद्गाताऽनु प्रसीदन्नेतीत्याहुर्य्यद्य-ज्ञायज्ञीयस्यर्चं संप्रत्याहेति परिक्रामतेवोद्गेयं वैश्वा-नरमेव परिक्रामति ॥ ५ ॥

यद्यपि यज्ञायज्ञीयस्य स्तोत्रीयामृचं सम्प्रतीदानीमाहाधीतेनैव पाठेन ऋजुनैवाहोद्गातैतदेतेन वैश्वानरमेवानु—आनुकूल्येन प्रसीदन् प्रकर्षेण सन्निधिं गच्छन्नेवैतीत्याहुः। तच्च गमनन्दाहाय भवति। अत-स्तत्परिहाराय परिक्रामते च। अध्ययनपाठमतिक्रम्य ब्राह्मणोक्तप्रकारे-णेतरेभ्यो विलक्षणमितस्ततः क्रामतेवोद्गेयम्। तेन वैश्वानरमेव परि-क्रामति—अग्निसन्निकर्षमप्राप्यैव लम्भयति ॥ ५ ॥

अथैतच्छिरः प्रावृत्य गातव्यमिति सार्थवादं विदधाति—

वैश्वानरे वा एतदध्वर्य्युः सदस्यानभिसृजति यद्य-ज्ञायज्ञीयस्य स्तोत्रमुपावर्त्तयति प्रावृतेनोद्गेयं वैश्वानरे-णानभिदाहाय ॥ ६ ॥

यज्ञायज्ञीयस्य स्तोत्रमुद्गातृनुपावर्त्तयति प्रेरयति। 'अस्युर्जमुर्जिवा-ससर्जे'त्यादिनोपावर्त्तध्वमिति ह्यध्वर्य्युः स्तोत्रमुपाकरोति। एतदेतेन स्तो-त्रोपाकरणरूपेण वैश्वानरेणैव खल्वध्वर्युः सदस्यानभिसृजत्यभि-संयोजयति। अतस्तत्परिहाराय प्रावृतेन वेष्टितेन वस्त्रेणोद्गातव्यम्। तच्च प्रावरणमग्न्यनभिदाहाय भवति ॥ ६ ॥

प्रावरणे किञ्चिद्विशेषमाह—

न ह तु वै पितरः प्रावृतञ्जानन्ति यज्ञायज्ञीयस्य वै स्तोत्रे पितरो यथायथं जिज्ञासन्त आकर्णाभ्यां प्रावृत्य-न्तदेव प्रावृतन्तदप्रावृतञ्जानन्ति पितरो न वैश्वानरो-हिनस्ति ॥ ७ ॥

तुशब्दो वैलक्षण्यार्थः। पितरो यज्ञान्विताः स्वस्वसम्बन्धिन ऋ-त्विजो जिज्ञासमानाः प्रावृतं प्रकर्षेणापिहितशिरसं न ह जानन्ति नैवाधिगच्छन्ति। तेषां यज्ञसम्बन्धिऋत्विजाञ्च जिज्ञासा यज्ञायज्ञीय-स्येत्यादिनोच्यते। यथायथं स्वस्ववंशमनतिक्रम्येत्यर्थः। अतः पितृणां ज्ञानार्थमग्नेरदाहार्थञ्चाकर्णाभ्यां कर्णपर्य्यन्तं प्रावृत्यं प्रावरणं कर्त्त-व्यम्। अत्राभिविधावाकारो मर्य्यादायामित्येके। तथाचापस्तम्बः 'स-

कर्णप्रावृता अकर्णप्रावृता वा स्तुवते इति' एवङ्कृते तदेव प्रावृतमप्रावृतञ्च भवति । अतः पितरोऽपि जानन्ति वैश्वानरो न हिनस्ति ॥ ७ ॥

अथ पत्नीकर्तृकमपामुपसर्जनमपि वैश्वानरात्मकं यज्ञायज्ञीयशान्त्यर्थमिति स्तौति—

**अपः पश्चात् पत्न्य उपसृजन्ति वैश्वानरमेव तच्छमयन्त्यापो हि शान्तिः ॥ ८ ॥**

पत्नयः पश्चाद्गार्हपत्यायतनमप उपसृजन्ति तेन वैश्वानरमेव शमयन्ति । अपां शान्तिरूपत्वं प्रसिद्धम् ॥ ८ ॥

न केवलमनेन शान्तिः क्रियते किन्तु प्रजननहेतुरप्येवमिति स्तौति-

**अथो रेत एव तत्सिञ्चन्त्यापो हि रेतः ॥९॥**

अपां रेतस्त्वं 'अद्भिरभिषिञ्चन्ति रेतो वै आपः' इति तैत्तिरीयायादिषु प्रसिद्धम् ॥ ९ ॥

अत्रैव विशेषमाह—

**दक्षिणानूरूनभिषिञ्चन्ति दक्षिणतो हि रेतः सिच्यते॥१०॥**

अर्थस्तु स्पष्ट एव । एतदेव दक्षिणतो रेतः सेकस्य मूलमिति ज्ञातव्यम् ॥ १० ॥

अथोरुसेचनार्थमंशुकसङ्कोचमाह—

**महदिव प्रत्यूह्यम्मन एवास्य तज्जनयन्ति ॥ ११ ॥**

महदिवात्यन्तं प्रत्यूह्यं संवृतस्य विवरणं कार्य्यं वस्त्रस्यापोहनं कार्य्यमित्यर्थः । तथाच तैत्तिरीयकं 'नग्नं कृत्वोरुमुपप्रवर्त्तयन्तीति' तत्तेन निर्लज्जमत्यन्तं वस्त्रप्रत्यूहनेनास्योरूमध्यस्थापितोदकस्य रेतः सेकस्थानीयस्य तत्स्थानीयमुदयन्तामित्यर्थः । मन एव जनयन्ति मनस्विनं पुत्रमुत्पादयन्तीत्यर्थः । जनयन्तीति प्रयोगबहुत्वापेक्षया बहुवचनम् ॥११॥

अथाध्वर्य्युभिः कारयितव्यमपातृकर्तृकं पत्नीसंख्यापनं विधत्ते—

**उद्गात्रा पत्नीः संख्यापयन्ति रेतोधेयाय ॥१२॥**

प्रजापतिर्व्वोद्गाता'इत्युक्तम् । अतोऽध्वर्य्युभिः क्रियमाणमुद्गात्रा संख्यापनं रेतोधेयाय पत्नीषु रेतोधारणाय भवति । अपः पश्चात्पत्न्य उपसृजन्तीत्यारभ्योद्गात्रा पत्नीः संख्यापयन्ति । रेतोधेयायेत्यन्तस्यार्थस्तैत्तिरीयके वाक्यव्यत्यासेनेष्टा पत्नीमुद्गाता संख्यापयति 'प्रजापतिर्व्वा एष उद्गाता प्रजानां प्रजननायोपप्रवर्त्तयति रेत एव तत्सिञ्चत् पूर-

णोपप्रवर्त्तयत्पूरणा हि रेतः सिच्यते' इत्यादिना प्रतिपादितः अत्रोद्गातुर्हिंकारसमये पत्न्यवलोकनार्थमध्वर्य्युः प्रैषं करोति ॥ १२ ॥

अत्र पत्नीसंख्यापनमाह—

**हिङ्कारं प्रति संख्यापयन्ति हिङ्कृताद्धि रेतोऽधीयत ॥१३॥**

यज्ञायज्ञीयस्य तिसृणामपि स्तोत्रीयाणामादौ यदोद्गातारो हिंकुर्वन्ति तस्मिन् काले प्रतिसंख्यापयन्तीत्यर्थः। हिंकृतरेतोधानस्यैतदेव ज्ञापकम्। अत्रापस्तम्बः 'हिङ्कृत्य वाग्यतः स्त्रियमुपेयाद्यज्ञाहरेद्वेति॥१३॥

संख्यापनस्य त्रिवारं विधत्ते—

**आतृतीयायाः संख्यापयन्ति त्रिवृद्धि रेतः ॥ १४ ॥**

तृतीयास्तोत्रीयापर्य्यन्तं हिङ्कारं प्रत्युद्गात्रा संख्यापयन्त्यध्वर्य्यवः शरीरेन्द्रियान्तःकरणरूपेण तत्त्रिवृद्धि रेत इत्युक्तम् ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणेऽष्टमाध्यायस्य सप्तमः खण्डः।

## अथाष्टमः खण्डः।

उक्तोऽग्निष्टोमः, अथ तस्यैव संस्थाभेदस्योक्थस्य स्तोत्राणि विधातुमाख्यायिकामाह—

**देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन्नभिजेतुन्तेऽग्निमब्रुवंस्त्वया मुखेनेदञ्जयामेति सोऽब्रवीत् किम्मे ततः स्यादिति यत्कामयस इत्यब्रुवन् सोऽब्रवीन्मद्देवत्यासूक्थानि प्रणयानिति ॥ १ ॥**

देवा वा अग्निष्टोममभिजित्योक्थानि नाशक्नुवन्। अशक्तास्तेऽग्निं त्वया मुखेन पुरोगन्त्रेदमुक्त्वा स्तोत्रजपविषयमसुरसंग्रामं जयामेत्यब्रुवन्। एवमुक्तोऽग्निस्ततो जपान् मे किं फलं स्यादित्यब्रवीत्। ते च देवास्तर्हिं यत् फलं कामयस इत्यब्रुवन्। सोऽग्निर्मद्देवत्यासु स्तोत्रीयासूक्थानि स्तोत्राणि प्रणयान् प्रणयेयुरित्यब्रवीत्। तथाङ्गीचक्रुरिति शेषः ॥ १ ॥

इदानीमुक्थस्तोत्रीयास्वाग्नेयत्वं विधत्ते—

**तस्मादाग्नेयीषूक्थानि प्रणयन्ति ॥ २ ॥**

तस्मादग्निना वृतत्वात्। अत्रापूर्वार्थत्वात् प्रणयेयुरिति विधिरव-

गन्तव्यः ॥ २ ॥

अथ तत्स्तोत्रीयाणां गायत्रीच्छन्दस्त्वं विधत्ते—

**तस्मादु गायत्रीषु गायत्रच्छन्दा ह्यग्निः ॥ ३ ॥**

तस्मादु—अग्निना वृतत्वादेव तच्छंस्त्वाग्नेयीषूक्थानां स्तवनं गायत्रत्वस्य कः सम्बन्ध इति? उच्यते। गायत्रच्छन्दा ह्यग्निरिति प्रजापतेर्मुखात् सहोत्पन्नत्वादग्नेर्गायत्र्यभवदित्युक्तत्वाच्चाग्निर्गायत्रच्छन्दोऽभिमानी। आग्नेयस्य वृतत्वादाग्नेयच्छन्दसोऽपि सम्बन्ध इत्यर्थः ॥ ३ ॥

अथोक्तानि साकमश्वेन विधित्सुस्तत्साम निर्वचनद्वारा प्रशंसति—

**तेऽग्निम्मुखं कृत्वा साकमश्वेनाभ्यक्रामन् यत्साकमश्वेनाभ्यक्रामंस्तस्मात् साकमश्वम् ॥ ४ ॥**

ते देवा अग्निमेव मुखं पुरोगामिनं कृत्वाऽश्वेणाश्वरूपेणाग्निना साकं सार्द्धमभ्यक्रामन् शत्रूनत्यक्रामयन् । यस्मादेवमकुर्वंस्तस्मात्साकमश्वमिति तत् साम्नोनाम सम्पन्नम् ॥ ४ ॥

इदानीं तत्साम विधत्ते—

**तस्मात्साकमश्वेनोक्थानि प्रणयन्त्येतेन हि तान्यग्रेऽभ्यजयन् ॥ ५ ॥**

तस्मादित्यादि स्पष्टम्। तान्यक्षरसम्बन्धीन्युक्थान्येतेन साम्नाऽभ्यजयन्नित्येतत्तस्मादित्यस्य विवरणम्। एतद्धि 'साकमश्वमेह्यूषु ब्रुवाणि ते' इत्यादिष्वाग्नेयीषु गायत्रीषु क्रियते। सर्वेषु स्तोत्रेषु स्वसमानदेवत्यानि शस्त्राणि भवन्ति ॥ ५ ॥

उक्थेषु तु स्तोत्रीयानुरूपेभ्योऽनन्तरमन्या अन्या देवताः कथं शस्यन्त इति? तत्समाधत्ते तत्रैन्द्रावरुणलक्षणं देवतावैलक्षण्यं परिहरति—

**स इन्द्रोऽब्रवीत्कश्चाहञ्चेदमन्ववैष्याव इत्यहञ्चेति ह वरुणस्तं ह वरुणोऽन्वतिष्ठदिन्द्र आहरत्तस्मादैन्द्रावारुणमनुशस्यते ॥ ६ ॥**

देवानां मध्ये स इन्द्र एवमब्रवीत्। किमित्युच्यते? कश्च को देवः अहं चेन्द्र इदं संग्राममुक्थजयार्थमनुक्रमेणावैष्यावोऽवगमिष्याव इति। अहं च त्वं चान्ववैष्याव इति वरुणोऽब्रवीत्। तमिन्द्रं वरुणोऽनु पश्चात् सहायत्वेनातिष्ठत्। इन्द्रस्तु स्वयमेवाहरदानयदुक्थानि। यस्मादेवं तस्मादैन्द्रावारुणमिन्द्रवरुणदेवताकं सूक्तमुक्थस्तुतमनुशस्यते। अतो वैलक्षण्यमित्यर्थः ॥ ६ ॥

एवमैन्द्राबार्हस्पत्यैन्द्रावैष्णवयोरप्युक्थस्तोत्रस्याबैलक्षण्यामिन्द्रेण प्रार्थितत्वादेवेत्याह—

स एवाब्रवीत्कश्चाहं चेदमन्ववैष्याव इत्यहश्चेति बृहस्पतिस्तं बृहस्पतिरन्वतिष्ठदिन्द्र आहरत्तस्मादैन्द्राबार्हस्पत्यमनुशस्यते स एवाब्रवीत्कश्चाहं चेदमन्ववैष्याव इत्यहश्चेति विष्णुस्तं विष्णुरन्वतिष्ठदिन्द्र आहरत्तस्मादैन्द्रावैष्णवमनुशस्यते ॥ ७ ॥

पूर्ववद्योज्यम्। अयमर्थस्तैत्तिरीयके समाम्नायते 'ते देवा असुरा मैत्रावरुणस्योक्थमश्रयन्त सोऽब्रवीदिन्द्रः कश्चाहं चेमानि तेऽसुरानन्ववैष्याव इत्यहं चेत्यब्रवीद्वरुणः' इत्यादिना ॥ ७ ॥

अथ नित्यानामेवोक्थानामभिप्रायभेदात् पशुकामनार्थत्वमप्यस्तीत्याह—

पशून् वा एभ्यस्तानाहरत्पशवो वा उक्थानि पशुकाम उक्थेन स्तुवीत पशुमान् भवति ॥ ८ ॥

एभ्योऽसुरेभ्यः सकाशाद्यान्युक्थान्याहरत्। एतान् पशूनेव खल्वाहरत्। कथमुक्थान्येव पशव इति? तदुच्यते 'पशवो वा' इति। अतः पशुकाम उक्थेन स्तुवीत स्तौति चेत् पशुमान् भवत्येव तेषामुक्थरूपेण स्थितत्वादित्यभिप्रायः ॥ ८ ॥

एवं साकमश्वमुक्थमुक्त्वा सौभरं द्वितीयमुक्थं विधित्सुराह—

बृहता वा इन्द्रो वृत्राय वज्रं प्राहरत्तस्य तेजः परापतत्तत्सौभरमभवत् ॥ ९ ॥

पूर्वमिन्द्रो वृत्रवधार्थं बृहता साम्ना वज्रं प्राहरत्। तस्य पतितं तेजः सौभरं सामाभवत् ॥ ९ ॥

अथ सौभरप्रसङ्गादतिरात्रेऽपि ब्राह्मणाच्छंसिन उक्थं सौभरमेव कार्य्यमिति विवक्षू रथन्तरपृष्ठे तावदतिरात्रस्य स्तुतिमाह—

जामि वा एतद्यज्ञे क्रियत इत्याहुर्यद्रथन्तरं पृष्ठꣳ रथन्तरꣳ सन्धिर्नान्तरा बृहता स्तुवन्तीति यत् सौभरेण स्तुवन्ति बृहतैव तदन्तरा स्तुवन्ति बृहतो ह्येतत्तेजो यत्सौभरम् ॥ १० ॥

पृष्ठसन्धिस्तोत्रे च रथन्तरस्य करणादन्तरा मध्ये बृहतैव स्तु-

वन्ति तज्जामित्वदोषपरिहाराय भवति 'कथं बृहता स्तुतं भवति सौभरादिति ? तदुच्यते 'बृहतो ह्येतदित्यादिना ॥ १० ॥

यद्येवमजामितायै सौभरं क्रियते सर्व्वत्र रथन्तरपृष्ठे स्याद्बृहत्पृष्ठे त्वतिरात्रे किं मध्यममुक्थं स्यादित्याशङ्क्य ? तत्रापि सौभरमेवेत्याह—

**यदि बृहत्सामातिरात्रः स्यात्सौभरमुकथानां ब्रह्मसाम कार्य्यं बृहदेव तत्तेजसा समर्द्धयति ॥ ११ ॥**

यद्यतिरात्रे बृहत्साम स्यात्तस्मिन् पक्ष उक्थानां मध्ये ब्रह्मसाम ब्रह्मणाच्छंसिन उक्थं सौभरं कार्य्यम । तथा कृते बृहदेव साम स्वतेजोरूपं सौभरमेव स्वकीयेन तेजसा समर्द्धयति ॥ ११ ॥

एवं बृहत्सामपक्षे सौभरं ब्रह्मसामास्तु रथन्तरपक्षे किं ब्रह्मसाम भवेदित्याकाङ्क्षायां ? तत्रापीदमेव सौभरं कर्त्तव्यमित्युक्तवन्तीति यत् सौभरेण स्तुवन्ति बृहता स्तुवन्ति बृहतो ह्येतत्तेजो यत् सौभरमित्याह-

**यदि रथन्तरसाम्ना सौभरं कुर्य्यादजामितायै ॥१२॥**

जामि वा इत्यादिनैवोक्तमित्यर्थः ॥ १२ ॥

अथ नित्यप्रयोगार्थमपि सौभरं तद्व्यतिरेकेण स्वर्गप्रतिष्ठार्थयोः प्रयोगयोरपि भवतीत्याह—

**देवानां वै स्वर्गं लोकं यन्तां दिशोऽव्लीयन्त ताः सौभरेणो इत्युदस्तभ्भुवꣳस्ततो वै ता अदृꣳहन्त ततः प्रत्यतिष्ठꣳस्ततः स्वर्गं लोकं प्राजानन्यः स्वर्गकामः स्याद्यः प्रतिष्ठाकामः सौभरेण स्तुवीत प्र स्वर्गं लोकं जानाति प्रतितिष्ठति ॥ १३ ॥**

पूर्व्वं स्वर्गं गच्छतां देवानां 'सप्तम्यर्थे षष्ठी' देवेषु स्वर्गं यत्सु सत्सु दिशोऽव्लीयन्त शिथिला आसन् । ता दिशो देवाः सौभरेण सौभरसम्बन्धिना 'ऊ' इति निधनेन उत् स्तम्भुवन् उपरि स्तम्भितवन्तः । ततः स्तम्भनात्स्वयमपि प्रतिष्ठिता आसन् । तत एव स्वर्गं लोकं प्राजानन् स्वाधीनं चक्रुः । अत उभयकामः सौभरेण स्तुवीत स्पष्टमन्यत् । अस्य फलार्थविधानेनैव नित्यप्रयोगेऽप्येतद्विहितं भवतीत्यभ्युपगन्तव्यम् ॥१३॥

तस्य 'ऊ' इति निधनभेदेन यथा स्वर्गार्थत्वमुक्तन्तथा 'ऊर्ग्' इति निधनभेदेनान्नार्थत्वमपि विवक्षुराह—

**प्रजापतिः प्रजा असृजत ताः सृष्टा आशनायꣳ**

स्ताभ्यः सौभरेणोर्गित्यन्नं प्रायच्छत्ततो वै ताः समैधन्त ॥१४॥

पूर्वं प्रजापतिना सृष्टाः प्रजा यदाशनायन्नशनमैच्छन् । ताभ्यः सौभरेण साम्ना 'ऊर्ग्' इत्यन्नं प्रायच्छत्। ततः खलु ताः समृद्धा अभवन्॥१४॥

इदानीं विधत्ते—

समेधन्ते ताᳬ समां प्रजा यत्रैवँ विद्वान् सौभरेणोद्गायति ॥ १५ ॥

यद्यस्मिन् सम्वत्सरे यस्य यजमानस्य प्रयोग एवमूर्गिति निधनमन्नद्वारा समृद्धिसाधनमिति विद्वान् सौभरेणोङ्निधनेनोद्गायति तां समां तस्मिन् सम्वत्सरे तस्य यजमानस्य प्रजा अन्नेन समेधन्ते॥१५॥

अथैतत्सामनिर्वचनद्वारा प्रशंसति—

ता अब्रुवन्सुभृतन्नोऽभार्षीरिति तस्मात्सौभरम् ॥१६॥

ता अन्नेन समृद्धाः प्रजाः प्रजापतिं यस्मान्नोऽस्मान् सुभृतमभार्षीत् भृतवानित्थं स्तुवीत तस्मात् सौभरमिति नाम सम्पन्नम् ॥ १६ ॥

प्रजापतिर्यदन्नं ताभ्यः प्रायच्छत्तद्वृष्टिद्वारेत्याह—

वृष्टिं वा अभ्यस्तां प्रायच्छदन्नमेव ॥ १७ ॥

यदन्नमेव प्रायच्छत् प्रजापतिस्तां वृष्टिमेव प्रायच्छद्वृष्टिशब्दापेक्षया तच्छब्दस्य स्त्रीलिङ्गता ॥ १७ ॥

एवमेतत् पृथक् पृथक् फलसाधनत्वेन विहितं समुच्चित्याह—

यो वृष्टिकामः स्याद्योऽन्नाद्यकामो यः स्वर्गकामः सौभरेण स्तुवीत ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

अथ 'वृष्टिं वा अभ्यस्तां प्रायच्छत्' इत्यनेन सूचितस्य वृष्ट्यर्थप्रयोगस्य निधनं पूर्वविहितस्वर्गान्नसाधननिधनेनापि निर्दिश्य तस्मिन्नेव सामनि कामनाभेदेन व्यवस्थापयति—

हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामायो इति स्वर्गकामाय ॥ १९ ॥

हीषित्येतद्वृष्ट्यनुसरणरूपत्वात्तत्कामायोचितम्। ऊर्गित्येतत्साक्षादन्ननाम 'ऊ' इत्येतदूर्ध्वगमनस्य सादृश्यात्स्वर्गायोचितम् ॥ १९ ॥

एवमस्य बहुफलसाधनत्वमुचितं कोऽस्य विशेषस्तं दर्शयति—

सर्वे वै कामाः सौभरᳬ सर्वेष्वेव कामेषु प्रतितिष्ठति॥२०॥

सर्वे कामा हि सर्वकामसाधनं सौभरमित्यर्थः। तत्र 'स्वामिच्छावितारं ववृमहे' इति श्रूयते। सर्वैः कामै रक्षितारमिन्द्रं ववृमहे प्रार्थयाम इति तस्यार्थः। अतोऽस्य सर्वकामार्थत्वं यो वृष्टिकामः स्याद्योऽन्नाद्यकाम इत्यादिवाक्यद्वयं विषयीकृत्य पूर्वतन्त्रे द्वितीयस्य द्वितीयान्ते किं सौभरफलान्तरप्रतिपादकानि 'हीष्' इत्यादीनि वाक्यानि?उत सौभरफलानामेव व्यवस्थापकानीति विचार्य्य सौभरफलस्यैव व्यवस्थापकानीति सिद्धान्तितन्तन्न्यायोऽत्र संगृह्य प्रदर्श्यते,

वृष्ट्यन्नस्वर्गकामानां सौभरस्तोत्रमीरितम् ।
निधनान्यपि हीषूर्गू इति वृष्ट्यादिकामिनाम् ॥
फलान्तरं किं वृष्ट्यादि हीषादीनामुतोदिते ।
सौभरे फलसंभिन्ने निधने विनियम्यते ॥
फलान्तरं चतुर्थ्योक्तं वृष्टिकामाय हीषिति ।
सौरभस्य फलं हीषित्युक्त्वा वृष्टिर्विवर्द्धते ॥
नोस्व वृष्टयन्नकामानामन्यत्वं प्रत्यभिज्ञया ।
नियमेऽपि चतुर्थ्येषा तादर्थ्यादुपपद्यते ।

यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः सौभरेण स्तुवीत सर्वं सौभरमिति समाम्नायः पुनःसमाम्नातं 'हीष्' इति वृष्टिकामाय निधनं कुर्य्यात्'ऊर्ग्'इत्यन्नाद्यकामाय'ऊ' इति स्वर्गकामायेति।सौभरं नाम सामविशेषः निधनं नाम पञ्चभिः सप्तभिर्भागैरुपेतस्य साम्नोऽन्त्योभागः। तस्मिन्निधने हीषादयो विशेषाः।सौभरसामसाध्यस्तोत्रफलेभ्यो वृष्ट्यादिभ्योऽन्यानि वृष्ट्यादिफलान्यानयितुं विधीयन्ते कुतः? हीषादिविधिवाक्ये वृष्टिकामायेत्यादिना चतुर्थीश्रवणात्। चतुर्थीति तादर्थ्यं ब्रुवन्तीति हीषादीनां वृष्ट्यादिकामपुरुषशेषत्वं गमयति। तच्छेषत्वं च पुरुषाभिलषितफलसाधनत्वे सत्युपपद्यते ततः सौभरस्य हीषिति निधनविशेषणस्य च फलभूते द्वे वृष्टी भवतः। तदुभयमेलनान्महती वृष्टिश्चेति प्राप्ते ब्रूमः।सौभरविधौ यो वृष्ट्यादिकामः स एव हीषादिविधौ प्रत्यभिधौ प्रत्यभिज्ञायते।ततः सौभरस्य फलभूता ये वृष्ट्यादयस्त एव हीषादिवाक्येष्वनूद्यन्त इति न फलान्तरम्। अथोच्यते नूतनफलाभावाद्धीषादीनां वचनानां शाखाध्ययनादेव सौभरप्राप्तत्वादनर्थकोऽयं विधिरिति?तन्न फलत्रयकामानां त्रयाणामनियमेन हीषादिमध्ये तस्य कस्य चिन्निधनस्य प्राप्तौ विधिनियमार्थत्वात्तदर्थन्तु फलान्तराभावेऽपीति सौभर हीषादीनां नियम्यमानत्वादुपपद्यते। तस्मादयं निधनविशेषनियमो न विधिः॥ २० ॥

एवं द्वितीयमुक्थमभिधायाथ तृतीयं विदधाति—

**अथैतन्नार्म्मेधम् ॥ २१ ॥**

अथ सौभरानन्तरमेतद्विधीयमानं नार्म्मेधं साम कार्य्यमिति शेषः ॥२१॥

अस्य प्रवृत्तिनिमित्तं प्रदर्शयन् प्रतिष्ठासाधनत्वमाह—

**नृमेधसमाङ्गिरसꣳ सत्रमासीनꣳ श्वभिरभ्याह्वयन् सोऽग्निमुपाधावत्पाहि नो अग्न एकयेति तं वैश्वानरः पर्य्युदतिष्ठत्ततो वै स प्रत्यतिष्ठत्ततो गातुमविन्दन ॥२२॥**

अङ्गिरसः पुत्रं नृमेधानामानं सत्रानुष्ठायिनमितरे सत्रमासीना ऋत्विजः श्वाभिर्हन्तुमभ्याह्वयन्। सोऽग्निं 'पाहि नो' इत्यृचा प्रगाथेन वोपाधावत्। पूर्व्वमनृषिभिः सत्रं यद्दृष्टेन मन्त्रेणोपाधावत् प्रार्थयत्। तं रक्षितुं मन्त्रदेवताग्निः पर्य्युदतिष्ठत् प्रादुरभूत्। सोऽग्निरनेन साम्नेन्द्रमुपाधावेति प्राब्रवीदिति शेषः। ततः स नृमेधा एतेन साम्ना प्रत्यतिष्ठत्। ततो गातुं सत्राख्यं श्रेयोमार्गमविन्दत ॥ २२ ॥

तत इदानीन्तनैरपि प्रतिष्ठार्थिभिरेतत्कर्त्तव्यमित्याह—

**गातुविद्वा एतत्साम विन्दते गातुं प्रतितिष्ठत्येतेन तुष्टुवानः ॥ २३ ॥**

एतत्साम नृमेधसः प्रतिष्ठामार्गसाधनत्वाद्गातुविद्धि मार्गलम्भकं खलु। अत एतेन तुष्टुवानोऽपि गातुं मार्गं विन्दते प्रतितिष्ठति च ॥२३॥

अथास्येतरवैलक्षण्येन नानाछन्दस्त्वमाह—

**विच्छन्दस ऋचो भवन्त्यहोरात्रयो रूपम् ॥ २४ ॥**

तस्मिन्नार्म्मेधे विच्छन्दसो नानाच्छन्दोयुक्ता ऋचो भवन्ति कार्य्याः। इत्यर्थमतद्विच्छन्दसस्तदहोरात्रयो रूपमपि विलक्षणम्। अतस्तद्रूपसादृश्यम् ॥ २४ ॥

कुतोऽहोरात्रयोरुपक्लृप्तिस्तत्राह—

**नैव ह्येतदह्नो रूपं न रात्रेर्यदुक्थानाम् ॥२५॥**

यदुक्थानां रूपमस्त्येतन्नाह्नोऽपि रूपं न रात्रेरपि कुतः? तृतीयसवनस्याग्निष्टोमेनैव समाप्तेः पर्य्यायाणाञ्च रात्रे रूपत्वादन्तराले स्थितानामुक्थानामन्यतरस्मिन्नप्यननुप्रवेशात् ॥ २५ ॥

उक्तं विच्छन्दस्त्वं दर्शयति।

**ककुप्प्रथमाथोष्णिगथ पुरउष्णिगनुष्टुसेनानुष्टुभो नयन्त्यच्छावाकसाम्नः ॥ २६ ॥**

'अधीहीन्द्रगिर्वण' इत्येषा ककुम्मध्यमपादस्य द्वादशाक्षरत्वात् 'मध्यमश्चेत्ककुप्'इति तल्लक्षणम्।अथोष्णिक् 'त्रिपदान्त्यो द्वादशक' इति तल्लक्षणम अथ पुरउष्णिगनुष्टुप् प्रायुञ्जन्ति 'हरी इषिरस्य' इत्येषा प्रथमपादस्य द्वादशाक्षरत्वात् 'आद्यश्चेत् पुरउष्णिक्' इति तल्लक्षणम्।ननु पुरउष्णिगष्टाविंशत्यक्षरा अनुष्टुप् द्वात्रिंशदक्षरा कथमनयोः सामानाधिकरण्यमिति ? निदानकार एव तत्समाधत्ते। पुरउष्णिक् तृतीया दाशतय्यान्तां बह्वृचा अधीयन्ते 'युञ्जन्ति हरी इषिरस्य गाथ यौरोरथउरुयुग इन्द्रवाहावचा युञ्जन्ति। तत्र वयं चत्वार्य्यक्षराण्युपाहरामः 'सुवर्विदा' इति सा अनुष्टुप् बृहता 'उपरिष्टात् ज्योतिः' इति तेनानुष्टुप् सम्पादनेनाच्छावाक साम्नःसम्बन्धिन्या अनुष्टुभो न यन्ति नोपगच्छन्ति। आनुष्टुभो ह्यच्छावाकं सर्वं गायत्रे प्रातःसवनेऽच्छावाक 'एनावो अग्निमव सा' इत्यनुष्टुभानुवचनं प्रतिपद्यते। उन्नीयमानं सूक्तं च तस्यानुष्टुभं प्रत्यस्मै पिपीषत इति। अच्छावाकस्यानुष्टुप् सम्बन्ध ऐतरयके श्रूयते। 'अथास्य यच्छन्द आसीदनुष्टुप्तो मुदतमभ्युदौहदच्छावाकीयामीति'॥ २६॥

इति ताण्डमहाब्राह्मणेऽष्टमाध्यायस्याष्टमः खण्डः।

---

## अथ नवमः खण्डः।

साकमश्वं सौभरं नार्म्मेधमिति त्रीण्युक्थानि उद्वंशीयाष्टादंष्ट्रयोरन्यतरद्वा अच्छावाकसाम करिष्यते हारिवर्णन्तु ब्रह्मसाम्नि सौभरेण विकल्पः। अत्र कल्पकारः 'अथात उक्थानि तस्यैव सत आष्टादंष्ट्राच्छावाकसाम्न इत्युपक्रम्य साकमश्वं हारिवर्णमाष्टादंष्ट्रम्' इत्युक्तवान् तत्र ब्रह्मसामाह—

**हारिवर्णं भवति ॥ १ ॥**

ब्रह्मसामेति शेषः॥ १॥

एतत्प्रशंसति—

**असुरा वा एषु लोकेष्वासंस्तान्देवा हरिश्रियमित्यस्माल्लोकात्प्राणुदन्त विराजसीत्यन्तरिक्षाद्दिवेदिव इत्यमुष्मात् ॥ २ ॥**

'तं ते मदम्' इत्यैष्णिहे तृचे हारिवर्णाश्रयभूते तिसृणामृचामन्ते क्रमेण 'हरिश्रियं विराजसि दिवे दिवे' इति श्रूयते तैस्त्रिभिरंशैः पूर्वं

देवा भूरादिलोकत्रयेषु स्वामित्वेन वर्त्तमानानसुरानंशक्रमेणाप्राणु·
दन्त । स्पष्टमन्यत् ॥ २ ॥

अथोक्तार्थवेदनफलमाह—

**तथ एवँ वेदैभ्यो लोकेभ्यो भ्रातृव्यं प्रणुद्येमाँ ल्लो·
कानभ्यारोहति ॥ ३ ॥**

एवं स्तोत्रीयैस्त्रिभिः पदैर्लोकत्रयाद्देवकर्तृकमसुरापनोदनञ्जानाति
सोऽप्येभ्यो लोकेभ्यो भ्रातृव्यं स्वशत्रुं प्रणुद्यापसार्य्यैमान् क्षित्यन्त·
रिक्षद्युलोकानाभिमुख्येनारोहति ॥ ३ ॥

अथ प्रकारान्तरेण प्रशंसति—

**हरिवर्णो वा एतत्पशुकामः सामापश्यत्तेन सहस्रं
पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै ॥ ४ ॥**

निगदव्याख्यानमेतत् । अनेन हरिवर्णेन दृष्टत्वाद्धरिवर्णमित्यस्य
प्रवृत्तिनिमित्तत्वमित्युक्तं भवति ॥ ४ ॥

पश्वभिवृद्ध्यैनतत्प्रशस्य रक्षोऽपहातिसाधनत्वेनापि प्रशंसति—

**अङ्गिरसः स्वर्गँ ल्लोकं यतो रक्षाᳬंस्यन्वसचन्त ता·
न्येतेन हरिवर्णोऽपाहन्त यदेतत्साम भवति रक्षसा·
मपहत्यै ॥ ५ ॥**

पूर्व्वं स्वर्गं लोकं यतो गच्छतोऽङ्गिरसोरक्षांस्यन्वसचन्तान्वग·
च्छन्त तानि यक्षांसि हरिवर्ण एतेन साम्नाऽपाहन्त विनाशितवान् ।
अत इदानीन्तनैरप्येतद्रक्षसामपहत्यै भवति ॥ ५ ॥

अथोद्वंशीयमच्छावाकसाम्नः साम विधित्सुस्तदुत्पत्तिं दर्शयति—

**पृष्ठानि वा असृज्यन्त तेषां यत्तेजो रसोऽत्यरिच्यत
तद्देवाः समभरᳬंस्तदुद्वᳬंशीयमभवत् ॥ ६ ॥**

पूर्व्वं प्रजापतिना पृष्ठानि रथन्तरादिरैवतान्तानि सृष्टान्यभवंस्तेषां
सृज्यमानानां यत्तेजः सामर्थ्यंङ्कोर्थो ? यो रसः सारोऽशोत्यरिच्यता·
तिरिक्तोऽभूत् । तदतिरिक्तं सर्वपृष्ठसम्बन्धितेजः समभरन्नेकीचक्रुः ।
तदेकीभूतन्तेज उद्वᳬंशीयन्नामाभवत् ॥ ६ ॥

अथास्य सर्व्वपृष्ठतेजोरूपत्वेन प्रशस्तत्वं तत्पूर्वतनैः स्तोतृभिर्ज्ञा·
तिप्रयोगाविषयत्वेन समर्थयते—

**सर्व्वेषां वा एतत् पृष्ठानां तेजो यदुद्वᳬंशीयन्तस्मा·**

द्रा एतत्पुरा सजाताय नाक्रन् पापवसीयसो विधृत्यै ॥७॥

उद्वंशीयमिति यदस्त्येतदुक्तरीत्या सर्वेषां पृष्ठानां तेजः खलु तस्मादेव कारणादेतत्साम पुरा सजाताय ज्ञाताय यजमानाय नाक्रन् नाकुर्युः । किमर्थं? पापपुण्ययोरसाङ्कर्याय यस्मादुद्वंशीयं करोति स वसीयान् भवत्येव । अतस्तथा ज्ञातीनां भवेदिति वृद्धेरभिप्रायः ॥ ७ ॥

अथ सजाताप्रयोगनिमित्तं प्राशस्त्यमस्य दर्शयति—

एष ह्येव पृष्ठैस्तुष्टुवानो य उद्वंशीयेन स्तुवते ॥ ८ ॥

उद्वंशीयस्तुतैः सर्वैः पृष्ठै रथन्तरादिभिरपि स्तुतवान् भवतीत्यर्थः । अतोऽस्य प्राशस्त्यम ॥ ८ ॥

अस्य सर्व्वपृष्ठतेजोरूपत्वं प्रतिज्ञातम्, तत् कथमित्याशङ्कय तेषां रूपाण्यत्र सन्तीत्याह—

सर्व्वाणि वै रूपाण्युद्वंशीयम् ॥ ९ ॥

यानि रथन्तरादीनां रूपाणि सन्ति सर्वाण्येवोद्वंशीयं तेषां समुदायात्मकमेतदित्यर्थः ॥९ ॥

रथन्तररूपं तावद्दर्शयति—

गायन्ति त्वा गायत्रिण एति रथन्तरस्य रूपमेति हि रथन्तरम् ॥ १० ॥

'गायन्ति त्वा गायत्रिणः' इत्याकारान्तोऽत्र प्रस्तावभाग एतद्रथन्तरस्य रूपम् । तथा हि 'आ' इति हि रथन्तरं रथन्तरस्य योनौ 'अभि त्वा शूर' इत्यत्र 'आभि त्वा'इति हि गायन्ति । अत उभयोराकारसादृश्यात्तद्रूपत्वम ॥ १० ॥

बृहतो रूपमत्र दर्शयति—

आदिर्बृहत ऊर्ध्वमिव हि बृहत् ॥ ११ ॥

आदि रुद्वंशीयस्याऽद्याक्षरमुकारस्तद्बृहतो रूपम् । तथा हि-यद्बृहत् सामाऽस्ति तदूर्ध्वमिव उपरि वर्त्तते । 'असौ वै लोको बृह'दिति पूर्वमुक्तत्वात् ॥ ११ ॥

अथ वैरूपस्य रूपं दर्शयति—

परिष्टोभो वैरूपस्य परिष्टुभं हि वैरूपम् ॥ १२ ॥

परिष्टोभः स्तोभानां प्रसारो बहुस्तोभत्वं स्तोत्रमुद्वंशीये दृश्यते । स वैरूपस्य वैरूपमपि बहुस्तोभत्वमतस्तद्रूपम ॥ १२ ॥

वैराजस्य रूपं दर्शयति—

**अनुतोदो वैराजस्यानुतुन्नं हि वैराजम् ॥ १३ ॥**

अनुतोदोऽभ्यासः स चोद्वंशीये दृश्यते। तथा हि 'उद्वंशमिव येमिरे' इत्ययं पादो द्विरभ्यस्तः। स च वैराजस्य रूपं वैराजमप्यनुतुन्नं भवति। तथा हि वैराजं 'पिबा सोममिन्द्र' 'इत्येत'दुदनुत्वादनुत्वा इत्यनुतोदयुक्तं भवति ॥ १३ ॥

अथ शाक्वररैवतयोः स्वरूपमत्र दर्शयति—

**अर्द्धेडा शाक्वरीणामतिस्वारो रेवतीनाम् ॥ १४ ॥**

उव्' इति याऽर्द्धेडा दृश्यते। अध्यर्द्धेडा शाक्वरीषु विद्यते तथाऽत्र विद्यमानोऽतिस्वारो रेवतीनां रूपम् ॥ १४ ॥

अथार्द्धेडातिस्वारौ स्तौति—

**अर्द्धेडया वै देवा असुरानवहत्याऽतिस्वारेण स्वर्गं लोकमारोहन् ॥ १५ ॥**

पूर्वमर्द्धेडया खल्वसुरान् स्वर्गगमनविरोधिनोऽवहत्याऽतिस्वारेण स्वर्गं लोकमारोहन्। अर्द्धेडाया असुरहननहेतुत्वं शास्त्रगम्यमेव। अतिस्वारस्य तु ऊर्ध्वारोहात्मकत्वात् स्वर्गारोहणहेतुत्वम् ॥१५॥

उक्तार्थश्च प्रशंसति—

**तथ एवं वेदार्द्धेडयैव भ्रातृव्यमवहत्यातिस्वारेण स्वर्गं लोकमारोहति ॥ १६ ॥**

स्पष्टोऽर्थः ॥ १६ ॥

प्रकारान्तरेण प्रशंसति—

**अर्द्धेडया वै पूर्वं यज्ञꣳ सꣳस्थापयन्त्यतिस्वारेणोत्तरमारभन्ते ॥ १७ ॥**

'उव्' इत्यस्याऽर्द्धेडायाः अतिस्वारात् पूर्वभावित्वात् प्रयोक्तारः पूर्ववृत्तमुक्थसंस्थं यज्ञं संस्थापयन्ति समापयन्ति। उत्तरेणातिस्वारप्रयोगेण ऊर्ध्वारोहात्मकेनोत्तरमुपरितनं यज्ञं षोडशिनमारभन्ते आरम्भवन्तो भवन्ति। 'ननु उवित्यधीयते अर्द्धेडया' इति ब्राह्मणे स्तूयते कथमविरोध इति? न विरोधः। अध्ययने 'उप्' उपा' इति तत्र तत्राऽधीयन्ते तत्तत्स्थाने ब्राह्मणे क्रमेण अर्द्धेडा इडा अध्यर्द्धेडेति व्यवहारदर्शनात्। तथैव प्रयोगकाले उवित्यस्य स्थाने इडिति, उपेत्यस्य स्थाने इडेति, उपा इत्यस्य स्थाने इट् इडेति प्रयुञ्जते ॥ १७ ॥

उक्तार्थवेदिनं प्रशंसति—

उपैनमुत्तरो यज्ञो नमति य एवँ वेद ॥ १८ ॥

स्पष्टोऽर्थः ॥ १८ ॥

अथैतत्साम पशुसाधनत्वेन प्रशंसति—

पाङ्क्तं वा एतत्साम पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञ एव पशुषु प्रतितिष्ठति ॥ १९ ॥

'उद्वंशमिवे'त्यस्य चतुर्थपादस्य द्विरभ्यस्तत्वेन पादपञ्चकोपेतत्वादेतत्साम पाङ्क्तम्। अस्तु पाङ्क्तं किं तत ? इति, अत आह—पाङ्क्तो यज्ञः अग्निहोत्रदर्शपूर्णमासचातुर्म्मास्यपशुसोमभेदेन पञ्चविधत्वाद्यज्ञोऽपि पाङ्क्तः । बहिष्पङ्क्त्याद्यक्षरपङ्क्त्यादिकामे तैत्तिरीयब्राह्मणोदाहरणेन पूर्वत्र प्रदर्शितम्। ततश्च किमिति ? तत्राह पाङ्क्ताः पशवः पशूनां पाङ्क्तत्वं लोमत्वङ्मांसास्थिमज्जाख्यैः पञ्चावयवैरुपेतत्वात् । एवं सति पाङ्क्तोद्वंशीयसाम पांक्ते यज्ञे पशुषु च प्रतिष्ठितो भवति ॥ १९ ॥

अथ समृद्धिं कामयमानस्य आष्टादंष्ट्रयोरन्यतरदच्छावाकसाम कर्त्तव्यमाह—

आष्टादंष्ट्रे ऋद्धिकामाय कुर्य्यात् ॥ २० ॥

ऋद्धिर्मे स्यादिति कामयित्रे अनयोरन्यतरदिच्छया कुर्य्यात् ॥२०॥

अथैते प्रशंसति—

अष्टादंष्ट्रो वैरूपोऽपुत्रोऽप्रजा अजीर्य्यत्स इमाँ ल्लोकान्विचिच्छिदिवाँ अमन्यत, स एते जरसि सामनी अपश्यत्तयोरप्रयोगादबिभेत्, सोऽब्रवीदृध्नवद्यो मे सामभ्याँ स्तवाता इति ॥ २१ ॥

वैरूपो विरूपस्य पुत्रोऽष्टादंष्ट्रो नाम ऋषिः अपुत्रः, कोऽर्थः ? अप्रजाः प्रजा सन्ततिस्तद्रहितः सन् अजीर्य्यत जीर्णोऽभूत् । स इमान् लोकान् सन्तत्यभावेन विच्छिदिवान् 'लिटः क्वसौ रूपम्' विच्छिन्नवान् अमन्यत स ऋषिर्लोकाविच्छेदाय जरसि जरावस्थायामेते सामनी अपश्यत्ताभ्यां प्राजायतेति शेषः। स ऋषिः परमनयोः साम्नोरप्रयोगाज्जीर्णे इमे ते सामनी अपश्यत् । यत अनयोर्वर्त्तनायाऽन्याननुष्ठातॄन् प्रयोजयितुं न शक्नोमि । अतोऽनयोरितः परमप्रयोगो भविष्यतीत्यबिभेत् भीतवान् । एवं भीतः स सर्वेषामनयोः प्रवृत्त्यर्थमेवमब्रवीत् । यः कोऽपि मे सामभ्यां मत्संबन्धिभ्यां स्तवातै स्तुयात् स ऋध्नवत् ऋध्नुयादिति । ऋद्धिफलसंकीर्त्तने सति तदर्थिनः प्रवर्त्तिष्यन्त इत्यभिप्रायः ॥ २१ ॥

अतः समृद्ध्यर्थिभिरेते प्रयोक्तव्ये इत्युपसंहरति—

**ऋषेर्वा एतत्प्राशोद्भूतं यदाष्टादंष्ट्रे भवत ऋध्या एव ॥ २२ ॥**

ऋषेराष्टादंष्ट्रस्य प्राशोद्भूतं प्राशया पुत्रादिलक्षणया प्रकर्षेच्छयोद्भूतमेतत्सामद्वयम् । अतो यत् यदि आष्टादंष्ट्रे भवतस्तर्हि ते समृद्ध्या एव भवतः ॥ २२ ॥

इति ताण्ड्यमहाब्राह्मणे ऽष्टमाध्यायस्य नवमः खण्डः ॥



## दशमः खण्डः ॥

अथ वृद्धिकामनाप्रसङ्गादस्मिन् खण्डे कामनाभेदेनोक्थानि विधास्यति । तत्र प्रथमं ब्रह्मवर्चसकामायाऽऽह—

**गायत्रीषु ब्रह्मवर्चसकामायोक्थानि प्रणयेयुर्गायत्र्यां ब्रह्मसामाऽनुष्टुभ्यच्छावाकसाम सैषा गायत्री सम्पद्यते ॥ १ ॥**

गायत्रीषु ऋक्षूक्थानि प्रणयेयुरुपाक्रमेरन् ब्रह्मवर्चसकामाय नित्यार्था एव 'एह्यास्वे'त्याद्यास्तिस्रो गायत्र्यः सौभराश्रयभूताः काम्यार्था अभिभवेयुः । तथा गायत्र्यां गायत्रीच्छन्दसि गायत्रीष्वित्यर्थः । तास्वेव 'इह्यसि वीरयुः' इत्यादिषु सौभरं ब्रह्मसाम कार्य्यम् । तथा अनुष्टुप्छन्दस्कासु 'इन्द्रं विश्वा अवीवृधन्' इत्याद्यासु नार्मेधमच्छावाकसाम कार्य्यम् । सैषानुष्टुप् गायत्री सम्पद्यते । तत्सम्पत्तिप्रकार इत्थं द्रष्टव्यः· उक्थान्येकविंशस्तोमानि । तत्र तिसृष्वाति तिसृभिरनुष्टुब्भिश्चतस्रो गायत्र्यो भवन्ति । एकविंशत्यनुष्टुब्भिरष्टाविंशतिर्गायत्र्यः सम्पद्यन्ते । शिष्टास्तु स्वत एव गायत्र्यः ॥ १ ॥

अस्त्वेवं, किं तत ? इति, तत्राऽऽह—

**तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे ॥ २ ॥**

ब्रह्मवर्चसं नाम तेजोविशेषः । गायत्र्याश्चाग्नेयत्वात् गायत्र्येव ब्रह्मवर्चसं तेजः । अथवा गायत्रीजपाद्ब्रह्मवर्चसाभिवृद्धिः श्रुतिस्मृतिपुराणादिषु प्रसिद्धा । अतस्तत्प्रयोक्ता ब्रह्मवर्चसलक्षणं तेजोऽवरुन्धे ॥२॥

अथ पशुकामस्याऽऽह—

**गायत्रीषु पशुकामायोक्थानि प्रणयेयुरुष्णिहि ब्रह्मसामाऽनुष्टुभ्यच्छावाकसाम सैषोष्णिक्सम्पद्यते ॥ ३ ॥**

गायत्रीषु नित्यास्वेवोक्थानि प्रणयेयुरुष्णिहि उष्णिकच्छन्दस्कास्वृक्षु 'तं ते मदं गृणीमसि' इत्यादिषु सौभरं ब्रह्मसाम कर्त्तव्यम् । अनुष्टुभ्यच्छावाकसाम । पूर्ववदेव सैषा गायत्र्यनुष्टुप्सम्पत्त्योष्णिग्भवति । सप्त गायत्र्यः षडुष्णिहो भवन्त्येव । एकविंशतिस्तोमत्वादेकविंशतिगायत्रीभिराद्योक्थगाभिरष्टादशोष्णिहः सम्पद्यन्ते । अच्छावाकसाम्नि तु सप्त सप्तानुष्टुभोऽष्टावष्टावुष्णिहो भवन्तीत्येकविंशत्यनुष्टुब्भिश्चतुर्विंशतिरुष्णिहः सम्पद्यन्त इत्युष्णिक् सम्पत्तिः ॥ ३ ॥

उष्णिक् सम्पत्तेः प्रयोजनमाह—

**पशवो वा उष्णिक् पशूनेवावरुन्धे ॥ ४ ॥**

भूयिष्ठपश्चाद्भागा हि पशवो भवन्ति । उष्णिगपि पश्चाद्भागस्यान्त्यपादद्वादशाक्षरोपेतत्वात्तादृशी । अत उष्णिक् पशव इत्युच्यते । स्पष्टमन्यत् ॥ ४ ॥

अथ पुरुषकामायाऽऽह—

**गायत्रीषु पुरुषकामायोक्थानि प्रणयेयुः ककुभि ब्रह्मसामाऽनुष्टुभ्यच्छावाकसाम सैषा ककुप् सम्पद्यते ॥ ५ ॥**

नित्यास्वेव गायत्रीषु च्छन्दः प्रणयनं ककुप्सु नित्यास्वेव 'वयमु त्वामपूर्व्य' इत्यादिषु ब्रह्मसामसौभरमनुष्टुभ्यच्छावाकसाम पूर्ववदेव । सैषोष्णिगेव मध्यपादद्वादशाक्षरा चेत्ककुबुच्यते । अत उष्णिक् ककुभौ स्तोत्रीयागताक्षरसंख्यावैषम्याभावादुष्णिकसम्पत्तिरेव ककुप्सम्पत्तिः ॥ ५ ॥

तत्फलमाह—

**पुरुषो वै ककुप् पुरुषानेवावरुन्धे ॥ ६ ॥**

पुरुषस्य मध्यभागस्थौल्यात् ककुभश्चोक्तप्रकारेण मध्यभागाधिक्यात् तत्साम्येन पुरुषः ककुबुच्यते । अतस्तत्प्रयोगेण पुरुषानेवाऽवरुन्धे ॥ ६ ॥

अथाऽन्नाद्यकामायाऽऽह—

**विराट्स्वन्नाद्यकामायोक्थानि प्रणयेयुरुष्णिहि ब्रह्मसामाऽनुष्टुभ्यच्छावाकसाम सैषा विराट् सम्पद्यते ॥ ७ ॥**

विराट्सु 'आपः पुरन्ध्रिमिणीमदीदेदू' इत्यादिषु त्रिपात्सु साकमश्वे-

नोक्थानि प्रणयेयुरुपक्रमेरन्। उष्णिहि उष्णिकछन्दस्कासु 'तं ते मदम्'-इत्यादिषु सौभरं ब्रह्मसाम कुर्य्युः। अनुष्टुभि नार्मेधमच्छावाकसाम पूर्ववदेव सैषोष्णिगनुष्टुप् विराट् सम्पद्यते। उक्थान्येकविंशस्तोमानीत्युक्तम्। अत एकविंशत्युष्णिहस्तावत्य एवानुष्टुभः त्रिपदाया विराजस्त्रिंशदक्षरत्वात् द्वयेनोनावुष्णिहः। अक्षरद्वयाधिकात्स्वराडनुष्टुभश्च प्रत्येकं द्वे द्वे उष्णिगनुष्टुभौ मिलित्वा द्वे द्वे विराजौ भवत इत्येवं विराट्त्वसम्पत्तिः॥ ७॥

अस्त्वेवं किं तत? इत्याह—

अन्नं विराडन्नाद्यमेवाऽवरुन्धे॥ ८॥

अन्नस्य दशेन्द्रियतृप्तिहेतुत्वादन्नं विराडित्युच्यते। विराट्स्वपि दशसंख्यासद्भावात्। तथा च मन्त्रवर्णः 'सन्द्रामाहे दशतयस्य धासेर्द्वि-र्यत् पञ्च बिभ्रतो यत्पञ्च'। इति यद्वा लोके अन्नसमृद्ध एव विराजति' इत्यन्नं विराडित्युच्यते। स्पष्टमन्यत्॥ ८॥

अथ ज्यैष्ठ्यकामायोक्थान्याह—

अक्षरपङ्क्तिषु ज्यैष्ठ्यकामायोक्थानि प्रणयेयुरुष्णिहि ब्रह्मसामाऽनुष्टुभ्यच्छावाकसाम सैषानुष्टुप् सम्पद्यते॥ ९॥

अक्षरपङ्क्तिषु पञ्चाक्षरात्मकपञ्चपादोपेतासु 'अग्ने तमद्य' इत्यादिषु ज्यैष्ठ्यकामाय साकमश्वेनोक्थानि प्रणयेयुरुष्णिक्ष्वनुष्टुप्सु च सौभरनार्मेधौ ब्रह्माच्छावाकसामनी पूर्ववत् कर्त्तव्ये। अक्षरपङ्क्तिषूष्णिकसम्पत्त्याऽनुष्टुभौ कर्त्तव्ये। अत्राक्षरपङ्क्तीनामुष्णिहाश्चानुष्टुप्त्वसम्पादनमित्थं ज्ञातव्यम्—अक्षरपङ्क्तिषु 'अग्ने तमद्य' इत्यादिष्वाद्यन्ते 'अग्ने तमद्य' एभिर्नो अर्कैः' इत्येते प्रत्येकं पञ्चविंशत्यक्षरे मध्यमा 'अधा ह्यग्ने' इत्येषा। प्रथमे पादे ह्यक्षरस्य विभज्य परिगणनायां षड्विंशत्यक्षरा भवति। तथा सति कृत्स्नस्य स्तोमस्यैकविंशत्वात् स्तोत्रीयास्तिस्रोऽपि प्रत्येकं सप्त सप्त भवन्ति। तत्राद्यन्तयोः स्तोत्रीययोः सप्तवारावृत्तयोस्तु मिलित्वा पञ्चविंशत्यक्षरात्मकाश्चतुर्दशपदपङ्क्तयो भवन्ति। तत्राऽद्यन्तयोः स्तोत्रीययोस्तासामक्षराणि परिगणितानि पञ्चविंशदधिकत्रिशतानि भवन्ति। तानि च द्वात्रिंशदक्षरेण विभक्तानि दशानुष्टुभो भवन्ति। त्रिंशदक्षराणि शिष्यन्ते। तथा मध्यमायाः षड्विंशत्यक्षराया 'अधा ह्यग्ने' इत्यस्याः सप्त मध्यावृत्तायाः द्व्यशीत्यधिकशताक्षराणि स्युः। तेषामपि द्वात्रिंशदक्षरविभागे सति पञ्चाऽनुष्टुभः स्युः। द्वाविंश-

वक्षराणि शिष्यन्ते । तानि पूर्वशिष्टैस्त्रिंशदक्षरैः सहैकानुष्टुप् कृत्वा-विंशतिश्शिष्यन्ते । तथा सौभरस्य ब्रह्मसाम्न उकथस्यैकविंशस्तोमत्वा-देकविंशत्युष्णिहो भवन्ति । तासु मध्ये षोडशोष्णिहश्चतुर्दशाऽनुष्टुभः स्युः । शिष्टासु पञ्चसूष्णिक् । चत्वारिंशदधिकशताक्षराणि चतस्रोऽनु-ष्टुभो भूत्वा द्वादश शिष्यन्ते । तान्यक्षरपंक्त्यवशिष्टैर्विंशत्यक्षरैः सहैकानुष्टुप् सम्पद्यते । इत्येवं पंक्त्युष्णिहोरनुष्टुप्त्वसम्पत्तिः ॥ ९ ॥

अनुष्टुप्सम्पत्तेः फलमाह—

ज्यैष्ठ्यं वा अनुष्टुब् ज्यैष्ठ्यमेवाऽवरुन्धे ॥१०॥

ज्यैष्ठ्यस्य प्रजापतेश्छन्दस्त्वादनुष्टुभो ज्यैष्ठ्यत्वम् । यद्वा सहि-ङ्कारायां गायत्र्यां त्रिष्टुब्जगत्योः स्वस्वपादाक्षरसंख्याद्वारेणानुष्टुभ्यन्तः-प्रवेशादनुष्टुभो ज्यैष्ठ्यत्वम् । अयमर्थ 'अष्टाक्षरा गायत्री हिङ्कारो नवमः' इत्युपक्रम्य च्छन्दोभिरेवानुष्टुभमाप्नोतीत्येवमेवोक्तः

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबु-
क्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते ॥
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
अष्टमाध्यायस्य दशमः खण्डः ॥

अष्टमाध्यायः समाप्तिमगमत् ।

---

# नवमोऽध्यायः ।

## प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
ब्राह्मणाच्छंसिनः काम्यसामाद्युक्थान्तमष्टमे ।
वर्णितं नवमे त्वस्मिन्नतिरात्रादिरुच्यते ॥

तत्र प्रथमखण्डे ससन्धिसामानस्त्रयो रात्रिपर्य्यायाः संग्रहेण प्रद-

दृश्यन्ते। द्वितीये त एव विनियन्ते। तत्रादौ रात्रिपर्य्यायान् विधित्सुराह-

देवा वा उक्थान्यभिजित्य रात्रिन्नाशक्नुवन्नभिजेतुं, तेऽसुरान्रात्रिंतमः प्रविष्टान्नाऽनुव्यपश्यᳬंस्त एतमनुष्टुप्शिरसं प्रगाथमपश्यन् विराजं ज्योतिः, तान् विराजा ज्योतिषाऽनुपश्यन्तोऽनुष्टुभा वज्रेण रात्रेर्निराघ्नन् ॥ १ ॥

देवाः पूर्वमसुरेभ्यः सकाशादुक्थान्यभिजित्य रात्रिं रात्रिपर्यायानभिजेतुन्नाशक्नुवन्। ते देवास्तमस्तमोरूपां रात्रिं प्रविष्टानसुरान्नानुव्यपश्यन् अनुगम्य विविच्य द्रष्टुन्नाऽशक्नुवन्। ते देवा असुरदर्शनोपायत्वेनाऽनुष्टुप्शिरसमनुष्टुबुपक्रमगायत्रीद्वयात्मकं 'पान्तमा' इति प्रगाथमपश्यन् सतो बार्हताः प्रगाथा इति प्रसिद्धम्। कथं ?गायत्र्याः प्रगाथत्वमिति नैवंनियमः। अत्र ह्युत्तरभूते गायत्र्यौ 'पुत्रहतम्' इत्यादिकेऽनुष्टुप्प्रकारं स्तूयेते। अथ प्रग्रथनसम्भवादयमपि गायत्रतृचोऽनुष्टुप्सम्पत्तेः प्रगाथ इत्युच्यते। तथा च निदानं "आनुष्टुभा अपि प्रगाथा भवन्तीत्येके। अनुष्टुप् प्रथमा गायत्र्या उत्तरे यथा 'पुरोजिती वो अन्धस, आत्वा रथं यथोतये, विशो वो अतिथिं पान्तमावो अन्धस इतीति" तथा अयं प्रगाथ एव विराडाख्यं ज्योतिः। अतः प्रगाथदर्शनमेव विराड्रूपज्योतिर्दर्शनम्। यद्यप्यसौ न विराट्छन्दस्कस्तथापि 'पुरोजिती वो अन्धस' इत्यत्र 'पद्याचाक्षर्य्या च विराजौ भवत' इति पूर्वं प्रतिपादितत्वात्। तद्वत् एकस्या अनुष्टुभो द्वयोरेव गायत्र्योः पादानां परिगणने दशसंख्यासद्भावाद्या विराडित्युच्यतेऽत एव तमःप्रविष्टानामसुराणां विराजनसाधनत्वात् ज्योतिष्ट्वमुपचर्य 'विराजं ज्योतिरपश्यत्' इत्युक्तम्। तानसुरान् विराजा ज्योतिषा अनुक्रमेण दृष्ट्वा अनुष्टुभा वज्रेण रात्रेः सकाशान्निराघ्नन् निरगमयन् 'नाभ्नि वाग्वज्र' इति श्रुत्यन्तराद्वयो वज्ररूपत्वं 'वागनुष्टुप्' इति श्रुतेश्चानुष्टुभो वाग्रूपत्वमित्यनुष्टुभो वज्रत्वव्यपदेशः ॥ १ ॥

अत इदानीन्तनैरप्ययं प्रगाथः कर्त्तव्य इति विदधाति—

यदेषोऽनुष्टुप्शिराः प्रगाथो भवति विराडेव ज्योतिषाऽनुपश्यन्ननुष्टुभा वज्रेण रात्रेर्भ्रातृव्यं निर्हन्ति ॥२॥

व्याख्यातप्रायमेतत् ॥ २ ॥

रात्रेर्निराघ्नन्निति सामान्येनोक्तं विवृण्वन् पर्य्यायशब्दं निर्वक्ति—

तान् समन्तं पर्य्यायं प्राणुदन्त यत् पर्य्यायं प्राणु·

दन्त तत्पर्य्यायाणां पर्य्यायत्वम् ॥ ३ ॥

यद्यस्मात् समन्तं रात्रेः सर्व्वतः पर्य्यायं यत्र यत्राऽसुराः पराभूतास्तिष्ठन्ति तं तं देशं परीत्य परीत्य प्राणुदन्त प्रणोदनमकुर्व्वन् । तत्पर्य्यायाणां पर्य्यायत्वं सम्पन्नम् ॥ ३ ॥

प्रगाथमपर्य्यायेष्वित्युक्तम्, तस्य प्रथमपर्य्यायगतस्य प्रग्रथनप्रकारमाह—

प्रथमानि पदानि पुनरादीनि भवन्ति प्रथमस्य पर्य्यायस्य ॥ ४ ॥

प्रथमपर्य्यायस्य प्रथमानि पदानि गायत्र्योरुत्तरयोर्ऋचो प्रथमपादगतानि पदानि पुनरादीनि पुनरादीयन्तेऽभ्यस्यन्त इति । पुनरादीनि तादृशानि भवन्ति । पुत्रहतं पुरुष्टुतमिति द्विरावर्त्तयेदित्यर्थः ॥ ४ ॥

उक्तनियमविधिसिद्ध्यर्थं देवैः पूर्वमनुष्ठितमिति दर्शयति—

प्रथमैर्हि पदैः पुनरादाय प्रथमरात्रात्प्राणुदन्त ॥ ५ ॥

यतो देवाः पूर्व्वमसुरान् प्रणोदनं प्रगाथगतप्रथमपदानि पुनरादाय प्रथमरात्रादकुर्व्वन् । अत इदानीन्तनैरप्येवं कर्त्तव्यम् ॥ ५ ॥

अथाऽस्य प्रस्तावभागमाह—

पान्तमावो अन्धस इति प्रस्तौति ॥ ६ ॥

स्पष्टम् ॥ ६ ॥

एतत्प्रशंसति—

अहर्वै पान्तमन्धो रात्रिरह्नैव तद्रात्रिमारभन्ते ॥ ७ ॥

अतस्तु सामान्येन स्तुतिः क्रियते । पाति रक्षत्यालोकेनेति पान्तमहः । अन्धीकरणादन्धो रात्रिः । एवं सति पान्तमिति क्रमेण युञ्जन्ति तत्तेनाह्नैव रात्रिमारभन्त उपक्रमन्ते ॥ ७ ॥

प्रगाथं विधाय तत्र साम विधत्ते—

तासु व्वैतहव्यम् ॥ ८ ॥

कर्त्तव्यमिति शेषः ॥ ८ ॥

अथैतस्य प्रवृत्तिनिमित्तं दर्शयन्नवगतिप्रतिष्ठयोर्हेतुत्वेन प्रशंसति—

व्वीतहव्यः श्रायसो ज्योग्निरुद्ध एतत्सामाऽपश्यत्सोऽवगच्छत्प्रत्यतिष्ठदवगच्छति प्रतितिष्ठत्येतेन तुष्टुवानः ॥ ९ ॥

श्रायसः श्रेयसः पुत्रो वीतहव्यो नाम ऋषिः 'दाविकाशिंशपादित्यवाहार्थसत्रश्रेयसामादिति' श्रेयःशब्दस्यादेराकारः । ज्योक् चिरकालं

निरुद्धः शत्रुभिर्निरोधं प्रापितस्तन्निर्गमनायैतत्साम दृष्टवान्। स चानेनाऽवगाच्छदपगतोऽभूत्। अन्यत् स्पष्टम् ॥ ९॥

अस्य साम्नो यदोको इति निधनं तत् प्रशंसति—

तम इव वा एते प्रविशन्ति ये रात्रिमुपयन्ति यदोको निधनꣳ रात्रेर्मुखे भवति प्रज्ञात्यै ॥ १० ॥

ये रात्रिं रात्रिपर्यायाम् उपयन्ति प्रयुञ्जत उद्गातारः, एते तम इव प्रविशन्ति खलु रात्रौ तमःसद्भावात्। अतो रात्रेः प्रथमे पर्यायें ओकोनिधनप्रयोगः प्रज्ञात्यै अनुष्ठेयपदार्थज्ञानाय भवति ॥ १० ॥

कथमस्य प्रज्ञातिहेतुत्वमित्याशङ्क्य तल्लोकप्रसिद्धिबलेन समर्थयति—

यदा वै पुरुषः स्वमोक आगच्छति सर्व्वं तर्हि प्रजानाति सर्व्वमस्मै दिवा भवति ॥ ११ ॥

यदा कश्चित् पुरुषो दूरमध्वनि गत्वा स्वमोकः स्वकीयं सद्म पुनरागच्छति प्राप्नोति स्वचित्तं सर्व्वं धनादिकं तर्हि तदा प्रजानाति। तदेवोच्यतेऽस्मै सर्वं दिवा भवति प्रकाशितं भवतीत्यर्थः ॥ ११ ॥

एवं सङ्ग्रहेण प्रथमपर्यायं विधायाऽथ मध्यमं पर्य्यायं विधातुमाह—

ते मध्यमं पर्यायमश्रयन्त तेषामौर्ध्वसद्मनेन व्वाचमवृञ्जत ॥ १२ ॥

ते प्रथमेन पर्य्यायेण पूर्वरात्रात् प्रनुन्ना असुरा मध्यमं पर्यायमश्रयन्त आश्रयन्। तेषां वाचमौर्ध्वसद्मनेन साम्ना अवृञ्जत अवर्जयन् ॥१२॥

उक्तार्थस्य फलमाह—

व्वाचं भ्रातृव्यस्य व्वृङ्क्ते य एवँ व्वेद ॥ १३ ॥

स्पष्टोऽर्थः ॥ १३ ॥

अत्र त्रिणिधनं विधत्ते—

त्रिणिधनं भवति ॥ १४ ॥

'सुवृक्तिभिः, नृमादनं, भरेषु वा' इति निधनत्रयम् ॥ १४ ॥

उक्तं निधनत्रयं माध्यन्दिनसवनसाम्येन प्रशंसति—

यथा वा अह्नो माध्यन्दिनं सवनं त्रिणिधनायतनमेवमेष रात्रेर्म्मध्यमः पर्य्यायस्त्रिणिधनायतनः सलोमत्वाय ॥ १५ ॥

अह्न एकाहसाध्यस्य ज्योतिष्टोमस्य माध्यन्दिनं सवनं यथा त्रिणि-

धनायतनं निधनत्रयसद्भावेनाऽयतनत्रयोपेतम्।माध्यन्दिनसवने यौधाजये 'पुनान' इत्यत्र 'स्रास' इत्येकं 'द्रास'इति द्वितीयं 'ण्याथा'इति तृतीयमिति हि निधनत्रयं तत्र प्रदर्शितम्। एवमेष रात्रेर्मध्यमः पर्य्यायस्त्रिणिधनायतनः। तत्र प्रथमं त्रिणिधनत्वं सलोमत्वायाऽऽनुलोम्याय ॥ १५ ॥

अथ साम्नां स्तोत्रीयासु 'अयं त' इत्यादिषूत्तरयोरनुष्टुप्त्वाय मध्यमपादावृत्तिपूर्वं देवैस्तथा कृतत्वात् कर्त्तव्येति विधित्सुराह—

मध्यमानि पदानि पुनरादीनि भवन्ति मध्यमस्य पर्य्यायस्य मध्यमैर्हि पदैः पुनरादायम्मध्यमरात्रात्प्राणुदन्त ॥ १६ ॥

इदं वाक्यद्वयं प्रथमपर्यायवाक्यद्वयेनैवोक्तप्रायम् ॥ १६ ॥

अथोत्तमं पर्य्यायमाह—

त उत्तमं पर्य्यायमश्रयन्त तेषां घृतश्च्युन्निधनेन पशूनवृञ्जत पशवो वै घृतश्च्युतः ॥ १७ ॥

घृतं पयः क्षरन्तीति पशव एव घृतच्युतः। अत एतन्निधनेनासुराणां पशुवर्जनं युक्तम् ॥ १७ ॥

उक्तार्थवेदितुः प्रशंसा—

पशून् भ्रातृव्यस्य वृङ्क्ते य एवँ वेद ॥ १८ ॥

इदं ह्यन्वित्यत्र माधुच्छन्दसं सामोत्तरस्मिन्विधास्यते ॥ १८ ॥

ततः स्तोत्रीयासूत्तरयोरनुष्टुप्त्वायान्त्यपादावृत्तिं देवैः कृतत्वात्कर्त्तव्यत्वेन विधत्ते—

उत्तमानि पदानि पुनरादीनि भवन्त्युत्तमस्य पर्य्यायस्योत्तमैर्हि पदैः पुनरादायमुत्तमरात्रात्प्राणुदन्त ॥ १९ ॥

स्पष्टम्। अत्र त्रिष्वपि रात्रिपर्य्यायेषु होतुः सामान्येवोक्तानि। मैत्रावरुणादीनि सामान्युत्तरस्मिन् खण्डे निर्देशक्रमादेवाऽवगन्तव्यानि ॥ १९ ॥

एवं पर्य्यायत्रयमुक्त्वा सन्धिस्तोत्रस्य विधिमुन्नयति—

तान् सन्धिनाऽभिपलायन्त ॥ २० ॥

तान् त्रिभ्यो रात्रिभागेभ्योऽपगत्याऽहोरात्रयोर्यः सन्धिरस्ति तमाश्रितान् सन्धिना सन्धिस्तोत्रेणाऽभिपलायन्त 'अन्तर्णीतण्यर्थोऽयं' अभि अनुसृत्य पलायनमकारयन्त। अतो यज्ञविघातिनां सन्धेरपगमाय सन्धिसामेदानीन्तनैरपि कर्त्तव्यमिति विधिर्द्रष्टव्यः ॥ २० ॥

अथाऽसुराणामसंघातायाऽऽश्विनमाह—

**तानाश्विनेनाऽसꣳहार्यमगमयन् ॥ २१ ॥**

तान् सर्वतः पलायितानसुरानाश्विनेन शस्त्रेणासंहार्यं संहर्तुमयोग्यमगमयन्। यथा मिथो न सङ्गच्छेयुस्तथा कुर्वन्नित्यर्थः ॥ २१ ॥

उक्तार्थवेदितुः फलमाह--

**असꣳहार्यं भ्रातृव्यं गमयति य एवँ वेद ॥ २२ ॥**

स्पष्टोऽर्थः ॥ २२ ॥

अथ रात्रिपर्यायमग्निष्टोमसामसम्पादनेन प्रशंसति--

**एषा वा अग्निष्टोमस्य सम्मा यद्रात्रिः ॥ २३ ॥**

संमा समिति साम्यमिति साम्यमित्यर्थः ॥ २३ ॥

साम्यं दर्शयति--

**द्वादश स्तोत्राण्यग्निष्टोमो द्वादश स्तोत्राणि रात्रिः ॥२४॥**

चत्वार्याज्यानि चत्वारि पृष्ठस्तोत्राणि मिलित्वाऽष्टौ। त्रीण्येकादश( पवमान ) स्तोत्राण्येकं यज्ञायज्ञीयमिति मिलित्वा द्वादशाग्निष्टोमस्य स्तोत्राणि। रात्रिपर्य्यायेष्वपि सन्धिव्यतिरेकेण पर्य्यायं होत्रादीनि चत्वारि चत्वारि स्तोत्राणीत्येवं साम्यम् ॥ २४ ॥

अत्राप्युक्तसाम्येन सन्धिं प्रशंसति—

**एषा वा उक्थस्य सम्मा यद्रात्रिः ॥ २५ ॥**

अत्र रात्रिशब्देन तदनन्तरभावि सन्धिस्तोत्रं लक्ष्यते ॥ २५ ॥

अनयोः साम्यं दर्शयति—

**त्रीण्युक्थानि त्रिदेवत्यः सन्धिः ॥ २६ ॥**

उक्थस्तोत्राण्यपि त्रीणि सन्धिस्तोत्राण्यपि 'अग्निरुषा अश्विनौ' इति त्रिदेवत्य मेवमुभयत्र त्रित्वात्साम्यम् ॥ २६ ॥

समत्वसम्पादनेन उक्तस्याऽग्निष्टोमसमनन्तरभावि नवरात्रिसमनन्तरभावि सन्धिसाम प्रशंसति--

**यथा वा अह्न उक्थान्येवमेष रात्रेः सन्धिर्नानारूपाण्यह्न उक्थानि नानारूपा एते तृचा भवन्ति ॥ २७ ॥**

अह्नो ज्योतिष्टोमसमनन्तरभवान्युक्थानि यथा यादृशानि एवं रात्रेः सन्धिरपि उक्थानां छन्दोभेदान्नानारूपत्वम्। सन्धेस्तु नानाभेदात् देवता नानारूपा इत्युक्तम ॥ २७ ॥

अथ कामनाभेदेन सन्धिस्तोत्रं विवक्षुरादौ प्रतिष्ठाकामायाऽऽह—

**रथन्तरं प्रतिष्ठाकामाय सन्धिं कुर्यात् ॥ २८ ॥**

(१)'एना वो अग्निम्,(२)'प्रत्युअदर्शि'(३)इमा उ वाम्'इति प्रगाथेषु कर्त्तव्ये नित्य एव रथन्तरेऽभिसन्धिभेदात्प्रतिष्ठासाधनत्वमपि ॥ २८ ॥

एतत्प्रशंसति—

**इयं वै रथन्तरमस्यामेव प्रतितिष्ठति ॥ २९ ॥**

स्पष्टम् ॥ २९ ॥

अथ बृहत्स्वर्गायाऽऽह—

**बृहत् स्वर्गकामाय सन्धिं कुर्यात् ॥ ३० ॥**

स्पष्टम् ॥ ३० ॥

बृहत्स्वर्गयोः साम्यमाह—

**स्वर्गो लोको बृहत्स्वर्ग एव लोके प्रतितिष्ठति ॥ ३१ ॥**

द्यावापृथिव्योः मध्ये स्वर्गो द्वितीयः। रथन्तरबृहतोर्मध्ये बृहत् द्वितीयमिति तस्य तत्स्थानीयत्वम् ॥ ३१ ॥

पशुकामाय वैकल्पिकसन्धिसामानि दर्शयति—

**वारवन्तीयं वा वामदेव्यं वा श्रुध्यं वैतेषामेकं पशुकामाय सन्धिं कुर्यात् ॥ ३२ ॥**

विकल्पवाचिनो वाशब्देनैव विकल्पे सिद्धेऽपि पुनरेतेषामेकमिति वचनं विस्पष्टार्थम् ॥ ३२ ॥

एतानि प्रशंसति—

**पशवो वा एतानि सामानि पशुष्वेव प्रतितिष्ठति ॥ ३३ ॥**

एतेषां प्रयोगे पशवो लभ्यन्त इत्येतान्येव पशव उच्यन्ते। अत्रार्षेयकल्पः प्रतिष्ठाकामाय यत् क्लृप्तं रथन्तरसन्धिसामवत् स्वर्गकामस्य बृहत्सन्धिसाम। तेष्वेव प्रगाथेषु वारवन्तीयं वा वामदेव्यं वा श्रुध्यं वैतेषामेकं पशुकामस्य सन्धिं कुर्यादेतेष्वेव प्रगाथेष्विति ॥ ३३ ॥

अथोक्तस्य सन्धिसाम्नोऽनुवचनरूपं होतुर्विधत्ते—

**आश्विनᳫं होताऽनुशᳫंसति ॥ ३४ ॥**

आश्विनाख्यं सन्धिस्तुतं सन्धिस्तोत्रमनु होता शंसेत्। यद्यप्यस्य

---

१. सा. उ. १. २. १३. १. २. सा. उ. १. २. १४. १.

३. सा. उ. १. २. १४. १,

विधानं बहुब्राह्मण एवोचितम्, तथाऽन्यस्य वक्ष्यमाणरूपप्रशंसया पवमानदेवत्यत्वेन स्तोत्रस्य प्रशंसा भवतीति तदर्थमत्रापि विधानम्। उत्तरत्र सर्वाः खलु देवताः शस्यन्त(३७.) इति वक्ष्यति। अतोऽस्य वैश्वदेवत्वं युक्तम् ॥ ३४ ॥

कथमाश्विनमुच्यत इति तद्विवक्षुराह—

प्रजापतिर्वा एतत्सहस्रमसृजत तद्देवेभ्यः प्रायच्छत्तस्मिन्न समराधयꣳस्ते सूर्यं काष्ठां कृत्वाऽऽजिमधावन् ॥ ३५ ॥

पूर्वं प्रजापतिरेतत्सहस्रं सहस्रसंवत्सरमसृजत। तत्सृष्टं देवेभ्यः प्रायच्छदिदं स्वीकुरुतेति। तस्मिन् शस्त्रे न समराधयन् विभागं कृत्वा संसिद्धा अभवन्। ते क उपायः ? इति सञ्चिन्त्य सूर्यं काष्ठामवधिं कृत्वाऽऽजिमधावन्नगच्छन् ॥ ३५ ॥

इदानीमाश्विनसम्बन्धं दर्शयति—

तेषामश्विनौ प्रथमावधावतां तावन्ववदन् सह नोऽस्त्विति तावब्रूतां किं ततः स्यादिति यत्कामयेथे इत्यब्रुवꣳस्तावब्रूतामस्मद्देवत्यमिदमुक्थमुच्याता इति तस्मादाश्विनमुच्यते ॥ ३६ ॥

तेषां देवानां मध्ये अश्विनौ प्रथमौ सन्तावधावतामाजिम्। तौ प्रथमगामिनावनुगत्य देवा अवदन्। किमिति? तच्छस्त्रं नोऽस्माकमपि सहास्त्विति। एवं देवैरुक्तौ भागप्रदानेनास्माकं किं फलमिति देवानुक्तवन्तौ। किमपेक्षितमिति तैः प्रत्युक्ताविदमुक्थमस्मद्देवत्यमिति देवानयाचताम्। यस्मादेवं तस्मादिदं शस्त्रमाश्विनमुच्यते ॥ ३६ ॥

सह नोऽस्त्वित्युक्तं शस्त्रसम्बन्धं दर्शयति—

सर्वाः खलु देवताः शस्यन्ते ॥ ३७ ॥

यस्माद्देवैः प्रार्थितं तस्मादाश्विनशस्त्रे सर्वा देवताः शस्यन्ते। तथा हि 'अग्नि, उषा, अश्विनौ, सूर्य्य, इन्द्रो, मित्रावरुणौ, द्यावापृथिव्यो, निर्ऋति, बृहस्पतिः, इत्येतेऽत्र शस्यन्ते ॥ ३७ ॥

अथाऽस्य शंसने किञ्चिन्नियमद्वयमाह—

क्षिप्रꣳ शस्यमाजिमिव ह्येते धावन्त्यासूर्यस्योदेतोः शꣳसेत्सूर्यꣳहि काष्ठामकुर्वत ॥ ३८ ॥

लोक आजिं धावन्तः क्षिप्रमेव धावन्ति। एत ऋत्विज आजिं धा-

वन्तीव यज्ञं समापयन्ति । अत एतत्तैः क्षिप्रमविलम्बेन शंसनीयम् । तच्च शंसनमासूर्य्यस्योदेतोः सूर्य्योदयकालपर्य्यन्तं कर्त्तव्यम् । शिष्टं स्पष्टम् ॥ ३८ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य प्रथमः खण्डः ॥ ९-१. ॥

## द्वितीयः खण्डः ॥

उक्तास्संग्रहेण रात्रिपर्य्यायाः पूर्वस्मिन् खण्डे । अत्र तानेव सप्रपञ्चमाह,–यद्यप्य'नुष्टुप्शिरसं प्रगाथमपश्यन्' ( ९.१.१. ) 'तासु वैतहव्य, ( ९. १. ८. ) मित्यादिना स्तोत्रीयसामनी अपि विहिते तथापि मैत्रावरुणादीनां पर्य्यायसम्बन्धीनि सामानि न विहितानि, अतस्तदर्थं पुनर्विहितमपि होतृसामाऽनूद्य प्रशंसति—

**(१)'पान्तमा वो अन्धस' इति वैतहव्यमन्यक्षेत्रं वा एते प्रयन्ति ये रात्रिमुपयन्ति यदोकोनिधनꣳ रात्रेर्मुखे भवत्योकसोऽप्रच्यावाय ॥ १ ॥**

वीतहव्येन निरोधपरिहारार्थं दृष्टत्वादस्य वैतहव्यत्वं पूर्व्व(९. १. ९.) मुक्तम् । य ऋत्विजो रात्रिं रात्रिपर्य्यायानुपयन्ति एते अन्यक्षेत्रमुपगताः खलु । प्रयोक्तॄणामग्निष्टोमे दिवैव प्रयुज्यमानत्वात् प्रकृतित्वाच्च क्षेत्रम् । अतिरात्रस्तु तद्विलक्षणत्वादन्यक्षेत्रमेव । यद्वा देवैरुक्थवद्रात्रावसुरेभ्यो जितत्वादन्यक्षेत्रत्वम् , तत्र स्वक्षेत्रवदाश्रयाभावात् । अतो रात्रेर्मुखे पर्य्याये य 'ओक' इत्येतन्निधनं भवति, ओक इति निवासनाम, तस्याऽप्रच्युत्यै भवति ॥ १ ॥

अथ मैत्रावरुणसाम विधत्ते—

**(२)'प्र व इन्द्राय मादन'मिति गौरीवितम् ॥ २ ॥**

'प्र व' इति स्तोत्रीयात्रयस्य प्रतीकोपादानम् । एवमुत्तरत्र प्रतीकं द्रष्टव्यम् ॥ २ ॥

एतत्प्रशंसति—

**ब्रह्म यद्देवा व्यकुर्व्वत ततो यदत्यरिच्यत तद्गौरीवितमभवत् ॥ ३ ॥**

पूर्वं देवा यद्ब्रह्मसाम व्यकुर्व्वत व्यभजन् । अतो विभागात् परो योंऽशोऽत्यरिच्यत तद्गौरीवितमभवत् ॥ ३ ॥

---

१. सा. उ. १. २. १. १.  २. सा. उ, १. २. २. १.

एवमतिरिक्ततां सम्पाद्य रात्रिपर्य्याये योग्यतामाह—

अतिरिक्तं गौरीवितमतिरिक्तमेतत् स्तोत्रं यद्रात्रिरतिरिक्त एवाऽतिरिक्तं दधाति ॥ ४ ॥

अस्य साम्नोऽतिरिक्तत्वमुक्तम्। रात्रौ कर्त्तव्यं पर्यायगतं मैत्रावरुणस्तोत्रमपि सवनत्रयमतीत्य वर्त्तमानत्वादतिरिक्तम्। शिष्टं सुज्ञानम् ॥४॥

अथ ब्राह्मणाच्छंसिनः साम विधत्ते—

(१)'वयमु त्वा तदिदर्था' इति काण्वम् ॥५॥

स्पष्टम् ॥ ५ ॥

एतत्प्रशंसति—

एतेन वै कण्व इन्द्रस्य सांविद्यमगच्छदिन्द्रस्यैवैतेन सांविद्यं गच्छति ॥ ६ ॥

सांविद्यं समानविद्यत्वं सखित्वमित्यर्थः। तत्र स्तोत्रीये 'इन्द्र त्वा यन्तः सखायः' इति हि स्तूयते। अतस्तत्प्रयोक्ताऽपीन्द्रस्य सांविद्यं प्राप्नोति ॥ ६ ॥

अच्छावाकसाम विधाय प्रशंसति—

(२)'इन्द्राय मद्वने सुत'मिति श्रौतकक्षं क्षत्रसाम प्र क्षत्रमेवैतेन भवति ॥ ७ ॥

श्रुतकक्षेण क्षत्रियेण दृष्टं श्रौतकक्षम्। अतः क्षत्रसामैतत्। तत्प्रयोगेण क्षत्रं प्रबलं भवति ॥ ७ ॥

अथ मध्यमे पर्य्याये होतुः साम विदधाति—

(३)'अयं त इन्द्र सोम' इति दैवोदासम् ॥ ८ ॥

दैवोदासं दिवोदासेन दृष्टं साम ॥ ८ ॥

एतन्निधनद्वारा प्रशंसति—

अग्निष्टोमेन वै देवा इमं लोकमभ्यजयन्नन्तरिक्षमुक्थेनाऽतिरात्रेणाऽमुं, त इमं लोकं पुनरभ्यकामयन्त त इहेत्यास्मिँल्लोके प्रत्यतिष्ठन् यदेतत्साम भवति प्रतिष्ठित्यै ॥ ९ ॥

पूर्वं देवा अग्निष्टोमोक्थ्यातिरात्रैः क्रमेण भूरादिलोकत्रयं जित्वा

---

१. सा. उ. १. २. ३. १. २ सा. उ. १. २. ४. १. ३. सा. उ. १. २. ५. १

त एव पुनरिमं लोकमभ्यकामयन्त । ते कामयित्वा 'इह' इति निधनप्रयोगसामर्थ्येन भूर्लोक एव प्रतिष्ठिता अभवन् । स्पष्टमन्यत् ॥ ९ ॥

होतुरेव वैकल्पिकं स्तोत्रमाह—

ऊर्द्धसद्मनमपि शर्व्वरीषु प्रोहन्ति ॥ १० ॥

अपि शर्वरीष्वपि गतासु प्राप्तासु, शर्वरीष्वातिरात्रेषु पर्यायेष्वित्यर्थः । प्रयोगबहुत्वापेक्षया बहुवचनम् । तच्चोर्ध्वसद्मनं साम प्रोहन्ति कुर्य्युः । अत्र प्रतीकान्तरस्याऽश्रवणात् 'अयं त इन्द्र' इत्याद्या एवास्य स्तोत्रीया इति बोद्धव्यम ॥ १० ॥

एतत्प्रशंसति—

असुरा वा एषु लोकेष्वासꣳस्तान्देवा उर्द्धसद्मनेनैभ्यो लोकेभ्यः प्राणुदन्त ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

उक्तार्थवेदनं प्रशंसति—

तद्य एवँ वेदैभ्यो लोकेभ्यो भ्रातृव्यं प्रणुद्य स्व आयतने सत्रमास्ते ॥ १२ ॥

अत्र 'यो वेद' 'आस्त' इत्युभयत्राप्येकवचनमविवक्षितम् । ये जानन्त्येवं ते सर्वे सत्रानुष्ठायिनो भवन्तीत्यर्थः । अत्र दैवोदासौर्द्धसद्मनयोः साम्नोः प्रयोगविषये निदानकार आह(१)'मध्यमस्य रात्रिपर्य्यायस्य होतृषामणी विचारयन्ति--दैवोदासं वा स्यादौर्द्धसद्मनं वेति विकल्पो वा स्यादपि वा दैवोदासमहीने कुर्य्यात् पूर्वाध्याये पूर्वं यज्ञस्थाने औद्धुसद्मनं सत्रेषूत्तराध्यायमुत्तरे यज्ञस्थानेऽथाप्यस्मिन् सत्रवादरूपो भवत्यौर्द्धसद्मनमपि शर्वरीषु प्रोहन्ती'ति । अस्याऽयमर्थः–मध्यमस्य रात्रिपर्य्यायस्य सम्बन्धिनी विहिते होतृषामणी विचारयन्ति । विचारप्रकार उच्यते--दैवोदासं वा स्यादौर्द्धसद्मनं वेति विकल्पो वा स्यादिति । व्यवस्थया कल्पो विकल्पः । येन यजमानेन यत् पूर्वं दैवोदासमहीन इति सत्रापेक्षया यत् पूर्वं यज्ञस्थाने ते अहीने स्यादिति । एतेनोत्तराध्यायमित्याद्यपि व्याख्यातम् । अथाप्यस्मिन्नित्यादेरयमर्थः,–अस्मिन्नौर्द्धसद्मनविषये सत्रवादरूपो भवति । प्रोहन्तीति बहुवचनेनाऽभिधानमेव । अथ वा प्रतीकोपादानमिदम् । सत्रवादस्तु स्व आयतने सत्रमास्त इत्ययमपि ॥ १२ ॥

---

१. नि. सू. प्र. ८. खं. १.

अथ मैत्रावरुणसाम विधत्ते—

(१)'आ नू न इन्द्र क्षुमन्त'मित्याकूपारम् ॥ १३ ॥

स्पष्टम् ॥ १३ ॥

तत् प्रशंसति—

अकूपाराऽऽङ्गिरस्यासीत्तस्या यथा गोधायास्त्वगेवं त्वगासीत्तामेतेन त्रिःसाम्नेन्द्रः पूत्वा सूर्यत्वचसमकरोत्तद्वाव सा तर्ह्यकामयत यत्कामा एतेन साम्ना स्तुवते स एभ्यः कामः समृध्यते ॥ १४ ॥

अकूपारानामाऽऽङ्गिरस्यासीत् । तस्या यथा गोधायास्त्वक् तथा त्वगासीत् । सा गोधेव दुष्टत्वचा सतीन्द्रमस्तौषीत् । स तुष्ट इन्द्रः एनामेतेन साम्ना त्रिवारं रथच्छिद्रादिना पावयित्वा सूर्यत्वचसमकरोत् । तथाच मन्त्रवर्णः '(२)खे रथस्य खेऽनसः खे युगस्य शतक्रतो । अपालामिन्द्र त्रिः पूत्व्यऽकृणोः सूर्यत्वचमिति' । एवमपगतत्वग्दोषा सात हि तदानीं तदेवाऽकामयतेन्द्रम् । किमिति ? तद्दर्शयति यत्कामाः—याहक्कामोपेता एतत्साम्ना स्तुवन्ति स काम एभ्यः स्तोतृभ्यः स मृध्यते समृद्धो भवति ॥ १४ ॥

अथ ब्राह्मणाच्छंसिसाम विधाय प्रशंसति—

(३)'अभि त्वा वृषभा सुतं' इत्यार्षभं क्षत्रसाम क्षत्रमेवैतेन भवति ॥ १५ ॥

विश्वामित्रस्य पुत्र ऋषभः । एतस्योत्पादनकाले स क्षत्रिय एव । अतस्तेन दृष्टत्वादेतदपि क्षत्रसाम । स्पष्टमन्यत् ॥ १५ ॥

अथाऽच्छावाकसाम विधाय प्रशंसति—

(४)'इदं ह्यसो सुतमन्ध' इति गारमेतेन वै गर इन्द्रमप्रीणात्प्रीत एवाऽस्यैतेनेन्द्रो भवति ॥ १६ ॥

स्पष्टोऽर्थः ॥ १६ ॥

अथ तृतीये पर्याये होतृसाम विधाय प्रशंसति—

(५)'इदं ह्यन्वोजसे'ति माधुच्छन्दसं प्रजापतेर्वा एषा तनूरयातयाम्नी प्रयुज्यते ॥ १७ ॥

---

१. सा. उ. १, २. ६. १. २. ऋ. सं. ८, ९.९. तत्रापि कथेयं द्रष्टव्या ।
३. सा. उ. १. २. ७. १, ४. सा. उ. १. २. ८. १.
५. सा. उ १. २ ९. १.

मधुच्छन्दसा दृष्टं माधुच्छन्दसम्। एषैतत् साम प्रजापतेः शरीरं खलु। अस्य तृचे आद्ये द्वे अनिरुक्ते। अतः प्रजापतेस्तनुत्वम्। अत एव देवतान्तराश्रवणादेवाऽयातयाम्न्यगतसारा प्रयुज्यते ॥ १७ ॥

अथ मैत्रावरुणसाम विधत्ते—

(१)'आ त्वेता निषीदते'ति दैवातिथम् ॥ १८ ॥

स्पष्टम् ॥ १८ ॥

तत् प्रशंसति—

देवातिथिः सपुत्रोऽशनायꣳश्चरन्नरण्य उर्वारूण्य-विन्दत्तान्येतेन साम्नोपासीदत्ता अस्मै गावः पृश्नयो भूत्वोदतिष्ठन् यदेतत्साम भवति पशूनां पुष्ट्यै ॥१९॥

पूर्वं दुर्भिक्षे सञ्जाते देवातिथिर्नाम ऋषिः सपुत्रोऽशनेच्छुः सञ्चरन्नरण्ये उर्व्वारूणि कर्कटीफलान्यविन्दत। तानि फलानि देवातिथिः साम्नोपासीददुपसन्नोऽभूत्। तास्तानि फलानि पृश्नयो नानावर्णा गावो भूत्वा अस्मा उदतिष्ठन् प्रादुरभवन्। तस्मा एतत्पश्वानुगुण्याय भवति। न चैतदसङ्गतमिति मन्तव्यम्। सामर्थ्यात्तथा भवत्येव। अथ वा विहितसाम्नः स्तुत्यर्थत्वादविरोधः ॥ १९ ॥

अथ ब्राह्मणाच्छंसिसाम विधाय प्रशंसति—

(२)'योगे योगे तवस्तर'मिति सौमेधꣳ रात्रिषाम रात्रेरेव समृध्यै ॥ २० ॥

सौमेधं सुमेधसा दृष्टं रात्रिषामेति तस्य नाम ॥ २० ॥

अथाऽच्छावाकसाम विधत्ते—

(३) 'इन्द्र सुतेषु सोमेष्वि'ति कौत्सम् ॥ २१ ॥

स्पष्टोऽर्थः ॥ २१ ॥

एतत्प्रशंसति—

कुत्सश्च लुशश्चेन्द्रं व्यह्वयेताꣳ स इन्द्रः कुत्समु-पावर्त्तत तꣳशतेन वार्ध्रीभिराण्डयोरबध्नात्तं लुशोऽभ्यवदत् प्रमुच्यस्व परि कुत्सादिहागाहि किमु त्वावानाण्डयोर्बद्ध आसाता इति तास्संछिद्य प्राद्रवत्स एतत् कुत्सः सामाऽपश्यत्तेनैनमन्ववदत्स उपावर्त्तत॥२२॥

---

१. सा. उ. १. २. १०. १. २. सा. उ. १. २. ११. १. ३. १. २. १२. १.

कुत्सश्च लुशश्चोभावृषी पूर्वं यज्ञे समकालमेवेन्द्रं व्यह्वयेतां पृथक्पृथगाहूतवन्तौ। तयोर्मध्ये स इन्द्रः कुत्सं प्रत्येवाऽपागच्छत्। न पुनर्लुशम्। यज्ञगमनशङ्कया शतसङ्ख्याभिर्वार्घ्रीभिश्चर्ममयीभीरज्जुभिराण्डयोरबध्नात्। तमिन्द्रं लुश आगत्यैवमवादीत्—'हे इन्द्र प्रमुच्यस्वाऽऽत्मानं कुतः स्सकाशात्? तदुच्यते—कुत्सात्परि परीति पञ्चम्यर्थानुवादी। कुत्ससकाशान्मुक्तस्त्वमिहास्मिन्यज्ञ आगह्यागच्छ। किमु त्वावान् त्वत्सदृशः आण्डयोर्मुष्कयोर्बद्धः सन् आसातै आसीत्। अतो महानुभावस्य तव मुष्कबन्धनमनुचितम्। अतो मुच्यस्वेत्यर्थः। अस्य पूर्वार्द्धे 'अवृजं हित्व' इत्यादिकोऽप्रयोजनत्वादत्र न पठितः। एवमुक्त इन्द्रस्ता वार्ध्रीः संछिद्य प्राद्रवत् प्रकर्षेण शीघ्रं लुशमगच्छत्। स तु कुत्स एतत्सामापश्यत्। तेन साम्नैनमिन्द्रमन्ववदत् स्तुतवानित्यर्थः। स स्तुतः कुत्समुपावर्त्तत। अत एतदिन्द्रस्य प्रियतममिति स्तुतिः ॥ २२ ॥

अस्त्वेवम्, किं ततः? इत्याह—

यदेतत्साम भवति सेन्द्रत्वाय ॥ २३ ॥

स्पष्टम् ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य
द्वितीयः खण्डः ॥ ९-२ ॥

---

## तृतीयः खण्डः ॥

एवमुक्तो ज्योतिष्टोमः सर्वप्रकृतिभूतः। स च यद्यपि चतुःसंस्थः तथापि (१)'न वै षोडशी नाम यज्ञोऽस्ती'त्यादि श्रुतिः षोडश्यपृथक्त्वादत्र ब्राह्मणेऽग्निष्टोमादिसंस्थात्रयात्मक एवोक्तः। अथाऽवशिष्टेनाऽध्यायशेषेण सोमविषयं प्रायश्चित्तमुच्यते। तत्रादौ साम्युत्थाने प्रायश्चित्तमाह—

यदि सत्राय दीक्षेरन्नथ साम्युत्तिष्ठेत्सोममपभज्य (२)विश्वजिताऽतिरात्रेण यजेत सर्ववेदसेन सर्वस्मा एव दीक्षते सर्वमाप्नोति ॥ १ ॥

यदि सत्राय तदनुष्ठातारो बहवो यजमानाः सह दीक्षेरन्, तेषु कश्चित् साम्यर्धमनुष्ठायोत्तिष्ठेदसमाप्यैव केन चिद्व्याध्यादिना निमि-

१. तै. स. ६. ६. ११. २. अयमेकाहकाण्डपठितात् भिन्नो विश्वजित्।

षेन, स सोमं क्रीतं स्वांशमपभज्य विभागं कृत्वा तेन सोमेन विश्वजिताऽतिरात्रसंस्थेन सर्वपृष्ठेन सर्ववेदसेन, 'वेद' इति धननाम । सर्वस्वदक्षिणात्मकेन यजेत । सत्राद्युत्थानेऽन्यं यं कञ्चित् क्रतुमननुष्ठाय कथं सर्ववेदसोऽतिरात्रः क्रियत ? इति । तत्राह-सर्वस्मा एव सर्वस्मै फलाय सर्वाणि च पृष्ठानि सर्वांश्च स्तोमान् प्रयोक्तुं खलु सत्राय दीक्षन्ते । अतोऽयमुचित इत्यर्थः । अनेनाऽतिरात्रेण सर्वसत्रफलं प्राप्नोति ॥१॥

अत्रत्यं सर्वस्वदक्षिणं सत्राददक्षिणकादप्यधिकमेवेत्याह—

**या इद्दक्षिणा ददाति ताभिरति प्रयुङ्क्ते ॥ २ ॥**

या इत या एव दक्षिणा ददाति विश्वजिति क्रतौ ताभिः सत्रमतीत्य प्रयुक्तवान् भवति । एतेनापि सत्रादधिकं फलमनेन लभ्यत इत्युक्तं भवति । अत्र सोममपभज्येति श्रवणात्सोमक्रयानन्तरमुपसत्सु वा सौत्येषु वाऽहस्सु स्थितस्य विवक्षितं स्यात् न दीक्षासु स्थितस्येति शङ्कनीयम् । एतदुपग्रन्थे विचार्य्य निर्णीतम्-यथा खलु विश्वजिद्दीक्षास्वप्युत्तिष्ठतः स्यादित्येके । सोमापभागेन जानीमः क्रीतो हि दीक्षासु सोमो भवतीति । अत्र साम्युत्तिष्ठेदित्येकवचनमविवक्षितम् । अनेकेषामप्युत्तिष्ठतामेतस्य साम्युत्थानस्य निमित्तत्वात् ॥ २ ॥

एवं साम्युत्थानप्रायश्चित्तमुक्तम् । रात्रेरुपरिभागे रात्रिपर्यायाः कर्त्तव्याः । तदनन्तरं सन्धिषाम । ततो व्युष्टेरर्वागेवाश्विनशस्त्रं समापनीयम् । एवं सति प्रमादात् विलम्बेन पर्याया व्युष्टेः पूर्वं न समाप्नुयुरिति शङ्क्येत तस्योपायमाह—

**यदि पर्य्यायैरस्तुतमभिव्युच्छेत्पञ्चदशाभिर्होत्रे स्तुयुः पञ्चभिः पञ्चभिरितरेभ्यः ॥ ३ ॥**

यदि पर्यायैस्त्रिभिः सोममस्तुतमभिव्युच्छत् प्रभातकालो भवेदिति शङ्क्येत तदा होत्रे होतृपञ्चदशाभिर्ऋग्भिः स्तुयुः । इतरेभ्यो मैत्रावरुणादिभ्यस्त्रिभ्यः पञ्चभिर्ऋग्भिः स्तुयुः । होतृषाम पञ्चदशस्तोमकं कार्य्यमितराणि पञ्चस्तोमकानि कुर्युरित्यर्थः । अत्राऽपस्तम्बो यद्यपि पर्यायत्रयस्य पर्यायद्वयस्यैकपर्यायस्य च स्तोत्राय कालाविलम्बाभावे पृथक्पृथगेव शीघ्रप्रयोगमुक्तवान्, तथापि रात्रिपर्य्यायस्य त्रयस्याप्येतत्साधारणमिति मन्तव्यम् । तथाचोपग्रन्थे पठ्यते-'यदि पर्यायैरस्तुतमभिव्युच्छेदिति सर्वान् पर्यायानधिकृत्य भवति क्रत्वर्थसामान्याद्यैकस्मिन् पर्याये प्रतीकेऽपि द्वयोरिती'ति ॥ ३ ॥

अथ सन्धिस्तोत्रायाह—

(१)'अग्ने विवस्वदुषस' इति सन्धिना स्तुयुः प्राणा वै त्रिवृत् स्तोमानां प्रतिष्ठा रथन्तरꣳ साम्नां प्राणाꣳश्चैवोपयन्ति प्रतिष्ठाञ्च ॥ ४ ॥

नवस्तोत्रीयात्मकसन्धिस्तोत्रेण स्तोतुं मध्ये व्युष्टिः स्यादिति शङ्का यद्युदियात् तदा 'अग्ने विवस्वदुषस' इति प्रगाथे अग्निदेवत्ये सन्धिना स्तोत्रेण त्रिवृत्स्तोमेन स्तुयुः। अत्र त्रिवृदिति(२) त्रिक एवोच्यते। स्तोमानां मध्ये त्रिवृत्स्तोमः प्राणाः खलु त्रिवृत्। त्रिवृति त्रित्वसंख्याऽस्ति। प्राणा अपि प्राणोऽपानो व्यान इति त्रिधा। यद्वा नासिकाच्छिद्रयोर्मुखे च सञ्चारभेदेन त्रिरूपः। अतः सङ्ख्यासाम्यात्त्रिवृदेव प्राणः। तथा साम्नां मध्ये रथन्तरसाम्नः प्रतिष्ठात्वम्। एवं सति यद्रथन्तरं सन्धिषाम त्रिकस्तोमं भवति तेन प्राणांश्च प्रतिष्ठाञ्चोभयमपि प्राप्नुवन्ति ॥ ४ ॥

उक्तस्सन्धिस्तोत्रेतिहासः। अथाश्विनशस्त्रस्य ऋक्सहस्रात्मकस्य कालविलम्बाभावे संख्यां विदधाति—

षष्टिश्च त्रीणि च शतानि होता शꣳसति ॥ ५ ॥

षष्ट्युत्तरशतत्रयसङ्ख्याका होता ऋचोऽनुशंसेत ॥ ५ ॥

तत्संख्यां स्तौति—

तावत्यः सम्वत्सरस्य रात्रयः सम्वत्सरसम्मिताभिरेव तदृग्भिराश्विनमाप्नोति ॥ ६ ॥

उक्तसङ्ख्या एव हि सम्वत्सररात्रयः स्युः।अस्त्वेवं किं तत ? इत्याह-उक्तसंख्यया सम्वत्सरसम्मानात् सम्मिताभिरेवाऽल्पसंख्याकाभिर्ऋग्भि ऋक्सहस्रसम्पाद्यं मुख्यमाश्विनशस्त्रमाप्नोति। अयमभिप्रायः—'सम्वत्सरो वै प्रजापति'रिति श्रुतेरुक्तसंख्यया सम्वत्सरद्वारा प्राजापत्यास्तैः स एव सर्वमिति तावदेव ऋक्सहस्रशस्त्रावाप्तेरिति ॥ ६ ॥

एवं विवासशङ्कायां कर्त्तव्यमुक्त्वेदानीं यथाविहितस्तोत्राणां न्यूनातिरेके प्रायश्चित्तं वक्तुं सम्यक्स्तुवन्तीति स्तुतानां स्वरूपं दर्शयति-

यदर्वाक् स्तुवन्ति तदस्तुतं यत्सम्प्रति स्तुवन्ति तत् स्तुतं यदातिष्टुवन्ति तत्सुष्टुतम् ॥ ७ ॥

यद्यदि विहितत्रिवृदादिस्तोत्रादर्वाक् स्तोत्रीयान्यूनत्वेन स्तुवन्ति तदस्तुतमेवाऽस्तुतप्रायमेव क्रतुवैकल्येनाऽपूर्वोत्पादनाशक्तत्वात्।

१. सा. उ. ९. १.६.१. २. त्रिवृच्छब्दस्य अङ्कनवकपरत्व व्युदासार्थमिदमुक्तम्।

यत् सम्प्रति यथावत् स्तुवन्ति तत् स्तुतं यदतिष्टुवन्ति विहितस्तोममतिक्रम्याऽधिकेन स्तुवन्ति तत् सुष्टुतम्। तदत्र सुशब्दोऽनिन्दार्थः। अधिकस्य न्यूनवद्दुष्टत्वात्। तेन क्रतुवैकल्यं भवत्येव, अविहितत्वाविशेषात् ॥ ७ ॥

विहितन्यूनसंस्तवे प्रायश्चित्तमाह—

**यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिर्वाऽतिष्टुयुर्भूयोऽक्षराभिर्वा ॥ ८ ॥**

यदि विहितस्तुतितोऽर्वाक् स्तोत्रीया न्यूनत्वेन स्तुयुस्तदा यावतीभिः स्तोत्रीयाभिर्न स्तुयुस्ताः परिगणय्य उत्तरे स्तोत्रे अधिकत्वेन तावतीभिरधिसंख्याकेन वा विहितस्तोत्रेण स्तुयुः। यद्वा भूयोऽक्षराभिः स्तुयुः। यद्देवत्यं परस्तोत्रं तद्देवत्यास्वेव स्वस्तोत्रीयाभ्योऽधिकाक्षरासु स्तुयुः ॥ ८ ॥

अथाऽतिष्टुतौ प्रायश्चित्तमाह—

**यद्यतिष्टुयुर्यावतीभिरतिष्टुयुस्तावतीभिर्वा न स्तुयुः कनीयोऽक्षराभिर्वा ॥ ९ ॥**

उक्तवैपरीत्येन व्याख्यातव्यम्। पूर्वस्मिन् स्तोत्रे यावत्योऽधिका उत्तरस्मिंस्तावत्यो न्यूनाः स्युरित्येकः कल्पः। कनीयोऽक्षराभिर्वा स्तुयुरित्यपरः। एवमतिस्तुतेस्तु द्वौ कल्पावुक्तौ ॥ ९ ॥

अथाऽस्तुतावन्त्यं कल्पमाह—

**यद्यर्वाक् स्तुयुस्त्रीडमग्निष्टोमसाम कार्य्यं निधनमेकेडा ये द्वे ताभ्यामेव तत्समं क्रियते ॥ १० ॥**

यद्यर्वाक् स्तुयुस्तदा तत्परिहाराय त्रीडं महावैश्वामित्रमाग्निष्टोमसाम कार्य्यम्। यज्ञायज्ञीयस्य कथमस्तुतस्य त्रीडं परिहार? इति तत्राह—तासु तिसृष्विडासु मध्ये एकेडा स्तोत्रीयस्य निधनं भवति। इडाद्वयं तु न्यूनस्तोत्रं सम्पूर्णं करोति ॥ १० ॥

अथाऽतिष्टुतौ सामान्तरं सार्थवादमाह—

**यद्यतिष्टुयुः स्वारमग्निष्टोमसाम कार्य्यमूनमिव वा एतत्साम्नो यत् स्वरस्तेनैव तत्समं क्रियते ॥ ११ ॥**

अतिस्तवने यज्ञायज्ञियस्तोत्रीयास्वेव स्वारं दीर्घश्रवसमाग्निष्टोमसाम कार्य्यम्। कथं तेनाऽधिकस्य समतेति? ऊनमिवेत्यादिनोच्यते। यत्स्वरनिधनं सामाऽस्ति एतत् सामाऽन्यस्मादिडादिनिधनवतः सकाशादून-

मिध वै, अन्त्यस्वरव्यतिरेकेण वहिर्निधनाभावात्। अतस्तेनैव तदाधिक्यं समं क्रियते। अत्रार्वाक्स्तवातिष्टवयोस्त्रयस्त्रयः कल्पा उक्ताः। तेषामेवं व्यवस्था—अग्निष्टोमसाम्नः पुरस्ताच्चेदर्वाक्स्तवोऽति वा स्यात्तत्र त्रीडस्वराभ्यामेवाग्निष्टोमसामभ्यां न्यूनाधिकदोषापगमः। अथ चेदग्निष्टोमसाम्नोऽर्वाक्स्तवातिष्टवौ स्यातां तदा स्तोत्रीयाभिरक्षरैर्वा सम्पाद्यमिति। उक्तन्यूनाधिक्यप्रायश्चित्तव्यवस्था आर्षेयकल्पग्रन्थे स्पष्टं प्रतिपादिता सा तत्र द्रष्टव्या ॥ ५१ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य तृतीयः खण्डः ॥ ९-३ ॥

## चतुर्थः खण्डः ॥

अथ संस्तवनिमित्तकं प्रतिपदादिकं विधास्यन् प्रसङ्गादध्वर्युकर्तृकस्य प्रातरनुवाकोपाकरणस्य कालविशेषं विधत्ते—

**(१) यदि सोमौ सꣳसुतौ स्यातां महति रात्रेः प्रातरनुवाकमुपाकुर्यात् ॥ १ ॥**

पृथक् प्रयोजनयोर्यजमानयोः परस्परं विद्विष्यमाणयोर्वा युगपदेकस्मिन् देशे सोमौ संसुतौ सहाऽभिष्टुतौ यदि स्यातां तदा रात्रेर्महति काले महारात्रे प्रबुध्य प्रातरनुवाकं होत्राऽनुवक्तव्यमुपाकुर्यात्, 'प्रातर्यावभ्यो देवेभ्योऽनुब्रूही'ति सम्प्रैषेणाऽध्वर्युः प्रारम्भयेत्। प्रकृतौ हि (२)वयसां प्रवदनात् पूर्वं प्रातरनुवाकोपाकरणं तदेव संसुतसोमे मध्यरात्रेः कर्त्तव्यमित्यर्थः ॥ १ ॥

एवं सति को लाभः? तं दर्शयति—

**पूर्वो वाचं पूर्वश्छन्दाꣳसि पूर्वो देवता वृङ्क्ते ॥ २ ॥**

युगपदेकत्र बहुयज्ञेषु प्रवर्त्तमानेषु पौर्वापर्याभावात् गायत्रादिच्छन्दसामग्न्यादीनां देवतानाञ्च क्वचिदेव सन्निधानं स्यात्, नान्यत्रेति संसवे दोषः। एवं सति मध्यरात्र एव प्रातरनुवाकस्योपक्रमात् पूर्वो यजमानान्तरात् प्रथमभावी सन् वाचं मन्त्ररूपां वृङ्क्ते यजमानान्तराद्वर्जयति स्वयमेव पूर्वं परिगृह्णातीत्यर्थः। तथा छन्दांसि गायत्र्यादीनि च पूर्वो यजमानान्तरात् वृङ्क्ते वर्जयति। प्रातरनुवाके हि गायत्र्यादीनि

१. अत्र तैत्तिरीयसंहितायाः सप्तमकाण्डस्य सप्तमप्रपाठकस्य पञ्चमोऽनुवाकः, तत्रत्यं सायणीयं भाष्यं चाऽवलोकनीयम् ॥ २ प्रातः पक्षिणामुत्थानात्पूर्वमित्यर्थः।

चतुरुत्तराणि सप्त च्छन्दांस्यनूच्यन्ते । अतस्तान्यपि यजमानान्तरात् पूर्वं स्वयमेव परिगृह्णाति । तथा तस्मिन् प्रातरनुवाकेऽग्निरुषा अश्विनौ चेति तिस्रो देवता आग्नेयोषस्याश्विनैस्त्रिभिः काण्डैः स्तुताः । ता अपि वृङ्क्ते पूर्वो यजमानान्तराद्वर्जयति स्वकीयत्वेन परिगृह्णाति ॥ २ ॥

अथोद्गातुर्बहिष्पवमाने काञ्चित्प्रतिपदं विदधान इन्द्रस्यापि यजमानान्तराद्वर्जनं दर्शयति—

(१)वृषण्वतीं प्रतिपदं कुर्यादिन्द्रो वै वृषा प्रातःसवनादेवैषामिन्द्रं वृङ्क्ते ॥ ३ ॥

वृषशब्दोपेतां 'पवस्वेन्दो वृषा सुत' इत्यादिकां वृषण्वतीं 'वृषशब्दात् मतुपि पदसंज्ञायां नलोपे(२)'अनो नुट्' इति नुट् । प्रतिपद्यते प्रारभ्यते इयमिति(३)प्रतिपत् ।तां वृषण्वतीं बहिष्पवमानस्य प्रतिपदं कुर्यात्।इन्द्रो वै इन्द्र एव वृषा वर्षणशीलत्वात्तच्छब्दाभिधेयः । एवमनेन वृषण्वत्यां प्रयोगेणैषामन्येषां यजमानानां प्रातःसवनादेवेन्द्रं वृङ्क्ते वर्जयति स्वकीये यज्ञ आगमयति ॥ ३ ॥

अथ पक्षान्तरं दर्शयति—

अथो खल्वाहुः सवनमुखे सवनमुखे कार्या सवनमुखात् सवनमुखादेवैषामिन्द्रं वृङ्क्ते ॥ ४ ॥

अथो खल्विति पक्षान्तरपरिग्रहे, सवनमुखे सवनमुखे सवनादौ सवनादौ त्रिष्वपि पवमानेष्वेषा वृषण्वती प्रतिपत्कार्या । इति शब्दोऽध्याहर्तव्यः । इति ब्रह्मवादिन आहुः । तेषामयं भावः—यदि वृषण्वती बहिष्पवमान एव स्यात्तेन सिध्यति प्रातःसवनपरिग्रहः । उत्तरयोः सवनयोर्वृषण्वत्या अप्रयोगादिन्द्रोऽपरिगृहीतो भवेदिति पूर्वस्मिन् पक्षे दोषः । अस्मिंस्तु पक्षे त्रिष्वपि पवमानेषु वृषण्वत्याः प्रयोगात् सवनमुखात् सवनमुखादेव त्रिभ्योऽपि सवनमुखेभ्य एवैषामिन्द्रं वर्जयति । त्रिष्वपि सवनमुखेष्विन्द्रः प्रथमतो यष्टव्यः । तथा कृते बहुषु यज्ञेषु युगपदनुष्ठीयमानेषु यस्मिन् यज्ञेऽस्य वाचकं वृषेति शब्दं शृणोति तत्रैव गच्छति नाऽन्यत्रेति ॥ ४ ॥

सर्वासामपि देवतानां परिग्रहं दर्शयति—

सुसमिद्धे होतव्यमग्निर्वै सर्वा देवताः सर्वा एव देवताः पश्यञ्जुहोति ॥ ५ ॥

---

१. ऋ सं ३. ९. ८ २. पा. सू. ८.२.१६. ३. स्तोत्रे प्रथमा ऋक् प्रतिपदित्युच्यते ।

सुसमिद्धेऽतिशयेन दीप्ते होतव्यम्। ततः किम् ? अग्निः खलु सर्वा देवताः सर्वदेवतात्मकः। (१)"देवासुराः संयत्ता आसन्। ते देवा बिभ्यतोऽग्निं प्राविशन्। तस्मादाहुरग्निस्सर्वा देवताः" इति श्रुत्यन्तरादग्नेः सर्वदेवतात्मकत्वम्। दीप्तस्याग्नेः सम्यग् दर्शनात्तत्र प्रवर्त्तमानाः सर्वा एव देवताः पश्यन् हविः प्रतियोगित्वेन साक्षात् कुर्वन् जुहोति ॥ ५ ॥

अथाऽस्मिन् संस्तुतसोमे प्रवृत्तहोमानन्तरं 'संवेशाय' इत्यादिभिर्मन्त्रैः क्रमेणोद्गातव्यमिति विधत्ते—

**(२)संवेशायोपवेशाय गायत्र्यै च्छन्दसेऽभिभूतये स्वाहा संवेशायोपवेशाय त्रिष्टुभे च्छन्दसेऽभिभूतये स्वाहा संवेशायोपवेशाय जगत्यै च्छन्दसेऽभिभूतये स्वाहेति जुहोति ॥ ६ ॥**

अत्र च सूत्रकारेण(३) 'संस्तुतसोमे स्वधिकामुद्गाता जुहुयात् संवेशायोपवेशायेति यथासवनं छन्दांस्यादिशन्' इत्यादिना (यदुक्तं) तदत्रानुसन्धेयम्। प्रथमेन मन्त्रेण प्रातःसवने होमो द्वितीयेन माध्यन्दिने तृतीयेन तृतीयसवने। तेषामयमर्थः-संवेशाय संविशति सम्यगस्मद्यज्ञं विशतीति संवेशः संप्रविश्य चोपविशति तत्रैव निषीदति यज्ञान्तरं न गच्छतीत्युपवेशः। ईदृशाय च्छन्दसे गायत्र्यै गायत्र्यात्मकायाऽभिभूतये शत्रूणामभिभवित्रे। यद्वा सोमाहरणसमये सोमरक्षकान् स्वानभ्राजादीनभिभूय हि गायत्री सोममाहृतवती, तदभिप्रायेणेदं विशेषणम्। तस्मै गायत्र्यै च्छन्दसे, स्वाहेदं हविस्त्यजामि। एवमुत्तरत्रापि योज्यम्। त्रिष्टुभे च्छन्दसे जगत्यै छन्दसे इति विशेषः ॥ ६ ॥

अस्तु होमः किमतो भवति ? तदाह—

**च्छन्दाꣳसि वा अभिभूतयस्तैरेवैनानभिभवत्युभे बृहद्रथन्तरे कार्ये ॥ ७ ॥**

गायत्र्यादीनीमानि च्छन्दांसि खल्वभिभूतयः पूर्वोक्तप्रकारेणाभिभवितारस्तैरेवैनानन्यान् विद्विषाण्यजमानानभिभवति। ये बृहद्रथन्तरे पृष्ठस्तोत्रनिर्वचनकार्य्यैक्याद् व्रीहियववत् प्रकृतौ विकल्प्येते तयोः संस्तुतसोमे समुच्चयासम्भवेन विकल्प इति। सत्यम्, अत्र तावदुभे बृहद्रथन्तरे इति पुनर्विधानात् समुच्चयारम्भः प्रतीयते तत्र कथं

१. तै. सं. ६. २. २. ६. २. अस्यमन्त्रस्य स्वरूपान्तरं व्याख्याने विशिषश्च तैत्तिरीयसंहितायां ( ३. १. ७. १. ) तैत्तिरीयब्राह्मणे (१.४.६.) च द्रष्टव्यम्,

३. लाट्या. श्रौ. १. ११. १०.

प्रयोगप्रकारः ? इत्याकाङ्क्षायां (१)यन्विस्याहुर्बृहत्पूर्वं प्रजापतौ समभवे-दित्यादिना 'तस्मात् पूर्वं योगमानशे' इत्यन्तेन ब्राह्मणेन बृहद्रथन्तरयो-स्सन्निपाते रथन्तरं पूर्वं प्रयोक्तव्यं पश्चाद्बृहदिति व्यवस्थितत्वात् मा-ध्यन्दिनपवमाने '(२)पुनानः सोमेति' बार्हते प्रगाथे रथन्तरं कर्त्तव्यम् , पृष्ठस्तोत्रे बृहदित्युभयोः समुच्चयः ॥ ७ ॥

तदेतत्प्रशंसति—

**यत्र वा इन्द्रस्य हरी तादिन्द्रः, इन्द्रस्य वै हरी बृहद्र-थन्तरे, यदुभे बृहद्रथन्तरे भवतः पूर्व एवेन्द्रस्य हरी आ-रभन्ते ॥ ८ ॥**

यस्मिन् देशे खल्विन्द्रस्य हरी रथयावश्वौ भवतस्तत्रेन्द्रस्तिष्ठति बृहद्रथन्तरे सामनी इन्द्रस्य हरी । अतो बृहद्रथन्तरे उभे अपि भवत इति पूर्व एवा ऽन्येभ्यो यजमानेभ्यः प्रथमभाविन एव त इन्द्रस्य हरी आरभन्ते परिगृह्णन्ति ॥ ८ ॥

अन्यदपि सामद्वयं विधत्ते—

**तौरश्रवसे कार्ये ॥ ९ ॥**

तुरश्रवा नाम कश्चिदृषिस्तेन दृष्टे सामनी तौरश्रवसे । ते च (३) 'यदि-न्द्र शासो अव्रतम्' इत्यस्यामुत्पन्ने 'प्रत्नं सधस्थमासदापृच्छ्यं धरुणं वाज्य-र्षसि, सखायो दीर्घजिह्वम् (?)। (३)ये धारया पावकया' इत्येतयोरेकर्च-योरूहेन गीयते ते चात्र लिङ्गादार्भवे पवमाने कार्ये संस्तुतसोमे ॥ ९ ॥

अनयोः प्रयोगानुगुण्यमाख्यानप्रदर्शनेनाह—

**तुरश्रवसश्च वै पारावतानाञ्च सोमौ सꣳसुतावा-स्तां, तत एते तुरश्रवाः सामनी अपश्यत्ताभ्यामस्मा इ-न्द्रः शल्मलिनां यमुनाया हव्यं निरावहत् यत्तौरश्रवसे भवतो हव्यमेवैषां वृङ्क्ते ॥ १० ॥**

परवा नाम कश्चित्तत्सम्बन्धिनः पारावताः । तेषां दीक्षितानां तुर-श्रवसश्च ऋषेः सोमौ संसुतौ सह सुतावास्तां संसवो याग इत्यर्थः । ततोऽनन्तरं तुरश्रवा ऋषिरेते सामनी अपश्यत् दृष्टवान् । दृष्ट्वा च ता-भ्यां स्तुतवानिति शेषः । तत्स्तुत्या प्रीत इन्द्रोऽस्मै तुरश्रवसे यमुना-याः सम्बन्धि यमुनातटे वर्त्तमानं तेषां हव्यं हविश्चरुपुरोडाशादिकं

---

१. ता. ब्रा. ७. ६. ९. १०. २. सा. सं. उ. १. १. ९.
३. सा. सं. पू. प्र. ४. अ. १. ऋ. ६. ४. सा. सं. उ. १. १. १८.

शल्मलिना स्वकीयेनाऽऽयुधविशेषेण निरावहत निहृत्याऽभिप्रायत्। पारावतानां हविरपहृत्य तुरश्रवसे दत्तवानित्यर्थः। एवं सति तौरश्रवसे भवतो यत् तेनैषां यजमानानां विद्विषां हव्यं वृङ्क्ते वर्जयति ॥१०॥

अथ प्रसङ्गादध्वर्युकर्तृकमभिषवमप्यन्यदीयाभिषवात् पूर्वमेव कुर्य्युरिति विधत्ते—

पूर्व्वेऽभिषुणुयुः ॥ ११ ॥

(१)प्रतिप्रस्थात्रादयश्चत्वारोऽध्वर्यवः पूर्व्वे अन्यदीयसामाभिषवात् प्रथमभाविन एतत्सोममभिषुणुयुः ॥ ११ ॥

किं तत इति, आह—

या वै पूर्व्वाः प्रस्नान्ति ताः पूर्व्वास्तीर्थं जयन्ति पूर्व्व एवेन्द्रमारभन्ते ॥ १२ ॥

याः खलु लोके प्रजाः पूर्वाः प्रथमभाविन्यः सत्यः प्रस्नान्ति नदीतडागादिषु स्नानं कुर्व्वन्ति पूर्वास्ता एव तीर्थं तरन्त्यवतरन्त्यनेनेति अवतरणप्रदेशस्तीर्थं तज्जयन्ति लभन्ते। पश्चाद्भाविन्यस्तु प्रजा न लभन्ते। एवमत्रापि पुर्व एवाभिष्टोतार इन्द्रमारभन्ते नाऽन्ये ॥ १२ ॥

अथाऽस्मिन् संसुतसोमे होतुः कृत्यं विधत्ते—

विहव्यं शस्यम् ॥१३॥

विहवो नाम कश्चिदृषिस्तेन दृष्टं (२)'ममाग्ने' इत्यादिकं सूक्तं विहव्यम्। तच्छस्यं होत्रा वैश्वदेवसूक्तात्पुरस्ताच्छंसनीयम्। तदुक्तं भगवताऽऽश्वलायनेन (३)'ममाग्न इति वैश्वदेवसूक्तस्यापुरस्तादिति हि तत्र वर्त्तते॥१३॥

एतच्छंसनमपि स्वकीययज्ञ इन्द्रस्य वर्त्तते कारणमित्याख्यानं प्रदर्शयन्नाह—

जमदग्नेश्च वा ऋषीणाञ्च सोमौ सꣳसुतावास्तां तत एतज्जमदग्निर्व्विहव्यमपश्यत्तमिन्द्र उपावर्त्तत यद्विहव्यꣳ होता शꣳसतीन्द्रमेवैषां वृङ्क्ते ॥१४॥

पुरा जमदग्नेरन्येषामृषीणाञ्च सोमौ संसुतौ सहाऽभिषुतावास्तां भवेताम्। ततोऽनन्तरं जमदग्निरेतद्विहव्यं सूक्तमपश्यत्। तं जमदग्निमिन्द्र उपावर्त्ततोपागच्छत्, नान्यान्। तत इदानीन्तनोऽपि होता संसु-

१. अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता, इति चत्वारः।

२. ममाग्ने वर्चो विहवेष्वस्तु इत्यादयः ( ऋ. सं. १०. १०. १६ ) नवर्चः

३. आश्व. श्रौ. ६. ६. १६, पुरस्तादिति अपूर्वसूत्रादनुवर्तत इत्यर्थः।

तसोमे विहव्यं शंसतीति यत् तेनेन्द्रमेवैषां वृङ्क्ते वर्जयति ॥ १४ ॥

अथास्य संसुतसोमस्य संस्थाभेदं पूर्वपक्षत्वेन दर्शयति—

यदीतरोऽग्निष्टोमः स्यादुक्थः कार्यो यद्युक्थोऽतिरात्रो यो वै भूयान्यज्ञक्रतुः स इन्द्रस्य प्रियो भूयसैवैषां यज्ञक्रतुनेन्द्रं वृङ्क्ते ॥ १५ ॥

यदीतरो यजमानान्तरेण क्रियमाणः सोमयागोऽग्निष्टोमः स्यात्, अग्निष्टोमसाम्ना संस्थितो भवेत्तदोक्थ उक्थसंस्थः स्वकीयो यज्ञः कार्यः । यदि परकीय उक्थसंस्थः स्यात्, तदानीमतिरात्रः कार्यः । एवमधिकसंस्थाकरणे को लाभः ? उच्यते—यो हि भूयान् बहुतरो बहुस्तुतशस्त्रसाध्यो यज्ञक्रतुः स एवेन्द्रस्य प्रिय इष्टो भवति । अतो भूयसा बहुतरेणैव यज्ञक्रतुनैषामिन्द्रं वृङ्क्ते ॥ १५ ॥

तमिमं पक्षं दूषयित्वा स्वाभिमतं पक्षमाह—

अथो खल्वाहुर्दुष्प्राप इव वै परः पन्था यमेवाऽग्रे यज्ञक्रतुमारभेत तस्मान्नेयादिति ॥ १६ ॥

अथो खल्विति पक्षान्तरपरिग्रहद्योतनार्थः । अथो खल्वभिज्ञा ब्रह्मवादिन आहुः किमिति ? दुष्प्राप इव 'वै' इत्यवधारणे प्राप्तुमशक्य एव हि परो दीर्घः पन्थाः । महापथेन हि गच्छन् चिरकालात् फलं प्राप्नोत्यल्पेन तु सद्यः प्राप्नोति । अतः परः पन्था उत्तरोत्तरः संस्थात्मको यज्ञमार्गो दुष्प्राप इत्युक्तं भवति । यस्मादेवं तस्मादग्र आदौ सङ्कल्पसमये यमेव यज्ञक्रतुमारभेत तस्मान्नेयादिति ॥ १६ ॥

अथ होतुः सूक्तद्वयं शस्यं विधत्ते—

सजनीयꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यम् ॥१७॥

'सजनास इन्द्र' इति शब्दयुक्तं (१)'यो जात एव' इति सूक्तं सजनीयम् । तन्निष्केवल्यशस्त्रे निविद्धानस्य सूक्तस्य पुरस्ताच्छंसनीयम् । तथा (२)कयाशुभा सवयस' इति सूक्तमगस्त्येन दृष्टत्वादगस्त्यस्य कयाशुभीयं तन्मरुत्वतीये शस्त्रे शंसनीयम् । तथा च सूत्रकृताऽऽश्वलायनेनोक्तं (३) 'कया शुभेति च मरुत्वतीये पुरस्तात् सूक्तस्य शंसेद्योजात एवेति निष्केवल्ये' इति ॥ १७ ॥

तदेतदुभयं शंसति—

अस्या अमुष्या अथस्वान्मिथुनादहोरात्राभ्यामे-

---

१. ऋ. सं. २. १२. १. २. ऋ. सं. १. १६५. १. ३. आश्व. श्रौ. ६. ६. १४

वैनान्निर्भजति ॥ १८ ॥

शस्यमानयोः सूक्तयोर्द्विसंख्यायोगादस्याः पृथिव्या अमुष्या दिवश्च द्वाभ्यां लोकाभ्यामेवैतान् द्वेष्टॄन् यजमानान्निर्भजति निर्भक्तान् करोति; वियोजयतीति यावत् । तथा अद्येति वर्त्तमानः कालः । श्व इति भविष्यः कालः उभयस्मादपि कालादेतान्निर्भजति । यद्वा 'उभे बृहद्रथन्तरे कार्य्ये, इति विधिः पूर्व्वमुक्तस्तच्छेषतया ऽयमर्थवादो योज्यः । तथैव हि तैत्तिरीयके समाम्नातम्-(१)'उभे बृहद्रथन्तरे भवत इयं वाव रथन्तरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथन्तरं श्वो बृहदद्याश्वादेवैनमन्तरेति भूतं वाव रथन्तरं भविष्यद् बृहद् भूताच्चैवैनं भविष्यतश्चान्तरेती'ति ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य
चतुर्थः खण्डः ॥

---

## अथ पञ्चमः खण्डः ॥

उक्तं संसुतसोमे प्रायश्चित्तम । अथ सोमापहरणे प्रायश्चित्तमुच्यते—

**यदि सोममक्रीतमपहरेयुरन्यः क्रेतव्यः ॥ १ ॥**

दीक्षान्ते सोमः क्रीयते । यदि ततः पूर्व्वमक्रीतं सोममपहरेयुरन्ये शत्रवस्तदानीं 'यद्यविज्ञाता सर्व्वव्यापद्ये'तेति सामान्येन विहितं सर्व्वप्रायश्चित्तं कृत्वाऽन्यः सोमः क्रेतव्यः । गवादिद्रव्यकेण समन्त्रकक्रयेण प्राप्तव्यः ॥ १ ॥

यदि क्रयोत्तरकालं सोमोऽपहृतः स्यात्तत्राह—

**यदि क्रीतं योऽन्योऽभ्याशं स्यात् स आहृत्यः सोमविक्रयिणे तु किञ्चिद्दद्यात् ॥ २ ॥**

यदि क्रीतं क्रयप्राप्तं सोममपहरेयुस्तदा योऽन्यः सोमोऽभ्याशमन्तिके स्यात् स आहृत्याऽभिषोतव्यः पुनः क्रयो न भवति । यः सोममाहृत्य विक्रीणाति तस्मै सोमविक्रयिणे यत्किञ्चिदल्पं धनं दद्यात् । न शास्त्रीयं गवादिकं क्रयणद्रव्यं देयमित्यर्थः ॥ २ ॥

---

१. तै. सं. ३. १. ७.

अथ सोमप्रतिनिधीनाह—

यदि सोमं न विन्देयुः पूतीकानभिषुणुयुर्यदि न पूतीकानर्ज्जुनानि ॥ ३ ॥

सोमं शास्त्रोक्तलक्षणं यदि न विन्देयुर्न लभेरँस्तदा पूतीकान् लताविशेषान् पूतीकसंज्ञकानभिषुणुयुः। यदि पूतीकानपि न विन्देयुः तदानीमर्ज्जुनानि श्यामलानि तृणान्याहृत्याऽभिषुणुयुः ॥ ३ ॥

अथ पूतीकानां सोमप्रभवत्वेन सोमकार्य्ये शक्तिमाख्यानेन प्रदर्शयन्नाह—

गायत्री सोममाहरत्तस्या अनु विसृज्य सोमरक्षिः पर्णमच्छिनत्तस्य योऽंशुः परापतत्स पूतीकोऽभवत्तस्मिन देवा ऊतिमविन्दन्नूतीको वा एष यत्पूतीकानभिषुण्वन्त्यूतिमेवास्मै विन्दन्ति ॥ ४ ॥

अस्य पूतीकस्योर्तिं तृप्तिमेव विन्दन्ति लभन्ते देवा इति शेषः ॥४॥

अथाऽस्मिन् पूतीकाभिषवयज्ञे गव्यादिसाहित्यं विधत्ते—

प्रतिधुक् च प्रातः पूतीकाश्च, शृतञ्च मध्यान्दिने पूतीकाश्च, दधि चाऽपराह्णे पूतीकाश्च ॥ ५ ॥

प्रातःसवने प्रतिधुक् सद्योदुग्धं पयश्चाभिषुताः पूतीकाश्च सह सोमकार्य्यं कुर्व्वन्ति। तथा मध्यन्दिने माध्यन्दिने सवने शृतं पक्वं क्षीरञ्च पूतीकाश्च सह सोमकार्य्ये शक्ताः। अपराह्णे तृतीयसवने दधि च पूतीकाश्च सह सोमकार्य्यं कर्त्तुं शक्नुवन्ति ॥ ५ ॥

प्रतिधुगादेः पूतीकानाञ्च संहत्य सोमप्रतिनिधित्वमुपपादयति—

सोमपीथो वा एतस्मादपक्रामतीत्याहुर्यस्य सोममपहरन्तीति स ओषधीश्च पशूंश्च प्रविशति तमोषधिभ्यश्च पशुभ्यश्चावरुन्धे ॥ ६ ॥

ओषधिवनस्पतिभ्यः सकाशात् प्रतिधुगादिविशिष्टपूतीकाभिषवणसोमपानं यजमानोऽवरुन्धे प्राप्नोति ॥ ६ ॥

अथ यत् पूर्वमुक्तं पूतीकाभावेऽर्ज्जुनानि तृणान्यभिषोतव्यानीति तेषामपि सोमसम्बन्धं दर्शयन् सोमकार्य्यक्षमतामाह—

इन्द्रो वृत्रमहंस्तस्य यो नस्तः सोमः समधावत्तानि बभ्रुतूलान्यर्जुनानि, यो वपाया उत्खिन्नायास्तानि

**लोहिततूलानि, यानि बभ्रुतूलान्यर्जुनानि तान्यभिषुणुयादेतद्वै ब्रह्मणो रूपं साक्षादेव सोममभिषुणोति ॥ ७ ॥**

पुरा खलु वृत्रमावरकं कृतसोमपानमसुरमिन्द्रो हतवान्। तस्य नस्तो नासिकाप्रदेशाद्यः सोमः समधावत् बहिः प्रावर्त्तत भूमौ प्रसृतोऽभूत्। तानीति विधेयापेक्षया नपुंसकलिङ्गं बहुवचनञ्च। यो वपाया उत्खिन्नायास्तानि लोहिततूलानि। यानि बभ्रुतूलान्यर्ज्जुनानि तूलसमबभ्रुवर्णमञ्जरीयुक्तान्यर्ज्जुनानि श्यामलानि तृणान्यभवन्। यश्च वपाया उत्खिन्नायाः सोमः समधावत्तानि लोहिततूलान्यभवन्। उभयेषां मध्ये यानि बभ्रुतूलान्यर्जुनानि तानि पूतीकाभावेऽभिषुणुयात्। एतदेव हि साक्षाद्ब्रह्मणो रूपं यद्वस्तुवर्णत्वम्। एवं सति साक्षात्प्रत्यक्षमेव सोममभिषुणात्यभिषुतवान् भवति ॥ ७ ॥

तस्मिन्नपहृतसोमप्रयोगे सामानि विधित्सुर्ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रनिवर्त्तकमेकं साम विधत्ते—

**आयन्तीयं ब्रह्मसाम कार्यं सदेवैनं करोति ॥ ८ ॥**

(१)'आयन्त इव सूर्य्यम्' इत्यस्यामुत्पन्नं साम आयन्तीयम्। तद्ब्रह्मसाम कर्त्तव्यम्। कृतेन च तेनैनं यज्ञं सदेव प्रशस्तमेव करोति ॥ ८ ॥

अथान्यत्सामद्वयं विधत्ते—

**यज्ञायज्ञीयमनुष्टुभि प्रोह्य वाचैवैनं समर्द्धयति वारवन्तीयमग्निष्टोमसाम कार्य्यमिन्द्रियस्य वीर्य्यस्य परिगृहीत्यै ॥ ९ ॥**

आर्भवपवमाने(२) 'पुरोजिती वो अन्धस' इति योऽयमानुष्टुभस्तृचस्तस्मिन्ननुष्टुभ्यानुष्टुभे तृचे यज्ञायज्ञीयं साम प्रोहेत। यद्यपि वेयगाने यज्ञायज्ञीयं (३)'यज्ञायज्ञा वो अग्नय' इत्यत्रैवाऽऽम्नातम्। तथाप्यनुष्टुभ्यूहेन कर्त्तव्यमित्यर्थः। तस्य हि यज्ञायज्ञीयस्य 'वागि'ति निधनं भवति तथा सत्येनं यज्ञं वाचैव समर्द्धयति समृद्धं करोति।(४)'अश्वं न त्वा वारवन्तम्' इत्यस्यामुत्पन्नं साम वारवन्तीयम्। तदेतदग्निष्टोमसामत्वेन'यज्ञायज्ञा व' इति प्रगाथे कार्य्यम्। तस्य च साम्नो वारणहेतुत्वादपि वारवन्तीयमिति संज्ञा। एवं सति सामेन्द्रियस्य बलस्य वीर्य्यस्य च परिगृहीत्यै

---

१. सा. सं. पू. ३. २. २. ५.    २. सा. सं. पू ६. २. १. १.
३. सा. सं. पू. १. १. ४. १.    ४. सा. सं. पू. १. १. १. ८.

स्वीकरणाय भवति ॥ ९ ॥

अथ दक्षिणां विधत्ते—

पञ्च दक्षिणा देयाः ॥ १० ॥

दक्षिणाशब्देन गौरुच्यते । पञ्च गावो दक्षिणात्वेन ऋत्विग्भ्यो देया इति ॥ १० ॥

तदेतत्प्रशंसति—

पाङ्क्तो यज्ञो यावान्यज्ञस्तमेवाऽऽरभते ॥ ११ ॥

यज्ञस्तावत्पाङ्क्तः-त्रीणि सवनानि, अवभृथो, ऽनूबन्ध्या चेति । यद्वा धानाः करम्भः परिवापः पुरोडाशः पयस्येति पञ्च सवनीयहवींषि तद्युक्तत्वात् पाङ्क्तः । दक्षिणाऽपि पञ्चसंख्यावती । अतो यावान् यत्परिमाणको यज्ञस्तं तत्परिमाणकमेव यज्ञमारभते । अनेन पञ्चदक्षिणाविधानेन सङ्कल्पावसरे कल्पितानां दक्षिणानां बाध उक्तो भवति ॥ ११ ॥

अथैतं सोमयागं समाप्य प्रायश्चित्तार्थं पुनः सोमेन साङ्गमनुष्ठेयमिति विधत्ते—

अवभृथादुदेत्य पुनर्दीक्षेत ॥ १२ ॥

अवभृथादवभृथं कृत्वा तदनन्तरमुदेत्योदयनीयाद्युदवसानीयान्तं कृत्वा पुनस्तस्मा एव क्रतवे दीक्षेत । दीक्षणीयाद्युदवसानीयान्तं सर्वं कर्त्तव्यम् ॥ १२ ॥

तत्र तद्दद्याद्यद्दास्यं स्यात् ॥ १३ ॥

तत्र तस्मिन् यज्ञे दक्षिणाद्रव्यं दद्यात् पूर्वस्मिन् प्रयोगे यद्दक्षिणाद्रव्यं दास्यन् स्याद्भवेत् । पूर्वस्मिन् यज्ञे या सप्तैकविंशत्यादिका दक्षिणा सङ्कल्पिता तामस्मिन् द्वितीये प्रयोगे दद्यादित्यर्थः ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

## अथ षष्ठः खण्डः ॥

अथ द्रोणकलशस्य भेदने प्रायश्चित्तं विधत्ते—

यदि कलशो दीर्येत वषट्कारणिधनं ब्रह्मसाम कुर्यात् ॥ १ ॥

अत्र कलशशब्देन नामैकदेशेन द्रोणकलश एवोच्यते । यथा भीमसेनो भीमः, सत्यभामा भामेति । स यदि दीर्येत भिद्येत तदानीं 'अभि

त्वा पूर्वपीतये' इत्यस्यामुत्पन्नं (१)वषट्कारणिधनाख्यं साम वक्ष्यमाणा-स्वृक्षु ब्रह्मसामत्वेन कुर्यात् ॥ १ ॥

किमतो भवति ? तदाह—

**अवषट्कृतो वा एतस्य सोमः परा सिच्यते यस्य कलशो दीर्यते यद्वषट्कारणिधनं ब्रह्मसाम भवति वषट्कृत एवाऽस्य सोमो भवति ॥ २ ॥**

यस्य यजमानस्य कलशो दीर्यते भिद्यते एतस्य सोमोऽवषट्कृतो वषट्काररहित एव परासिच्यते भूमौ प्रस्कन्द्यते । कलशे दीर्णे तत्रस्थः सोमः सर्वो भूमावेव स्रवति । तदानीं वषट्कारो न प्रयुज्यत इत्यवषट्कृतत्वम् । तथा सति वषट्कारणिधनं ब्रह्मसाम भवतीति यत् तेनाऽस्य यजमानस्य स्कन्नः सोमो वषट्कृतो वषट्कारेण चोदिताधारे प्रक्षिप्त एव भवति ॥ २ ॥

तथाऽस्य साम्न आधारभूता ऋचो विधत्ते—

**(२)'विधुं दद्राणꣳसमने बहूना'मित्येतासु कार्यम् ॥३॥**

एतदाद्यास्वृक्षूहेन कर्त्तव्यमित्यर्थः ॥ ३ ॥

कलशविदारणेऽयं तृचः प्रयोगार्ह इत्याह—

**एष हि बहूनाꣳ समने दीर्यते यत्कलशः ॥ ४ ॥**

यत् यः कलशो द्रोणकलश एष खलु बहूनामृत्विजां सङ्गमने दीर्यते भिद्यते । तस्मात् 'दद्राणं समने बहूनाम्' इत्युक्तार्थप्रतिपादकेन शब्देन योगादेता ऋचो दीर्णे कलशे प्रयोगार्हा इत्यर्थः ॥ ४ ॥

तमिमं पक्षं दूषयति—

**तदाहुर्न वा आर्त्याऽऽर्त्तिरनूद्याऽऽर्त्या वा एष आर्त्तिमनुवदति यः कलशे दीर्णे दद्राणवतीषु करोतीति ॥५॥**

तत्तत्र विषये ब्रह्मवादिन आहुः, कथमिति ? तदुच्यते । न खल्वार्त्तौ सत्यामार्त्तेनैव वचनेनानुवदितव्यम् । एवं सत्युद्गाता कलशे दीर्णे दद्राणवतीषु विदारणप्रतिपादकदद्राणशब्दवतीषु वषट्कारणिधनं करोति । एष आर्त्या वै आर्त्तिप्रतिपादिकयैव वाचाऽऽर्त्तिं कलशविदारणरूपामनुवदति । अत एतन्न युक्तमिति ॥ ५ ॥

किं तर्हि कलशे दीर्णे कर्त्तव्यम् ? तदाह—

**आयन्तीयमेव कार्यम् ॥ ६ ॥**

---

१. सा. सं. पू. ३. २. २४.

२. सा. सं. उ. ९. १, ७, १, शाक्मना, एभिर्ददे इत्याम्रिमे ऋचौ ।

आयन्तीयमेव ब्रह्मसामत्वेन कर्त्तव्यं न वषट्कारणिधनम् ॥ ६ ॥

अस्यैव साम्नः पूर्वोक्तदोषनिवर्त्तकत्वे सामर्थ्यं दर्शयति—

**प्रजापतिः प्रजा असृजत स दुग्धो रिरिचानोऽमन्यत स एतच्छ्रायन्तीयमपश्यत्तेनात्मानं समश्रीणात्प्रजया पशुभिरिन्द्रियेण ॥ ७ ॥**

पुरा सर्वकारणभूतः प्रजापतिः सर्वाः प्रजा असृजत स्वात्मनि सूक्ष्मरूपेणाऽवस्थितानि सर्वाणि कार्यजातानि स्थूलरूपेण बहिः सृष्टवानित्यर्थः। अतोऽन्तर्गतस्य कार्य्यस्याऽभावात् स प्रजापतिर्दुग्धो रिरिचानोऽमन्यत। यथा दुग्धा गौः अन्तरवस्थितपयसो विसर्जनाद्रिक्ता भवति तथा प्रजापतिरपि सर्व्वं सृष्ट्वाऽऽत्मनाऽतिरिक्तया ऽऽसीत्। सर्वारिक्तापरिहारायैतच्छ्रायन्तीयमपश्यत् । तेन च दृष्टेन साम्ना साधनेन प्रजया पुत्रपौत्रादिरूपया पशुभिर्गवादिभिरिन्द्रियेण चक्षुरादिना वीर्येण वाचाऽऽत्मना समश्रीणात् समयोजयत्। अत एव श्रयणसाधनत्वादस्य च आयन्तीयमिति संज्ञा ॥ ७ ॥

**दुग्ध इव एष रिरिचानो यस्य कलशो दीर्यते यच्छ्रायन्तीयं ब्रह्मसाम भवति पुनरेवाऽऽत्मानँसँश्रीणाति प्रजया पशुभिरिन्द्रियेण ॥ ८ ॥**

तथा सति यस्य कलशो दीर्यत एष दुग्ध इव रिरिचानो रिक्तो भवति, यागस्य विकलत्वेन फलप्राप्त्यभावात्। अर्जितस्य धर्मस्य च प्रहाणाच्च। यच्छ्रायन्तीयमस्य यज्ञे ब्रह्मसाम भवति तेनैष आत्मानं प्रजादिभिः फलैः पुनरेव संश्रीणाति संयोजयति ॥ ८ ॥

अस्मिन् पक्षे वषट्कारणिधनस्याऽप्रयुक्तत्वाद् भिन्नात् कलशात् पुनः सोमोऽवषट्कृतः स्यात्तत्राह—

**यदि आयन्तीयं ब्रह्मसाम स्याद्वैष्णवीष्वनुष्टुप्सु वषट्कारणिधनं कुर्यात् ॥ ९ ॥**

यदि आयन्तीयं ब्रह्मसाम भवेत्तदा वैष्णवीषु विष्णुसम्बन्धिनीष्वनुष्टुप्छन्दस्कास्वृक्षु(१)'पवस्व वाजसातये' इत्यादिकासु वषट्कारणिधनं कुर्यादिति। उत्तरत्र हि वैष्णव्योऽनुष्टुभो भवन्तीति 'पवस्व वाजसातये' इत्यादीनां विधिर्दृश्यते। अतोऽत्रापि वैष्णव्योऽनुष्टुभस्ता

---

१. सा, सं, उ. ३. २. १९. १. त्वां रिहन्ति धातयः, त्वं द्यां च महिव्रत, इत्यस्मिमे ऋचौ।

पवेत्यत्रसीयते। अत्र यदि आयन्तीयं अश्मलाम.स्यादिति यदि शब्दं प्रयुञ्जान एष पक्षो वैकल्पिक इति सूचयति । अतोऽनयोः पक्षयोरन्यतरः कर्त्तव्य इत्यर्थः ॥ ९ ॥

वैष्णवीष्वनुष्टुप्सु तस्य साम्नः करणं प्रशंसति—

यद्वै यज्ञस्य स्रवति व्वाचं प्रतिस्रवति व्वागनुष्टुप् यज्ञो ऽिवष्णुर्व्वाचैव यज्ञस्य च्छिद्रमपिदधाति ॥ १० ॥

यज्ञस्य सम्बन्धि पदं स्रवति गच्छत्यनुष्टुबेव सा वाक् । 'अनुष्टुप् च वै सप्तदश समभवताम्' इत्यादिना सर्वेषां गायत्र्यादीनां च्छन्दसामनुष्टुभः सकाशात् सृष्टेर्वक्ष्यमाणत्वादनुष्टुभो वाक्त्वम् । विष्णुश्च यज्ञ एव भवति । अनुष्टुभो विष्णोश्चास्मिँस्तृचे दर्शनाद्यज्ञस्य च्छिद्रं द्रोणकलशविदारणात्मकं सुषिरं वाचैवाऽपिदधात्याच्छादयति । वषट्कारणिधनेन च भूमौ प्रस्कन्नः सोमो वषट्कृतो भवतीत्यभिप्रायः॥१०॥

सामान्तरं विधत्ते—

यद्वै यज्ञस्य स्रवत्यन्ततः स्रवति वारवन्तीयमग्निष्टोमसाम कार्य्यं यज्ञस्यैव च्छिद्रं वारयते ॥ ११ ॥

यत् खलु यज्ञसम्बन्धि स्रवति अन्ततोऽन्ते वारवन्तीयं वारणसाधनमेतत्संज्ञं सामाग्निष्टोमसामतया कार्यम् । तेन यज्ञस्यैव च्छिद्रं वारयते निवर्त्तयति समीकरोति 'यदवारयँस्तद्वारवन्तीयस्य वारवन्तीयत्वम्' इति हि तन्निर्वचनं दृष्टम् ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य षष्ठः खण्डः ॥

## अथ सप्तमः खण्डः ॥

अथ सोमातिरेकप्रायश्चित्तमुच्यते। तत्र प्रथमं प्रातः सवनं दर्शयति-

यदि प्रातस्सवनात्सोमोऽतिरिच्येत 'अस्ति सोमो अयं सुत, इति मरुत्वतीषु गायत्रेण स्तुयुः ॥ १ ॥

प्रातःसवने सन्ति चत्वार्याज्यस्तोत्राणि तत्र होतुः स्तोत्रे सोमपूर्णाश्चमसा होतव्याः । तत्राऽन्त्यचमसगणो द्रोणकलशाधवनीयपूतभृत्सु विद्यमानः सकलसोमरस आलेचनीयः । तत्र यद्यन्त्यस्य चमसगणस्य होमात्प्राक् सोमोऽतिरिक्तो दृश्यते तं चमसगणं पुनरानीय होतव्य-

१. सा. सं. उ. ९. १. ८, १. पिबन्ति मित्रो अर्यमा, उतोन्वस्य इत्याग्निमेऋचौ।

म। यद्यन्यचमसगणस्य होमादूर्ध्वं दृश्येत तदिदं प्रायश्चित्तम्। अयमर्थः प्रातःसवनसमाप्तेरूर्ध्वं यदि सोमोऽतिरिच्येतऽतिरिक्तोऽधिको दृश्येत तदाऽध्वर्यवस्तं सोमं होतृचमसमुख्येषु चमसेष्वानीय स्तोत्रमुपाकुर्वन्ति। तदोद्गातारः(१) 'अस्ति सोमो अयं सुत' इति मरुत्वतीषु मरुच्छब्दयुतासु गायत्रीष्वृक्षु गायत्रेण 'तत्सवितुर्वरेण्यम्' इत्यस्यामुत्पन्नेन गायत्रसाम्ना स्तुयुः स्तुवीरन्* ॥ १ ॥

अथाऽस्यामृचि मरुच्छब्दवत्वं गायत्रत्वञ्चाऽतिरिक्तसामानुगुणमिति स्तौति—

**माध्यन्दिनं वा एष सवनं निकामयमानोऽभ्यतिरिच्यते यः प्रातस्सवनादतिरिच्यते तस्मान्मरुत्वतीषु स्तुवन्ति मरुत्वद्धि माध्यन्दिनꣳ सवनं तस्मादु गायत्रीषु गायत्रं हि प्रातस्सवनम् ॥ २ ॥**

यः सोमः प्रातस्सवनादतिरिच्यतेऽतिरिक्तो भवति । एष सोमो माध्यन्दिनं सवनं निकामयमानो नितरामभिलषन्नतिरिच्यते। यस्मादेवं तस्मान्मरुत्वतीषु मरुच्छब्दयुक्तासु स्तुवन्ति। कथमेतावता माध्यन्दिनसवनप्राप्तिः? तत्रोच्यते—मरुत्वतीयं मरुद्भिर्युक्तं हि माध्यन्दिनं सवनम्। तत्र मरुत्वतीयग्रहणस्य मरुत्वतीयशस्त्रस्य च विद्यमानत्वात्। अतो मरुत्वतीषु स्तवनेनाऽतिरिक्तस्य सोमस्य माध्यन्दिनसवनप्राप्तिः। यस्मादेषसोमः प्रातस्सवनसम्बद्धस्तस्मादेव गायत्रीषु स्तुवन्ति। गायत्रं गायत्रीच्छन्दस्कं हि प्रातस्सवनम् ॥ २ ॥

अस्य चाऽतिरिक्तस्तोमक्लृप्तिमाह—

**यस्मात् स्तोमादतिरिच्यते स एव स्तोमः कार्य्यः सलोमत्वाय ॥ ३ ॥**

यस्मात्प्रातस्सवनान्तिमात् स्तोमात्त्रिवृत्पञ्चदशादेरतिरिच्यते सोमोऽतिरिक्तो भवेत् तन्निमित्तकस्य स्तोत्रस्य सवनान्तिमस्तोत्रस्तोमः कार्य्यः। तस्यैव करणं सलोमत्वाय सारूप्याय भवति ॥ ३ ॥

अथ प्रसङ्गाद्धोतुरनुशंसनविशेषं विधत्ते—

**ऐन्द्रावैष्णवं होताऽनुशंसति ॥ ४ ॥**

---

१. सा. सं. उ. ९. १. ८. १.

* एतत्खण्डीयो विधिस्सर्वोऽपि तैत्तिरीयब्राह्मणे प्रथमाष्टके चतुर्थप्रपाठके पञ्चमानुवाकेऽपि द्रष्टव्यः।

इन्द्रश्च विष्णुश्चेन्द्राविष्णू तद्देवताकं शस्त्रं होताऽनुशंसति। ऐन्द्रीभिर्वैष्णवीभिश्च स्तोत्रानुशंसनं कार्य्यमित्यर्थः। तथाचोक्तं सूत्रकृताऽऽश्वलायनेन(१) "प्रातस्सवने(२)'ऽस्ति सोमो अयं सुतः'(३)'गौर्द्धयति मरुता'मिति स्तोत्रीयानुरूपौ। (४)'महां इन्द्रो य ओजसा' (५)'अतो देवा अवन्तु न' इत्यैन्द्रीभिर्वैष्णवीभिश्च स्तोममतिशस्ये"ति ॥ ४ ॥

उक्तमुभयदेवत्यत्वं प्रशंसति—

**वीर्यं वा इन्द्रो यज्ञो विष्णुर्वीर्य एव यज्ञे प्रतितिष्ठति ॥५॥**

वीर्य्यं वै वीर्य्यरूप एवेन्द्रः, प्रजापतेः सकाशाद्वीर्यवतो बाहोरिन्द्रस्योत्पन्नत्वात्। विष्णुश्च यज्ञः। एवमुभयदेवतासु शंसनेन वीर्ये वीर्ययुक्त एव यज्ञे यजमानः प्रतितिष्ठतीति ॥ ५ ॥

अथ माध्यन्दिने सोमातिरिक्ते प्रायश्चित्तं विधत्ते—

**यदि माध्यन्दिनात्सवनादतिरिच्येत(६) 'बण्महाँ असि सूर्य्ये'त्यादित्यवतीषु गौरीवितेन स्तुयुः ॥ ६ ॥**

यदि माध्यन्दिनात् सवनात् यदि माध्यन्दिनसवनसमाप्तेरूर्ध्वं सोमोऽतिरिच्यते माध्यन्दिनस्याऽन्त्यचमसगणे हुते सोमोऽधिको दृश्यते चेत्तदा तं सोममध्वर्य्यवश्चमसेषून्नीय स्तोत्रमुपाकुर्वन्ति। तत्रोद्गातारः'बण्महाँ असि सूर्य्य' इत्यादित्यवतीष्वादित्यशब्दयुक्तास्वृक्षु गौरीवितेन गौरीवितिना ऋषिणा दृष्टं गौरीवितं(७) 'अभि प्र गोपतिं गिरा' इत्यस्यामुत्पन्नं साम गौरीवितं तेन साम्ना स्तुयुः। तत्साम एतासूहेन कर्त्तव्यमित्यर्थः ॥ ६ ॥

अस्याऽतिरिक्तसोमस्य सवनद्वयान्तरालवर्त्तित्वेनोभयरूपस्याऽऽदित्यवतीषु बृहतीषु स्तूयमानं गौरीवितमनुगुणमित्याह—

**तृतीयसवनं वा एष निकामयमानोऽभ्यतिरिच्यते यो माध्यन्दिनात्सवनादतिरिच्यते तस्मादादित्यवतीषु स्तुवन्त्यादित्यं हि तृतीयसवनं तस्माद् बृहतीषु बार्हतं हि माध्यन्दिनं सवनम् ॥ ७ ॥**

यो माध्यन्दिनात् सवनात्सोमोऽतिरिच्यते एष तृतीयसवनमेव

---

१. आश्व. श्रौ. ६. ७. २.　　२. ऋ. सं. ६. ६. २८.
३. ऋ. सं. ६. ६. २८.　　४. ५. ८. ९.　　५. सं. १. २. ७.
६. सा. सं. उ. ९. १. ९. १.　　७. सा. सं. उ. ७. १. १. १.

निकामयमानो नितरामिच्छन्नतिरिच्यते । यस्मादेवं तस्मादादित्यवतीषु 'वण्महाँ असि' इत्यादित्यशब्दयुक्तासु स्तुवन्ति । आदित्यदेवता हि तृतीयसवनमादित्यग्रहेण हि तृतीयसवनं प्रारभ्यते । यस्मादेष माध्यन्दिनात् सवनादतिरिक्तं तस्मादु तस्मादेव बृहतीषु स्तुवन्ति माध्यन्दिनं सवनं बार्हतम् हि(१) 'पुनानः सोम धारया(२) 'अभि त्वा शूर' इत्यादीनां बृहतीनां तत्र विनियुज्यमानत्वात् ॥ ७ ॥

प्रातस्सवनवदस्य स्तोमक्लृप्तिं होतुरनुशंसनञ्च सार्थवादं विधत्ते—

यस्मात् स्तोमादतिरिच्येत स एव स्तोमः कार्यः सलोमत्वायैन्द्रावैष्णवं होताऽनुशंसति वीर्यं वा इन्द्रो यज्ञो विष्णुर्वीर्य एव यज्ञे प्रतितिष्ठति ॥ ८ ॥

पूर्ववद्व्याख्येयम् । एतावांस्तु विशेषः—अथैन्द्रावैष्णवमिति ।(३) 'महाँ इन्द्रो नृवत्'(४) 'विष्णोर्नुकम्' इत्येतदादिकमैन्द्रावैष्णवं शंसनयिम् । तथा चाऽऽश्वलायनसूत्रम्-(५) 'माध्यन्दिने वण्महाँ असि सूर्य· (६) 'उदुत्यद्दर्शतं वपु' रिति प्रगाथौ स्तोत्रीयानुरूपौ । 'महां इन्द्रो नृवत्' 'विष्णोर्नुक' मिति ॥८॥

अथ तृतीयसवने सोमातिरिक्ते प्रायश्चित्तं विधत्ते—

यदि तृतीयसवनादतिरिच्येत विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयुः ॥ ९ ॥

यदि तृतीयसवनात्सोमोऽतिरिच्यते विष्णोः शिपिविष्टवतीषु स्तुवन्ति ॥ ९॥

कोऽतिशयः सामान्तरं परित्यज्य गौरीवितेन स्तुतौ ? किं वा प्रयोजनमिति ? तदुभयं दर्शयति—

यज्ञो वै विष्णुश्शिपिविष्टो यज्ञ एव ऽविष्णौ प्रतितिष्ठत्यतिरिक्तं गौरीवितमतिरिक्त एवाऽतिरिक्तं दधाति ॥ १० ॥

शिपयो रश्मयस्तैराविष्टः शिपिविष्टः । तथा च यास्कः(७) 'शिपयोऽत्र

---

१. सा. सं. पू. ६. १. ३. १. २. सा. सं. पू. ३. १. ५. १.
३. ऋ. सं. ४. ६. ७. ४. ऋ. सं. २. २. २४.
५. आश्व. श्रौ. पू. अ. ६. ख. ७. सू. ६. ६. ऋ. सं. ५. ५. १०. ७. निरु ५. २. ८.

रश्मय उच्यन्ते, तैराविष्टो भवतीति' यद्वा शिपयः पशवस्तैराविष्टः शिपिविष्टः(१) 'यज्ञो वै विष्णुः पशवः शिपिः' इति श्रुत्यन्तरात्। ईदृशो विष्णुर्यज्ञो वै यज्ञ रूप एव। अत एतद्देवत्यासु स्तुतेन यज्ञात्मक एव विष्णौ प्रतितिष्ठति यदेतद्गौरीवितारूयं साम तदतिरिक्तं विभज्यमानाया वेदात्मिकाया वाचोऽधिकं(२) 'देवा वै वाचं व्यभजन्त तस्या यो रसोऽत्यरिच्यत तद्गौरीवितमभवत्' इति श्रुतेः। तथा सत्यतिरिक्ते सवनादधिक एव सोमे तदतिरिक्तं साम दधाति निदधाति। तेन साम्नाऽतिरिक्तदोषं शमयतीत्यर्थः॥ १०॥

अथ तृतीयसवने सोमातिरेके पक्षान्तरमाह—

एतदन्यत् कुर्युरुक्थानि प्रणयेयुरुक्थानि वा एष निकामयमानोऽभ्यतिरिच्यते योऽग्निष्टोमादतिरिच्यते यद्युक्थ्येभ्योऽतिरिच्येताऽतिरात्रः कार्य्यो रात्रिं वा एष निकामयमानोऽभ्यतिरिच्यते य उक्थ्येभ्योऽतिरिच्यते यदि रात्रेरतिरिच्येत विष्णोः शिपिविष्टवतीषु बृहता स्तुयुरेष तु वा अतिरिच्यत इत्याहुर्यो रात्रेरतिरिच्यत इति॥ ११॥

अत्र पक्षान्तरद्योतको यदिशब्दोऽध्याहर्तव्यः, एतत्प्रवृत्तकर्मणोऽन्यत् संस्थान्तरं यदि कुर्युः, तदा तृतीयसवनादतिरिक्तेन सोमेनाऽग्निष्टोमादन्यत् संस्थान्तरं कार्य्यम्। अतस्तमतिरिक्तं सोममुक्थस्तोत्राणि प्रणयेयुः। यः सोमोऽग्निष्टोमादतिरिच्यते एष उक्थस्तोत्राणि निकामयमानो नितरामभिलषन्नभ्यतिरिच्यतेऽभिप्रायेऽतिरिक्तो भवति। यद्युक्थ्येभ्योऽतिरिक्तः स्यात्तदाऽतिरात्रः कार्यः। यः सोम उक्थ्येभ्योऽतिरिच्यते रात्रावनुष्ठीयमानास्त्रयः पर्यायाः प्रत्येकं चतुष्टयस्तुतशस्त्रास्त इमे रात्रिशब्देनोच्यन्ते। उक्थ्येभ्योऽतिरिक्त एष सोमो रात्रिमेव निकामयमानोऽभ्यतिरिच्यते। अतोऽतिरात्रः कार्य्य इत्यर्थः। यदि रात्रेः रात्रौ कर्त्तव्यात् पर्यायत्रयात् सन्धिस्तोत्राच्च सोमोऽतिरिच्येत तदा पूर्वोक्तासु विष्णोः शिपिविष्टवतीषु बृहत्साम्ना स्तुयुः। यः सोमो रात्रेरतिरिच्यते एष तु वै एष एवातिरिच्यत इत्यभिज्ञा ब्रह्मवादिन आहुः। यस्तु अग्निष्टोमादिकादतिरिच्यते सोऽतिरिक्तो न भवति,

१. तै. सं. २. ५. ५.     २. ता. ब्रा, ५. ७. १. द्रष्टव्यम्

उत्तरोत्तरसंस्थाया विद्यमानत्वात् । तत्र च तस्य सोमस्योपयोगसम्भवात् । अतिरात्रादूर्ध्वमन्यत् संस्थान्तरं नास्तीत्यतिरिक्तः सोम उपयोगाभावान्निरर्थको भवेत् । अतोऽत्रैव प्रायश्चित्तमिति विशेषद्योतनाय तुशब्दः ॥ ११ ॥

ननु पूर्वं तृतीयसवनात् सोमातिरेके गौरीवितं साम विहितम् । तत्परित्यज्य कुतो बृहतो विधानमित्यत आह—

**अमुं वा एष लोकं निकामयमानोऽभ्यतिरिच्यते यो रात्रेरतिरिच्यते बृहता स्तुवन्ति बृहदमुं लोकमाप्तुमर्हति तमेवाऽऽप्नोति ॥१२॥**

यः सोमो रात्रेरतिरात्रसंस्थाया अतिरिच्यते । अमुं स्वर्गाख्यमेव लोकमेव निकामयमानोऽभ्यतिरिच्यते । अतिरात्रादधिकस्य संस्थान्तरस्याऽभावात् साम्नां मध्ये बृहत्सामैवाऽमुं स्वर्गं लोकमाप्तुमर्हति नान्यत्(१) 'इयं वाव रथन्तरमसौ वै लोको बृहत्' इति श्रुतेः । अतः स्वर्गं निकामयमानमतिरिक्तमेवाऽसौ बृहता प्राप्नोति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे वेदार्थप्रकाशसहिते नवमाध्यायस्य सप्तमः खण्डः ॥

---

## अथाऽष्टमः खण्डः ॥

अत्र सत्रमध्ये दीक्षितानां मरणे कर्त्तव्यं विधत्ते—

**यदि दीक्षितानां प्रमीयेत दग्ध्वाऽस्थीन्युपनह्य यो नेदिष्ठी स्यात्तं दीक्षयित्वा सह यजेरन् ॥ १ ॥**

सत्रार्थं दीक्षितानां दीक्षणीयेष्ट्या संस्कृतानां मध्ये यदि कश्चित्प्रमीयेत म्रियेत तदा तमग्निमन्थ्येन विधिवद्दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य मार्जालीयेऽतिदध्यात् । ततोऽस्य मृतस्य यो नेदिष्ठी स्यादन्तिकतमः पुत्रादिः स्यात्तं दीक्षयित्वा मृतप्रतिनिधित्वेन तं नेदिष्ठिनं दीक्षासंस्कृतेन तेन सह यजेरन् प्रक्रान्तं सत्रमनुतिष्ठेरन् ॥ १ ॥

---

१. तै. सं. ३. १. ७.

२. वाक्यमिदमधिकृत्य विचारः पूर्वमीमांसायां दशमद्वितीयाष्टादशे (१०.२.१८) द्रष्टव्यः ।

अथ यस्मिन् सुत्येऽहनि यजमानो मृतः स्यात् तत्रोद्गातृकृत्यं विधत्ते—

**एतदन्यत् कुर्युरभिषुत्याऽन्यत्सोममगृहीत्वा ग्रहा-न् याऽसौ दक्षिणा स्रक्तिस्तद्वा स्तुयुर्मार्जालीये वा ॥२॥**

सुत्यामध्ये यजमाने मृते सत्यभिषुतं सोमं परित्यज्याऽन्यत्, लिङ्गव्यत्ययः, अन्यं सोमं विधिवदभिषुत्य ग्रहानैन्द्रवायवादीनगृहीत्वा ऽध्वर्य्यवो विरमेयुः। तस्मिन् काले याऽसौ वेदेर्दक्षिणा स्रक्तिः कोणो दक्षिणपूर्वा दिक् तत्तत्र वा मार्जालीयधिष्ण्ये वोद्गातारः स्तुयुः स्तुवीरन् ॥ २ ॥

किं तत इत्याह—

**अपि वा एतस्य यज्ञे यो दीक्षितः प्रमीयते तमेतेन निरवदयन्ते ॥ ३ ॥**

अपि वेति वाक्यालङ्कारद्योतकौ निपातौ। अपि खलु एतस्य, सप्तम्यर्थे षष्ठी। एतस्मिन् यज्ञे यो दीक्षितः प्रमीयते म्रियते तमेतेन स्तोत्रेण निरवदयन्ते निर्गमयन्ति तर्पयन्ति। 'दय' दानगतिरक्षणहिंसादानेषु। यद्वा एतस्यैवेति गृहपतिः कथ्यते। एतस्य वर्त्तमानस्य गृहपतेर्यज्ञ इत्यर्थः ॥ ३ ॥

स्तुतिमात्रं विहितम्, तत्केन साधनेनेत्याकाङ्क्षायामाह—

**(१)यामेन स्तुवन्ति यमलोकमेवैनं गमयन्ति ॥ ४ ॥**

यामेन साम्ना विहितं स्तोत्रमुद्गातारः कुर्य्युः। तेन स्तोत्रेणैनं मृतं यमलोकं पितृलोकमेव गमयन्ति ॥ ४ ॥

तस्य साम्न आधारभूतानामृचां संख्यां विधत्ते—

**तिसृभिः स्तुवन्ति तृतीये हि लोके पितरः ॥ ५ ॥**

तिसृभिः स्तोत्रीयाभिः स्तोत्रं कार्यम्। तस्माद्भूर्लोकादारभ्य तृतीये हि लोके स्वर्गाख्ये पितरो वर्त्तन्ते। अतस्त्रिसंख्यया तत्रत्यान् पितृनेवैनं प्रापयन्ति ॥ ५ ॥

स्तोत्रान्तरे स्तोत्रीयस्य तृचस्य स्तोमसम्पत्त्यर्थमावृत्तिर्दृष्टा। तद्वदत्राऽप्यावृत्तिमाशङ्क्याऽऽह—

**पराचीभिः स्तुवन्ति पराङिवहीतोऽसौ लोकः ॥ ६ ॥**

पराचीभिः स्तुवन्ति पराङ्मुखाभिरनावृत्ताभिः स्तुवन्ति। तत् कस्य हेतोः? इतोऽस्माल्लोकादारभ्याऽसौ स्वर्गो लोकः पराङ् हि परा-

1. विषयोऽयं तै. ब्रा. १. ४. ६. अनुवाके द्रष्टव्यः।

ङ्मुखः पराङ्मुख ऊर्ध्वप्रदेशावस्थितो हि। अतस्तत्प्राप्तये पराचीभिरेव स्तवनं युक्तमित्यर्थः ॥ ६ ॥

तिसृभिरित्यृचां संख्या विहिता। अथ काः पुनस्ता ऋच इति? तत्राह—

(२)सर्पराज्ञ्या ऋग्भिः स्तुवन्ति ॥ ७ ॥

सर्पराज्ञी नाम ब्रह्मवादिनी तस्या ऋग्भिस्तया दृष्टाभिः(१)'आयङ्गौः पृश्निरक्रमीत्' इत्यादिभिर्ऋग्भिः स्तुवन्ति। एतासु यामं साम कार्यमित्यर्थः ॥ ७ ॥

मृतस्याऽपनयन एता ऋचोऽनुकूला इति दर्शयति—

अर्बुदः सर्प एताभिर्मृतां त्वचमपाहत मृतामेवैताभिस्त्वचमपघ्नते ॥ ८ ॥

अर्बुदः सर्परूपोऽर्बुद ऋषिरेताभिः सर्पराज्ञ्या दृष्टाभिर्ऋग्भिर्मृतां जीर्णामात्मीयां त्वचमपाहत अपागमयत्। अत एताभिस्तुवाना अपि मृतं यजमानमपगमयन्तीत्यर्थः ॥ ८ ॥

अथैतस्मिन् स्तोत्रे समाप्त एतासामृचामनुवचनं विधत्ते—

ता ऋचोऽनुब्रुवन्तस्त्रिर्मार्जालीयं परियन्ति सव्यानूरूनाघ्नानाः ॥ ९ ॥

अध्वर्युप्रभृतय ऋत्विजस्ताः पूर्वोक्ता ऋचो यमदेवत्यास्सार्पराज्ञीभिश्चाऽनुब्रुवन्तोऽनुवचनधर्मेणोच्चारयन्त आत्मीयान् सव्यान् वामभागस्थानूरूनूरुप्रदेशानाघ्नानाः सव्यैः पाणिभिस्ताडयन्तो मार्जालीयं धिष्ण्यं त्रिस्त्रिवारं परियन्ति परितो गच्छन्ति ॥ ९ ॥

अथैतासामनुशंसनं विधाय प्रशंसति—

स्तुतमनुशंसत्यमुष्मिन्नेवैनं लोके निध्नुवन्ति ॥ १० ॥

स्तुतं स्तोत्रं होतृप्रभृतयोऽनुशंसंति स्तोत्रीयास्ता ऋचोऽनुशंसेयुः तेनानुशंसनेनाऽमुष्मिन् स्वर्गे लोक एवैनं मृतं यजमानं निध्नुवन्ति प्रीणयन्ति। 'धू विधूनने' अत्रोपसर्गवशात् प्रीणने वर्त्तते। एतावत् कृत्वा ग्रहा ग्रहीतव्याः ॥ १० ॥

तेषामेवैन्द्रवायवाग्रत्वं कर्त्तव्यमिति दर्शयति—

यन्ति वा एते पथ इत्याहुर्ये मृताय कुर्वन्तीत्यैन्द्रवायवाग्रान् ग्रहान् गृह्णते पुनः पन्थानमपियन्ति ॥ ११ ॥

---

१. सा. सं. उ ६.१.११.१. २. सर्पराज्ञीपदमन्यथा व्याख्यातम् तै. ब्राह्मणे (१.४.६)

य ऋत्विजो मृताय यजमानायोक्तं क्रियाकलापं कुर्वन्ति । एते पथो मार्गान् वर्त्तमानयज्ञलक्षणान् यन्त्यपिगच्छन्तीति ब्रह्मवादिन आहुः। तस्य चेदं समाधानम्-ऐन्द्रवायवाग्रान्, ऐन्द्रवायवो ग्रहोऽग्रे प्रथमतो येषां ते तथोक्ताः, तथाविधान् ग्रहान् गृह्णते गृह्णीयुः। तदग्रत्वं हि प्राकृतं विकल्पितम्-'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्। यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामा आग्रयणाग्रा'निति। अतोऽत्र नित्यार्थं पुनर्विधानम्। तथा च यस्मात्पथो यज्ञमार्गात् पूर्वं प्रच्युतास्तमेव पन्थानं पुनरपियन्त्यपिगच्छन्ति ॥ ११ ॥

अथाऽस्मिन् यज्ञे बहिष्पवमानस्याऽऽग्निपावमानी प्रतिपद् कार्येति विधत्ते—

**'अग्न आयूंषि पवस' इति प्रतिपत्कार्य्या य एव जीवन्ति तेष्वायुर्दधाति ॥ १२ ॥**

'अग्न आयूंषि पवसे' इति बहिष्पवमानस्य प्रतिपत् कार्या। यद्यप्यत्र ऋङ्मात्रं प्रतीयते तथापि(१) तृचसूक्तानामादिग्रहणेन विधिरनादेशे' इति सूत्रकारेण परिभाषितत्वात् एतदादिकः (२)तृच एव ग्राह्यः 'अग्न आयूंषि पवसे' इत्यायुर्लिङ्गाद्य एव दीक्षिता जीवन्ति तेष्वायुर्दधाति स्थापयति ॥ १२ ॥

इत्थं प्रवृत्तं सत्रं समाप्य पुनः संवत्सरान्ते कर्त्तव्यमिति दर्शयति—

**संवत्सरेऽस्थीनि याजयेयुः संव्वत्सरो वै सर्व्वस्य शान्तिर्यत्पुरा संव्वत्सराद्याजयेयुर्व्वाचमरुष्कृतां क्रूरामृच्छेयुः ॥ १३ ॥**

यागानन्तरं संवत्सरे पूर्णे मृतस्य दीक्षितस्याऽस्थीनि याजयेयुः। अपूर्णे संवत्सरे याजयेयुश्चेत् वाचमरुष्कृतां क्रूरामृच्छेयुः प्राप्नुयुः॥१३॥

तस्मिन्नस्थिकर्तृकयज्ञे स्तोत्रपरिमाणाभावं स्तोमपरिमाणञ्चाऽऽह—

**असम्मितं स्तोत्रꣳ स्यादसम्मितो ह्यसौ लोकस्त्रिवृतः पवमानाः स्युः सप्तदशमितरत्सर्व्वम् ॥ १४ ॥**

तस्मिन्नस्थिकर्तृके यज्ञे स्तोत्रमसम्मितमपरिमितं स्याद्भवेत्। स्तोत्रपरिमाणं नापेक्ष्यमित्यर्थः। तत्कुतो हेतोः? हि यस्मादसौ स्वर्गो लोकोऽसम्मितोऽपरिमितस्तस्मात् तत्प्राप्तये अपरिमितं स्तोत्रं स्यादित्यर्थः।

---

१. लाट्या. श्रौ. ६. ३. ४.  २. सा. सं उ. ७. १. १२.

एवमेव स्तोमस्याऽप्यपरिमितत्वे प्रसक्तमिदमुच्यते । पवमानास्त्रिषु सवनेषु वर्त्तमानाः बहिष्पवमानाद्यास्त्रिवृतस्त्रिवृत्स्तोमयुक्ताः कार्याः । इतरत् पवमानव्यतिरिक्तं सर्वं स्तोत्रं सप्तदशं सप्तदशस्तोमकं कार्यम् ॥ १४॥

तदेतदुभयं प्रशंसति—

यत्त्रिवृतः पवमाना भवन्ति प्राणा वै त्रिवृत्प्राणानेवोपयन्ति यत्सप्तदशमितरत् सर्व्वं प्रजापतिर्व्वै सप्तदशः प्रजापतिमेवोपयन्ति ॥ १५ ॥

स्पष्टमेतत् ॥ १५ ॥

अथाऽस्मिन्नस्थिकर्त्तृकप्रयोगे प्रातिस्विकं ग्रहाग्रत्वं विधत्ते—

प्राणापानैर्व्वा एते व्यृध्यन्त इत्याहुर्ये मृताय कुर्व्वन्तीति मैत्रावरुणाग्रान् ग्रहान् गृह्णते प्राणापानौ मित्रावरुणौ प्राणापानैरेव समृध्यन्ते ॥ १६ ॥

एत ऋत्विजः प्राणापानैः प्राणवायुभिरपानवायुभिश्च विप्रयुज्ज्यन्त इत्याहुर्ब्रह्मवादिनः । ये मृताय यजमानायाऽऽर्त्विज्यं कुर्वन्तीति । अत्राऽयं परिहारः—प्रातःसवने विद्यमानान् ग्रहान् मैत्रावरुणाग्रान् मित्रावरुणौ देवते यस्य मैत्रावरुणोऽग्रे प्रमुखे येषां ते तथोक्तास्तथाविधान् ग्रहान् गृह्णते गृह्णीयुः । मित्रश्च वरुणश्चेति यौ देवौ तावेव प्राणापानावतस्तद्दैवत्यग्रहाग्रत्वेन प्राणापानैरेवैते समृध्यन्ते समृद्धा भवन्ति चिरजीविनो भवन्तीत्यर्थः ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे वेदार्थप्रकाशसहिते
नवमाध्यायस्याऽष्टमः खण्डः ॥

---

## अथ नवमः खण्डः ॥

अथ द्रोणकलशस्थस्य सोमस्य क्षये प्रायश्चित्तं विधित्सुस्तस्य दोषमाह—

यस्य कलश उपदस्यति कलशमेवाऽस्योपदस्यन्तं प्राणोऽनूपदस्यति प्राणो हि सोमः ॥ १ ॥

यस्य यजमानस्य कलशो द्रोणकलशस्थस्सोम उपदस्यति क्षयं प्राप्नोति, दसु उपक्षये, अस्य यजमानस्योपदस्यन्तं क्षीयमाणं कलश-

मनु पश्चात् प्राण उपदस्यति यजमानस्य प्राणोऽपि क्षयं प्राप्नोति । हि यस्मात् सोमः प्राणः प्राणहेतुः तस्मात् सोमस्योपदासे प्राणोपदासो युक्त इत्यर्थः ॥ १ ॥

अत एवं सति प्रायश्चित्तमपेक्षितम् तत्र शाखान्तरीयं मतं तावद्दर्शयति—

**तदाहुः पयोऽवनयेदिति ॥ २ ॥**

तत्तत्र कलशे उपदासविषय आहुः केचिच्छाखिनः । किमिति ? पयोऽवनयेदिति द्रोणकलशस्थे सोम उपक्षीणे तत्र दुग्धं पयोऽवनीय तेन सोमकार्य्याणि कर्त्तव्यानीति ॥ २ ॥

अथ स्वमतं दर्शयति—

**अथो खल्वाहुरन्तर्हितमिव वा एतद्यत्पयो हिरण्यमेवाऽपोऽभ्यवनयेद्धिरण्यमभ्युन्नयेदिति ॥३॥**

अथो खल्विति पक्षान्तरपरिग्रहे । अभिज्ञा ब्रह्मवादिन आहुः कथयन्ति । किमिति ? यत् एतदन्तर्हितमिव वै अन्तर्हितमसन्निकृष्टमप्रत्यक्षमेव दोहनात्प्राक् गवामूधसि वर्त्तमानस्याऽप्रत्यक्षत्वात् । अतः सोमस्यान्तर्द्धाने अन्तर्हितस्य पयसोऽवनयनमयुक्तम् । किं तर्हि? द्रोणकलशेऽवनेयम्। तदुच्यते–द्रोणकलशे हिरण्यं निधाय अपोऽभ्यवनयेदभिपूरयेदित्याहुः । (१)'सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत्। तत्सुवर्णं हिरण्यमभवदिति' श्रुत्यन्तरात् सुवर्णं सोमस्य प्रियशरीरम् । अभि रुपर्यर्थः । सुवर्णस्योपरि वसतीवर्य्याख्या हैयङ्गवीनमिश्रिता अपोऽवनयेदासिञ्चेत् । चमसानामुन्नयनकाले तेषु च हिरण्यं निधायाऽभ्युन्नयेदभिपूरयेदित्याहुर्ब्रह्मवादिनो ब्रूयुः ॥ ३ ॥

अस्मिन् पक्षे प्रागुक्तस्य प्राणोपदासस्य परिहारो यथा भवति तथा दर्शयति—

**प्राणा वा आपोऽमृतं हिरण्यममृत एवाऽस्य प्राणान् दधाति स सर्व्वमायुरेति ॥ ४ ॥**

आपः प्राणा वै प्राणरूपा एव तद्धेतुत्वात्।(२)'अन्नमयं हि सौम्य मन आपोमयः प्राण' इति हि वयमधीमहे । हिरण्यञ्चाऽमृतं मरणरहितं तस्य तैजसत्वेनाऽत्यन्ताग्निसंयोगेऽपि विनाशाभावात् । अत्र चाऽपां हिरण्यस्य च समुच्चयविधानादस्य यजमानस्य प्राणानमृते मरणाभाव एव दधाति निदधाति स्थापयति । अतः स यजमानः सर्वं सम्पूर्णं प्रा-

---

१. तै. ब्रा. १. ४. ७. ४.  २. छान्दो. उ. ६. ७. ६.

क्षणक्लृप्तं शतवर्षलक्षणं आयुरेति प्राप्नोति ॥ ४ ॥

अथ नाराशंसस्योपशोषणे प्रायश्चित्तं विधित्सुः पूर्वं तस्य शोषणमनर्थहेतुरिति दर्शयति—

**यस्य नाराशंस उपवायति नाराशंसमेवास्योपवायन्तं प्राणोऽनूपदस्यति प्राणो हि सोमः ॥ ५ ॥**

सवनमुखेष्वग्नौ समुद्धृताः पुनर्भक्षिताः पुनर्वसतीवरीभिः 'आप्यायस्व' इति मन्त्रेण पूरिताश्चमसा नाराशंसाः। सामान्याभिप्रायमेकवचनम्। यस्य यजमानस्य नाराशंस उपवायति उपशुष्यति 'ओवै शोषणे' भौवादिकः। उपवायन्तमुपशुष्यन्तं नाराशंसमनु पश्चादस्य यजमानस्य प्राण उपदस्यत्युपशुष्यति क्षयमुपगच्छति। नाराशंसात्मकः (१)शुष्यमाणः सोमो हि यस्मात् प्राणसंस्कृतः तस्मादित्यर्थः ॥ ५ ॥

तत्र कर्त्तव्यमाह—

**यमध्वर्युरन्ततो ग्रहं गृह्णीयात्तस्याऽऽप्तुमवनयेत् ॥ ६ ॥**

यमध्वर्युरन्ततः समीपे नाराशंसशोषणसमीपकाले गृह्णीयात् तस्यैकदेशमग्नौ हुत्वा प्राणसंस्कृतं नाराशंसमाप्तुं प्राप्त्यर्थं हुतशेषं चमसे यथाऽऽसिञ्चेत्। तथा चाध्वर्युसूत्रम्(२)'यदि नाराशंस उपदस्येद्यमध्वर्युः पूर्वं ग्रहं गृह्णीयात्तं वषट्कृतानुवषट्कृते हुत्वा चमसाध्वर्यवे प्रयच्छेत्तेनैनं स आप्याययतीति' ॥ ६ ॥

तदेतद्ग्रहावनयनं प्रशंसति—

**प्रायश्चित्यै वै ग्रहो गृह्यते प्रायश्चित्यैवाऽस्मै प्रायश्चित्तिं करोति ॥ ७ ॥**

नाराशंसोपशोषणसमये ग्रहो गृह्यते स न केवलं होमार्थं तथैव गृह्यते। अपि तु सन्निधानात् प्रायश्चित्यै प्रायश्चित्तार्थमपि। अतः प्रायश्चित्तार्थं गृहीतेन ग्रहेणैवाऽस्मै यजमानाय प्रायश्चित्तिं प्रायो विनाशस्तस्य समाधानं ज्ञानं चित्तिर्नाराशंसोपशोषणजनितदोषस्योपशमनं करोति ॥ ७ ॥

**(३)यदि पीतापीतौ सोमौ सङ्गच्छेयातामन्तः परिध्य-**

---

१. शुष्यमाण इत्यपपाठः। २. आप. श्रौ. १४. २८. १.

३. इदमेव वाक्यमापस्तम्बश्रौतसूत्रे हुताहुतसंसर्गप्रायश्चित्ततया हुताहुतपदघटितमाम्नातं ( आप. श्रौ. १४. ३०. २. ) तत्र द्रष्टव्यम्।

ङ्गारान्निर्वर्त्य जुहुयात् 'हुतस्य चाऽहुतस्य चाऽहुतस्य हुत-स्य च। पीतापीतस्य सोमस्येन्द्राग्नी पिबतं सुतं स्वाहे'ति सैव तस्य प्रायश्चित्तिः ॥ ८ ॥

प्रहचमसादिस्थं सोमं प्रथममग्नौ हुत्वा पश्चात् सदसि भक्षयन्ति अध्वर्युर्वषट्कर्त्तारो होत्रादयोऽन्ये चमसिनश्च। तत्र यदि पीतापीतौ सौमौ सङ्गच्छेयातां पीतशेषः सोमोऽपीतनाऽभक्षितेन सोमेन होमार्थमासादितेन वा यदि संसृष्टो भवेत्तदाऽन्तःपरिधि परिधीनामन्तर्मध्येऽङ्गारान्निर्वर्त्य पृथक्कृत्य 'हुतस्य च' इति संसृष्टं सोममङ्गारेषु जुहुयात्। सैषाऽऽहुतिरेव तस्य संसर्गदोषस्य प्रायश्चित्तिः। मन्त्रार्थस्तु—मन्त्रेण विलक्षणस्याग्नौ हुतस्य अहुतस्य चानेन क्रमेण संसृष्टस्य पीतापीतस्य होमानन्तरं पीतेन पीतावशेषितेन संसृष्टस्याऽपीतस्य सोमस्यैकदेशमेतदेव विपर्य्यस्योच्यते—अहुतस्य हुतस्य चेति। एवमुभयविधस्य पीतापीतस्य हुतशेषस्सोमः पीतः। अहुतः सोमोऽपीतः। तदुभयात्मकस्यैकदेशं सुतमभिषुतं रसं हे इन्द्राग्नी पिबतं तदर्थं स्वाहाऽहं तं सोममग्नौ प्रक्षिपामीति ॥ ८ ॥

यदि भक्षणायाऽऽनीतो हुतशिष्टः सोमः केशकीटादिभिर्जुष्टः स्यात् तदा कर्त्तव्यमाह—

प्रजापतये स्वाहेत्यभक्षणीयस्य जुहुयादुत्तरार्ध्यपूर्वार्ध्ये उपरवः ॥ ९ ॥

प्रजापतये स्वाहा'इति मन्त्रेणाऽभक्षणीयस्य भक्षणानर्हस्य केशादिभिर्दूषितस्य सोमस्य। कर्मणि षष्ठी। अभक्षणीयं सोमं जुहुयात् प्रक्षिपेत्। कुत्र होमः? इत्यपेक्षायामाह—उत्तरार्ध्यपूर्वार्ध्ये उपरव इति। उपरवा नाम दक्षिणहविर्धानस्याऽधस्तात् परोक्षं खाताश्चत्वारो गर्त्ताः तत्रोत्तरार्द्धभवौ द्वौ गर्तावुत्तरार्ध्यौ। पूर्वार्द्धे पूर्वदिक्स्थैशान्यां दिशि वर्त्तमान उपरवेऽभक्षणीयः प्रक्षेप्यः। अत्र यज्जुहोति तदाहवनीये इति जुहोतिचोदनाया आहवनीय एव होमाधारत्वेन प्राप्यते यद्यपि तथापि(१)'पदे जुहोती'त्यत्र यथा आहवनीयस्य बाध एवमत्रापि द्रष्टव्यः ॥ ९ ॥

अभिवृष्टस्य सोमस्य भक्षणमन्त्रं विधत्ते—

'इन्दुरिन्दुमवागा'दित्यवमृष्टस्य भक्षयेत् ॥ १० ॥

---

१. अयं बाधविचारः पूर्वमीमांसायां दशमाष्टमाष्टमे ( १०. ८. ८. ) द्रष्टव्यः।

इन्दुरित्यादिना मन्त्रेणाऽवभृष्टस्य वर्षणेन तृषितस्य सोमस्य कियाग्रहणं कर्त्तव्य'मिति कर्मणः सम्प्रदानत्वा(१)"च्चतुर्थ्यर्थे बहुल"मिति षष्ठी। तं सोमं भक्षयेत ॥ १० ॥

अस्य च मन्त्रस्य शेषं दर्शयति—

'तस्य त इन्दाविन्द्रपीतस्येन्द्रियावतः सर्व्वगणस्य सर्व्वगण उपहूत उपहूतस्य भक्षयामि' ॥ ११ ॥

अयमर्थः—इन्दुरयं रसात्मकः सोम इदममृतमयं द्युस्थानं सोममवागादवाप्नोत् । हे इन्दो तस्य तथाविधस्य ते तवांशमहं भक्षयामि। कीदृशस्य तव? इन्द्रपीतस्येन्द्रेण पीतस्येन्द्रियावतो वीर्यवतः सर्वगणस्य सर्वैर्ऋत्विग्गणैरर्पितस्योपहूतस्य 'अध्वर्युरुपह्वयस्व'इत्यादिभिः कृतोपह्वानस्य।भक्षयिता विशेष्यते—सर्वगणः समानभक्षैरन्यैर्ऋत्विग्गणैश्चक्षुरादीन्द्रियगणैर्वा युक्तोऽन्यैर्ऋत्विग्भिर्मन्त्रेणाऽनुज्ञातः ॥११॥

चमसहोमानन्तरं तद्भक्षणं कर्त्तव्यम्। कृते च तस्मिन्नध्वर्युणा स्तोत्रोपाकरणं कार्यम्। यद्यध्वर्युश्चमसभक्षणात्पूर्वं स्तोत्रमुपाकुर्य्यात् तदा कर्त्तव्यं प्रायश्चित्तमाह—

"हिरण्यगर्भः समवर्त्तताग्र"इत्याज्येनाऽभ्युपाकृतस्य जुहुयादाग्नीध्रं परेत्य "भूतानां जातः पतिरेक आसीत् स दाधार पृथिवीं द्यामुतेमां तस्मै त इन्दो हविषा विधेम स्वाहे"ति सैव तस्य प्रायश्चित्तिः ॥ १२ ॥

अभ्युपाकृतस्याऽभाक्षितं चमसमभिलक्ष्योपाकृतं प्रारब्धं स्तोत्रं यस्य स तथोक्तः। तादृशस्य यजमानस्याऽनुपाकरणदोषापगमनार्थमाग्नीध्रीयधिष्ण्यं परेत्य प्राप्य तस्मिन् 'हिरण्यगर्भ' इति मन्त्रेणाज्येन द्रव्येण जुहुयात्। 'भूतानां जात'इत्यादिस्तस्य मन्त्रस्य शेषः।तस्य दोषस्य सैवाऽऽहुतिः प्रायश्चित्तिरुपशमहेतुः। मन्त्रस्याऽयमर्थः—अत्र सर्वस्य भूतभौतिकप्रपञ्चस्य सृष्टेः पुरा हिरण्यगर्भः हिरण्मयस्याऽण्डस्य गर्भभूतः प्रजापतिः समवर्त्तत परस्माद्ब्रह्मणः सकाशादजायत। स च जातो जातमात्र एव भूतानां स्वात्मना सृज्यानां सर्वेषां भूतजातानामेकोऽसाधारणः पतिरासीदधिपतिरभवत्। स च पृथिवीं विस्तीर्णां द्यामुतापीमां भूमिं च दाधार धृतवान्। तस्मै हिरण्यगर्भाय हे इन्दो सोम ते तव सम्बन्धिना हविषा विधेम परिचरेम।'तस्मा' इति कर्मणि चतुर्थी॥१२॥

---

१. पा. सू. २. ३. ६२.

अथ सोमाभिषवार्थग्राव्णां भेदे कर्त्तव्यमाह—

यदि ग्रावाऽपि शीर्येत पशुभिर्यजमानो व्यृध्यते पशवो वै ग्रावाणो द्युतानस्य मारुतस्य साम्ना स्तुयुः ॥१३॥

यद्यभिषवसमये ग्रावाऽपि शीर्य्येत विशीर्णो भिन्नो भवेत्तदा यजमानः पशुभिर्गवादिभिर्व्यृध्यते पशवो हीयन्ते। ग्रावाणः पशव एव खलु। पशवो यथा क्षीरादिरसप्रदा एवं सोमरसप्रदातृत्वात् ग्राव्णां पशुत्वम्। तथा च तद्भेदनेन पशुहानिर्युज्यते। तदेतत्प्रायश्चित्तं कर्त्तव्यम्। मरुत्सम्बन्धिनो द्युतानस्यैतत्संज्ञस्य ऋचः साम्ना। तत्साम च (१)'वृत्रस्य त्वा श्वसथात्' इत्यस्यामुत्पन्नम्। तेन साम्ना होतारः स्तुवीरन् ॥१३॥

ग्राव्णां भेदे साम्नः सम्बन्धो योग्य इत्याह—

मारुता वै ग्रावाणः स्वेनैवैनाꣳस्तद्रूपेण समर्द्धयति॥१४॥

मारुता मरुद्देवत्याः खलु ग्रावाणः 'मरुतो नशतोपाक्षया' इति हि ग्राव्णां योजनमन्त्रः। तस्मान्मारुतस्य साम्नः करणेनैनान् ग्राव्णः स्वेनैव रूपेण समर्द्धयति समृद्धान् पूर्णावयवान् करोति ॥ १४ ॥

अथ सोमस्याऽभिदाहे प्रायश्चित्तं विधत्ते—

यदि सोममभिदहेद्ग्रहानध्वर्युः स्पाशयेत स्तोत्राण्युद्गाता शस्त्राणि होताऽथ यथापूर्वं यज्ञेन चरेयुः पञ्च दक्षिणा देयाः पाङ्क्तो यज्ञो यावान्यज्ञस्तमेवारभतेऽवभृथादुदेत्य पुनर्दीक्षते तत्र तद्व्याश्यहास्यं स्यात् पुरा द्वादश्या दीक्षेत यद्द्वादशीमतिनयेदन्तर्द्धीयेत ॥ १५ ॥

यदि सदोहविर्धानादीनि प्रमादादग्निना दहेरन् तदा सोमादिकं सर्वं यज्ञसम्भारमादाय तत्समीपे पुनरन्यद्देवयजनमध्यवसाय यज्ञशेषोऽनुष्ठेयः। यदि सोममपि हविर्द्धानादिभिः सहाऽग्निरभिदहेत् तदाऽध्वर्युर्ग्रहानूर्द्धपात्राणि वायव्यानि स्पाशयेत, एतावदनुष्ठितमेतावन्नेति कृताकृतविभागं जानीयात्। तथोद्गाता स्तोत्राणि होता च शस्त्राणि। अथाऽनन्तरमन्यद्देवयजनमध्यवसाय यथापूर्वं पूर्ववदन्यं सोममाहृत्याभिषुत्य पुनरवशिष्टेन यज्ञेन चरेयुर्यजेयुः। क्रतुसंकल्पावसरे यावत्यो दक्षिणादातव्यत्वेन संकल्पितास्तासां स्थाने पञ्चैव दक्षिणा गावो दे-

१. सा. सं. पू. ४. १. ४. २.

याः । यज्ञस्य पाङ्क्तत्वं पूर्वमुक्तम् । तथा सति यावान् यत्परिमाणको यज्ञः तत्परिमाणमेव यज्ञं पञ्चसंख्योपेतया दक्षिणया आरभते गृह्णाति । ततोऽवभृथादनन्तरं उदेत्य उदयनीयाद्युदवसानीयान्तं कृत्वा पुनस्तस्यैव क्रतोरनुष्ठानाय दीक्षेत । यज्ञो हि यज्ञस्य प्रायश्चित्तिरिति श्रुतेः।यद्दक्षिणाद्रव्यं पूर्वस्मिन् यज्ञे दास्यन् स्यात् तत्र तस्मिन् पुनः क्रियमाणे यज्ञे तद्दद्यात् यज्ञप्राप्तेरूर्ध्वं या द्वादशी द्वादशसंख्यापूरणी रात्रिः तस्या द्वादश्याः पुरा पुरस्ताद्दीक्षेत प्रायश्चित्तरूपस्य यज्ञान्तरस्य दीक्षा कार्या। यद्यदि द्वादशीं रात्रिमतिनयेत् दीक्षया अतिक्रामयेत् द्वादशादूर्ध्वं दीक्षेतेत्यर्थः, तदा स यज्ञोऽन्तर्द्धीयेत अन्तर्हितोऽदृश्यो भवेत् । पुनरनुष्ठानेन प्राप्तुं न शक्यते इत्यर्थः ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे वेदार्थप्रकाशसहिते नवमाध्यायस्य नवमः खण्डः॥

## अथ दशमः खण्डः ॥

प्रवर्ग्येण चरत्सु महावीरस्य भेदने प्रायश्चित्तं विधत्ते—

**यदि महावीरो भिद्येत तं भिन्नमभिमृशेत् (१)"य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्त्ता विहुतं पुनः॥ मा भेम निष्ट्या इवेन्द्र त्वदरणा इव । वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि । अमन्महीदनाशवो नुग्राभश्च वृत्रहन् सकृत्सुते महता शूर राधसानुस्तोमं मदेमही"ति महावीरं भिन्नमभिमृशेत् सैव तस्य प्रायश्चित्तिः ॥ १ ॥**

यदि प्रवृञ्जनसमये महावीरः त्रुट्येत्, प्रादेशमात्रे मृन्मये यस्मिन् पात्रे बहुलं घृतमानीय संतप्ते तस्मिन्नाज्ये पयः आनीय प्रवृज्यते स प्रवर्ग्यपात्रविशेषो महावीरः, स यदि भिद्येत भिन्नो भवेत् तदा तं भिन्नं महावीरं 'य ऋते चिदभिश्रिष' इति तृचेनाऽभिमृशेत् सैव तस्य भेदने प्रायश्चित्तिः । पुनर्महावीरमभिमृशेदिति वचनमुपसंहारार्थम् ।

ऋचामयमर्थः—अभिश्रिषः अभिश्लिष्यति दृढीभवति अनेनेति अभिश्लिदभिन्नस्य सन्धायकं द्रव्यम् । रलयोरेकत्वस्मरणात् रेफः । सन्धायकात अन्यस्मात् द्रव्यात् ऋते चित् ऋतेऽपि । (२)'अन्यारा-

१. ऋ. सं. ५. ७. १२. २. पा. सू. २. ३. २९.

वितरम्’ इति पञ्चमी। भिन्नस्य सन्धायकं जतुप्रभृतिकं द्रव्यमन्तरेणापि यः मघवा इन्द्रः सन्धि सन्धातव्यं भिन्नं वस्तु सन्धाता स्वसामर्थ्येनैव भिन्नस्य पुनरेकीकर्त्ता। कदा? अस्रुभ्य आतृदः पुरा। अंसमध्यदेहयोः सन्धयः जत्रूणि। अत्र तत्साहचर्यात् महावीरस्योपरिभागो लक्ष्यते।‘षष्ठ्यर्थे चतुर्थी वक्तव्ये’ति चतुर्थी। जत्रूणां आतृदः आतर्दनाद्धिंसनाच्छेदनात् पुरा पूर्वमेव।‘उतृदिर् हिंसानादरयोः, इति धातोः(१)“सृपितृदोः कसु”न्निति कृत्यार्थे तृदः कसुन्प्रत्ययः।(२)“क्त्वातोसुन्कसुन” इत्यव्ययत्वात् “अव्ययादाप्सुप” इति पञ्चम्या लुक्। मघवा इन्द्रः पुरूवसुर्बहुधनः विह्रुतं विनष्टं पुनर्निष्कर्त्ता निःशेषेण कर्त्ता पुनरुत्पादयितेत्यर्थः। ह्रु कौटिल्ये (३)‘ह्रु ह्वरेश्छन्दसी’ति निष्ठायां ह्रुभावः। हे इन्द्र अरणा इव रणन्तीति रणाः स्तोतारः अस्तोतारो यथा त्वत्तो बिभ्यति एवं वयं निष्ठ्या हिंसाया इव त्वत्तो भा भेम भीता मा भूम। अद्रिवः आद्रिणात्यनेनेत्याद्रिर्वज्रः तद्वन्निन्द्र प्रजहितानि प्रकर्षेण हातव्यानि वनान्यरण्यानि त्वत्प्रसादात् दुरोषासः उषितु दग्धुं बाधितुमशक्याः सन्तो वयं नाऽमन्महि न जानीमः। तत्प्रसिद्धं त्वदीयं रक्षणं अमन्महीत् इच्छन्दोऽवधारणे। अज्ञासिष्म एव कथंभूताः? आशवः व्यापनशीलाः। हे वृत्रहन्। अनुग्राभः त्वया अनुगृह्यमाणाश्च अपि वा हे शूर ते तव सम्बन्धिना महता प्रभूतेन हेतुना स्तोमं त्वदीयं स्तोत्रमनु पश्चात् सकृद्युगपत् एकहेलयैव सुष्ठु मदेमहि हृष्यामः॥ १॥

निखातस्य यूपस्य यज्ञमध्ये विरोहणकृतां हानिं दर्शयति—

**असुर्यं वा एतस्माद्वर्णं कृत्वा तेज इन्द्रियं वीर्यमन्नाद्यं प्रजाः पशवोऽपक्रामन्ति यस्य यूपो विरोहति स ईश्वरः पापीयान् भवितोः॥ २॥**

यस्य यजमानस्य यज्ञमध्ये यूपो विरोहति अष्टाश्रित्वाद्यूपात्पुनः शाखान्तरमुत्पद्यते एतस्माद्यजमानात् असुर्यं असुरस्य स्वभूतं माया-

---

१. पा सू. ३. ४. १७. भावलक्षणेऽर्थे वर्तमानयोः सृपितृदोः धात्वोः तुमर्थे कसुन् प्रत्ययस्स्यादिति सूत्रार्थः॥

२. पा. सू. १. १. ४०. क्त्वाप्रत्ययान्तं तोसुन्प्रत्ययान्तं, कसुन् प्रत्ययान्तं चाव्ययं स्यादित्यर्थः।

३ पा. सू. २. ४. ८२. ४. पा. सू. ७. २. ३१. ५. पा. सू. ३. ४. १३.

मयं वर्णं रूपं कृत्वा तेजआदीन्यपक्रामन्ति अपगच्छन्ति । तेजः शरीरकान्तिः, इन्द्रियं अक्षयोग्यं, वीर्य्यं बलकर्म, अन्नाद्यं प्रशस्तमन्नं, प्रजाः पुत्रभृत्यादयः पशवो गवाद्याः एवमेतेषां अपक्रमणात् स यजमानः पापीयान् भवितोः ईश्वरो निकृष्टो भवितुं समर्थः स्यात् । (१)'ईश्वरे तोसुन्कसुनौ' विति भवतेस्तुमर्थे तोसुन् प्रत्ययः ॥ २ ॥

तत्र प्रायश्चित्तत्वेन पशुयागः कर्त्तव्य इत्याह—

**त्वाष्ट्रं पशुं बहुरूपमालभेत त्वष्टा वै पशूनां रूपाणां विकर्त्ता तमेव तदुपधावति स एनं तेजसेन्द्रियेण वीर्य्येणाऽन्नाद्येन प्रजया पशुभिः पुनस्समर्द्धयति सैव तस्य प्रायश्चित्तिः ॥ ३ ॥**

त्वाष्ट्रं त्वष्टृदेवत्यं बहुरूपं नानारूपं पशुं छागं आलभेत संज्ञपयेत् बहुरूपेण पशुना त्वष्टारं यजेतेत्यर्थः । नानारूपस्य त्वष्टुश्च सम्बन्धयोग्यतामाह—त्वष्टा खलु पशूनां गवादीनां यानि परस्परं विभिन्नानि रूपाणि तेषां विविधं कर्त्ता । तथा च तैत्तिरीयकम्-(२)यावच्छो वै रेतसः 'सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायत' इति । तस्मेन बहुरूपेण पशुना तं त्वष्टारमेव उपधावत्युपगच्छति । स च त्वष्टाऽनेन पशुना प्रीतस्सन् एनं यजमानं तेजआदिभिः पुनः समर्द्धयति समृद्धं करोति । तस्य यूपविरोहस्य सैव प्रायश्चित्तिः ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति ताण्ड्यमहाब्राह्मणे नवमाध्यायस्य दशमः खण्डः ॥१०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे

नवमोऽध्यायः ॥

---

१. पा. सू. ३. ४. १३.  २. तै. सं. १. ५. ९.

# अथ दशमोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ व्यूढद्वादशाहं विधातुकामः तदीयदशरात्रगतान् त्रिवृदादि- स्तोमान् क्रमेण प्रशंसिष्यन् प्रथमं त्रिवृतं स्तौति—

**अग्निना पृथिव्यौषधिभिस्तेनाऽयं लोकस्त्रिवृद्वायुनाऽन्तरिक्षेण वयोभिस्तेनैष लोकस्त्रिवृद्योऽयमन्तरादित्येन दिवा नक्षत्रैस्तेनाऽसौ लोकस्त्रिवृदेतदेव त्रिवृत आयतनमेषाऽस्य बन्धुता ॥ १ ॥**

अयं पुरोवर्त्ती लोक अग्निना देवतया पृथिव्या औषधिभिस्तत्रोत्पन्नाभिस्तेनैतत्त्रितयेन त्रिवृत् त्रिगुणः।तथाऽन्तरिक्षेण वायुना तदधिष्ठातृदेवतया वयोभिः पक्षिभिः तेनैतत्त्रितयेन योऽयमन्तरा द्यावापृथिव्योर्मध्ये लोक एष भूसन्निहितस्त्रिवृत् त्रिगुणः । तथा दिवा द्युलक्षणस्थानेनाऽऽदित्येन तदधिष्ठात्रा देवतया नक्षत्रैस्तत्रत्यैरुडुभिस्तेनैतत्त्रितयेन।एवं उपरि दृश्यमानो लोकः योऽयं अन्तरा स्वर्गश्च पृथिवी चान्तरिक्षलोक इत्यर्थः । तथा सूर्य्येण दिवा स्वर्गेण नक्षत्रैश्चाऽसौ स्वर्गो लोकस्त्रिवृत् त्रिगुणः।एवं त्रयाणां लोकानां प्रत्येकं त्रिवृत्त्वान्नवसंख्याको यः समुदायः एतदेव त्रिवृतः ऋक्त्रयनवकात्मकस्य त्रिवृत्स्तोमस्य आयतनं स्थानम्।एषैवास्य त्रिवृतो बन्धुता बन्धुसमूहः । त्रिगुणास्त्रयो लोकास्त्रिवृतः परिजनभूता इत्यर्थः । (१)'ग्रामजनबन्धुभ्यस्तल्' इति तल् प्रत्ययः ॥ १ ॥

एतद्वेदनमपि फलवदित्याह—

**आयतनवान् बन्धुमान् भवति य एवं वेद ॥ २ ॥**

एवमुक्तप्रकारेण यस्त्रिवृतं वेद सोऽपि आयतनवान् स्थानवान् बन्धुमान् बान्धवैर्युक्तश्च भवति ॥ २ ॥

तस्यैव त्रिवृतो ब्रह्मवादिभिः कृतां प्रतिष्ठारूपतां प्रदर्श्योपपादयति—

**तमु प्रतिष्ठेत्याहुस्त्रिवृद्ध्येतेषु लोकेषु प्रतिष्ठितः ॥ ३ ॥**

---

१. पा. सू. ४. २. ४३.

तमु तमेव त्रिवृतं प्रतिष्ठा प्रतिष्ठात्मक इति ब्रह्मवादिनः आहुः। कुतो हेतोः ? त्रिवृद्ध्येव त्रिवृत्स्तोम एव खलु एषु पूर्वमुक्तेषु भूरादिषु प्रत्येकं त्रिगुणलोकेषु प्रतिष्ठितः। तदायतनत्वप्रतिपादनात् तत्रैवाऽऽश्रितो वर्त्तते। ततस्तस्य प्रतिष्ठात्वम् ॥ ३ ॥

अथ पञ्चदशस्तोमं पूर्ववत् प्रशंसति—

**अर्द्धमास एव पञ्चदशस्याऽयतनमेषाऽऽस्य बन्धुता॥४॥**

मासस्यार्द्धमर्द्धमासः। (१)'अर्द्धं नपुंसक'मित्येकदेशिसमासः। अर्द्धमासेऽपि पञ्चदशसंख्या विद्यते। अतः पञ्चदशस्य पञ्चदशस्तोमस्यार्द्धमास एव आयतनं स्थानम् । एष एवाऽर्द्धमासः अस्य पञ्चदशमुपपादयतीति बन्धुता बन्धुसमूहः। निर्दिश्यमानप्रति निर्द्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्य्यायेण तत्तल्लिङ्गतामुपाददत इति वचनादत्राऽपि निर्द्दिश्यमानापेक्षया एषेति स्त्रीलिङ्गता ॥ ४ ॥

वेदनं प्रशंसति—

**आयतनवान् बन्धुमान् भवति य एवं वेद ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

अथाऽस्य पञ्चदशस्य ओजोबलरूपत्वमभिधायोपपादयति—

**तं चौजो बलमित्याहुरर्द्धमासशो हि प्रजाः पशव ओजो बलं पुष्यन्ति ॥ ६ ॥**

तं पञ्चदशस्तोमं ओजोरूपं बलरूपं चेत्याहुः ब्रह्मवादिनः बलहेतुः शरीरे वर्त्तमानो रसविशेषः, ओजो बलं प्रसिद्धम्।अर्द्धमासश अर्द्धमासेन हि क्षीरादिरसोपजीवनसाहितेन प्रजाः मनुष्याः पशवश्च ओजो बलं च पुष्यन्ति पोषयन्ति वर्द्धयन्ति। अतस्तदायतनोभयात्मकत्वमुपपन्नम्॥६॥

अथ सप्तदशस्तोमं प्रशंसति—

**संवत्सर एव सप्तदशस्याऽऽयतनं द्वादश मासाः पञ्चर्त्तव एतदेव सप्तदशस्याऽऽयतनमेषाऽस्य बन्धुता ॥ ७ ॥**

सप्तदशस्तोमस्य संवत्सर एवाऽऽयतनम्। कथं तस्य सप्तदशसंख्यायोगः ? तदाह-द्वादश मासाश्चैत्राद्याः। हेमन्तशिशिरयोः समासेनैकत्वात् पञ्चर्त्तवः। एवं सप्तदशावयवः संवत्सरः तस्मादेतदेव सप्तदशस्याऽऽयतनमित्युक्तस्योपसंहारः। गतमन्यत् ॥ ७ ॥

---

१. पा. सू. ४. २. ४२.

अथ पूर्ववद्वेदनं प्रशंसति—

आयतनवान् बन्धुमान् भवति य एवं वेद ॥ ८ ॥

स्पष्टम् ॥ ८ ॥

अथाऽस्य सप्तदशस्य प्रजातिरूपत्वं विधायोपपादयति—

तमु प्रजातिरित्याहुः संवत्सरं हि प्रजाः पशवोऽनुप्रजायन्ते ॥ ९ ॥

तं सप्तदशस्तोमं प्रजातिः प्रजोत्पत्यात्मक इत्याहुर्ब्रह्मवादिनः कुतः ? हि यस्मात् संवत्सरमनु सम्वत्सरानन्तरमेव गर्भरूपाः प्रजाः पशवश्च प्रजायन्ते उत्पद्यन्ते । अतः संवत्सरायतनसप्तदशस्य प्रजात्यात्मकत्वमुपपन्नम् ॥ ९ ॥

अथैकविंशस्तोमं प्रशंसति—

आदित्य एवैकविंशस्याऽऽयतनं द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश एतदेवैकविंशस्याऽऽयनमेषाऽस्य बन्धुता ॥ १० ॥

एकविंशस्य स्तोमस्य आदित्य एवाऽऽयतनं आश्रयः मासाद्यपेक्षया तस्यैकविंशत्वेन उभयोः सादृश्यात् । गतमन्यत् ॥ १० ॥

तद्वेदनं प्रशंसति—

आयतनवान् बन्धुमान् भवति य एवं वेद ॥११॥

स्पष्टोऽर्थः ॥ ११ ॥

अथाऽऽस्य स्तोमस्य देवतल्पत्वं विधाय तद्वेदनेन सह स्तौति—

तमु देवतल्प इत्याहुः प्र देवतल्पमाप्नोति य एवं वेद ॥१२॥

स्पष्टम् ॥ १२ ॥

अथ त्रिणवस्तोमं प्रशंसति—

त्रिवृदेव त्रिणवस्याऽऽयतनमेषाऽस्य बन्धुता ॥१३॥

त्रिवृत्स्तोम एव त्रिणवस्तोमस्याऽऽश्रयः यतोऽयं त्रिवृत् समुदायात्मकः । समुदायश्च समुदाय्याश्रय एवेति प्रसिद्धम् ॥ १३ ॥

अथैतद्वेदनं प्रशंसति—

आयतनवान् बन्धुमान् भवति य एवं वेद ॥ १४ ॥

स्पष्टोऽर्थः ॥ १४ ॥

तस्य च पुष्टिरूपत्वं विधाय प्रशंसति—

तमु पुष्टिरित्याहुस्त्रिवृद्ध्येवैष पुष्टः ॥ १५ ॥

तं त्रिणवस्तोमं पुष्टिः अभिवृद्धिः तद्रूप इत्याहुर्ब्रह्मवादिनः । हि यस्मादेष त्रिणवः पुष्टोऽभिवृद्धः त्रिवृदेव त्रिणवस्तोम एव त्रिरावृत्त्या पुष्टस्त्रिणव इति व्यपदिश्यते । अतोऽस्य पुष्टिरूपता युक्ता ॥ १५ ॥

अथ त्रयस्त्रिंशस्तोमं प्रशंसति—

**देवता एव त्रयस्त्रिंꣳशस्याऽऽयतनं त्रयास्त्रिंꣳशद्देवताः प्रजापतिश्चतुस्त्रिंꣳश एतदेव त्रयस्त्रिंꣳशस्याऽऽयतनमेषाऽस्य बन्धुता ॥ १६ ॥**

त्रयस्त्रिंशस्य स्तोमस्य देवता आयतनं त्रयस्त्रिंशत्संख्याका हि देवताः । अष्टौ वसवः, एकादश रुद्राः, द्वादशाऽऽदित्याः, इन्द्रश्चेति द्वात्रिंशत् । प्रजापतिस्त्रयस्त्रिंशत्संख्यापूरकः । एतदेव त एव देवाः त्रयस्त्रिंशस्याऽऽयतनमित्युक्तोपसंहारः । एषैवाऽस्य स्तोमस्य बन्धुता बन्धुसमूहः त्रयस्त्रिंशद्देवा एवाऽस्य परिजनभूता इत्यर्थः ॥ १६ ॥

एतद्वेदनं फलवदित्याह—

**आयतनवान् बन्धुमान् भवति य एवं वेद ॥ १७ ॥**

स्पष्टम् ॥ १७ ॥

अथाऽस्य स्तोमस्य नाकरूपत्वमुपपादयति—

**तमु नाक इत्याहुर्न हि प्रजापतिः कस्मै चनाऽकम् ॥१८॥**

तमु तमेव त्रयस्त्रिंशस्तोमं नाकः, कं सुखं अकं दुःखं नास्त्यस्मिन् अकमिति नाकः, दुःखलेशेनाऽसंस्पृष्टः सुखात्मक इत्याहुः । न खलु प्रजापतिः सर्व्वं सृष्ट्वा कस्मैचन कस्मैचिदपि पुरुषाय अकं दुःखहेतुर्भवति । अतस्तदायतनोऽपि स्तोमः नाकात्मक इत्यर्थः । (१)'नभ्राणनपान्नवेदानासत्या' इत्यादिना प्रकृतिभावस्य निपातनात् (२)'नलोपो नञः' इति नाक इत्यत्र नञो नकारस्य लोपो न भवति ॥ १८ ॥

अथ चतुर्विंशादयः स्तोमा छन्दोमास्तान् प्रशंसति—

**छन्दांस्येव छन्दोमानामायतनमेषैषां बन्धुता ॥ १९ ॥**

छन्दोभिर्गायत्र्यादिभिर्मीयमानाश्चतुर्विंशादयः स्तोमाश्छन्दोमाः । तेषां छन्दांस्येव गायत्र्यादीन्येवाऽऽयतनम् । तत्र चतुर्विंशस्य चतुर्विंशत्यक्षरात्मिका त्रिष्टुबायतनम् । अष्टाचत्वारिंशस्य तृतीयस्य छन्दोमस्याष्टाचत्वारिंशदक्षरा जगती आयतनम् । एषां च्छन्दोमानामेषा बन्धुता एषां गायत्र्यादय एव बन्धुसमूहः ॥ १९ ॥

---

१. पा. सू. ६. ३. ७५. २. पा. सू. ६. ३. ७३.

एतद्वेदनं प्रशंसति—

**आयतनवान् बन्धुमान् भवति य एवं वेद ॥ २० ॥**

स्पष्टम् ॥ २० ॥

अथ तेषां छन्दोमानां पुष्टिरूपत्वं विधाय प्रशंसति—

**तानु पुष्टिरित्याहुः पशवो हि छन्दोमाः ॥ २१ ॥**

तानेतांश्चतुर्विंशादीन् पुष्टिः पुष्ट्यात्मका इत्याहुः। हि यस्मात् पशवश्छन्दोमाः पशुसाधनभूताः। पशवश्च क्षीरादिप्रदानेन पुष्टिहेतव इति युक्तं छन्दोमानां पुष्टिरूपत्वम् ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे वेदार्थप्रकाशसहिते
दशमाध्यायस्य प्रथमः खण्डः ॥

---

## अथ द्वितीयः खण्डः ॥

अथ द्वादशाहं विधित्सुस्तत्प्रकृतिभूतस्याऽग्निष्टोमस्य ज्योतिष्टोमत्वं निर्वक्तुमुपक्रमते—

**प्रजापतिः प्रजा असृजत सोऽताम्यत्तस्मै वाग्ज्योतिरुदगृह्णात्सोऽब्रवीत्को मेऽयं ज्योतिरुदग्रहीदिति स्वैव ते वागित्यब्रवीत्तामब्रवीद्विराजं त्वा च्छन्दसां ज्योतिष्कृत्वा यजान्ता इति ॥ १ ॥**

पुरा प्रजापतिः सर्वकारणभूतः स्रष्टा स्रष्टव्याः प्रजाः प्रजोपलक्षितं सर्वं जगद् असृजत सृष्टवान्। सृष्ट्वा च सः प्रजापतिरताम्यत् अश्राम्यत् व्यापारबाहुल्यात्। एवं श्रान्तस्य तस्मै, षष्ठ्यर्थे चतुर्थी, तस्य प्रजापतेर्ज्योतिस्तेजः वाग्देवता उदगृह्णात् उत्कृष्टा गृहीतवती। स प्रजापतिरब्रवीत्—मे मदीयं ज्योतिस्तेजः कोऽयमुदग्रहीदिति। ततो वाक् प्रजापतिमब्रवीत्। किमिति ? तदुच्यते-हे प्रजापते ते तव स्वैव स्वभूतैव वागहं त्वदीयं ज्योतिरुदग्रहीषमिति। ततस्तां वाचं प्रजापतिरब्रवीत्-हे वाक्ज्योतिः ! मदीयेन ज्योतिषा युक्तां त्वा त्वां छन्दसां गायत्र्यादीनां मध्ये विराजं विराडात्मकं छन्दः कृत्वा यजान्तै यजेरन् यजान्ता इति यजेर्लेटि (१)'लेटोऽडाटा'वित्याडागमः (२)'वैतोऽन्यत्र इत्यैत्वम् ॥ १ ॥

---

१. पा.सू. ३. ४. ९४. २. पा. सू. ३. ४. ९६.

इत्थं विराजो ज्योतिरात्मकत्वमुक्तम्। अथाऽग्निष्टोमस्य ज्योतिष्टोमत्वं निर्वक्ति—

**तस्माद्यो विराजᳪ स्तोमᳪसम्पद्यते तं ज्योतिष्टोमोऽग्निष्टोम इत्याचक्षते विराड्ढि छन्दसां ज्योतिः ॥२॥**

यस्मादुक्तप्रकारेण विराड् ज्योतिरात्मिका तस्मात् यस्तोमः, अत्र स्तोमशब्देन स्तोमवान् याग उच्यते, यः सोमयागो विराजं सम्पद्यते। यत्र संस्तुतानां सर्वासां स्तोत्रीयाणां दशसंख्याविभागे अन्ततो दशसंख्ययैव परिसमाप्यते नावशिष्यते स यागः विराजं सम्पद्यते। दशाक्षरा विराडिति श्रुतेर्दशसंख्यैव विराट् तस्या अत्र सद्भावात् तं स्तोमं स्तोमवन्तं सोमयागं ज्योतिष्टोमोऽग्निष्टोम इत्याचक्षते ज्योतीरूपविराट्सम्पत्तेः ज्योतिष्टोमः, अन्तिमे स्तोत्रे 'यज्ञायज्ञा वो अग्नय' इत्यस्यामृचि गीयमानस्याऽग्निष्टोमस्य सद्भावादग्निष्टोम इत्युभयथा अभिज्ञा ब्रह्मवादिनः कथयन्ति। अस्य चाऽग्निष्टोमस्य संस्तुतस्य विराट्सम्पत्तिः षोडशोऽध्याये 'तस्य नवतिशतं स्तोत्रीया' इत्यत्राऽस्माभिः प्रदर्शिता। पूर्वमाख्यायिकया यद्विराजो ज्योतीरूपत्वमुक्तं तदेव विव्रियते—छन्दसां गायत्र्यादीनां मध्ये विराट्छन्दो हि ज्योतिः ज्योतिरात्मिकेति ॥ २ ॥

एतद्ब्राह्मणार्थं जानतोऽपि ज्योतिर्भवतीत्याह—

**ज्योतिः समानानां भवति य एवं वेद ॥ ३ ॥**

समानानां सदृशानां ज्ञातीनां मध्ये एवंवेदिता ज्योतिः ज्योतिष्मान् तेजस्वी भवति। इत्थं विराट्सम्पत्त्या ज्योतिष्टोमत्वं प्राप्तो योऽग्निष्टोमः षष्ठाद्यध्यायैर्विस्तरेण विहितः स इह द्वादशाहे प्रकृतितयाऽस्माभिरीरितः ॥ ३ ॥

अथ द्वादशाहमध्ये यो दशरात्रः तत्साधनभूतानां त्रिवृदादिस्तोमानां गायत्र्यादिछन्दसाञ्च सृष्टिमाह—

**अनुष्टुप् च वै सप्तदशश्च समभवतां साऽनुष्टुप् चतुरुत्तराणि छन्दांस्यसृजत षडुत्तरान् स्तोमान् सप्तदशस्तावेतान्मध्यतः प्राजनयताम् ॥ ४ ॥**

गायत्र्यादीनां मध्ये येयमनुष्टुप् सा (१)'वाग्वा अनुष्टुबि'ति श्रुतेः वाग्रूपत्वात् उत्पत्तिं नोपेक्षते सप्तदशस्य स्तोमस्य प्रजापतिः '(२)प्रजा-

१. तै. सं. ५. १. ३. २. तै. ब्रा. १. ५. १०. ६. ता. ब्रा. २. १०. ५.

पतिर्वै सप्तदश' इति श्रुतेः। अतस्तस्याऽभ्युत्पत्त्यपेक्षा नाऽस्ति । वायूपा अनुष्टुप् च प्रजापत्यात्मकः सप्तदशश्च स्त्रीपुंसौ समभवताम्। मिथुनीभूतयोस्तयोर्मध्ये साऽनुष्टुप् समानाकृतीनि चतुरुत्तराणि उत्तरोत्तरं चतुःसंख्यातिरिक्तानि छन्दांसि गायत्र्यादीन्यसृजत सृष्टवती । सप्तदशस्तोमस्तु स्वसमानजातीयान् षडुत्तरान् उत्तरोत्तरं षट्संख्ययाऽधिकान् स्तोमान् त्रिवृदादीनसृजत । छन्दसां मध्ये गायत्री चतुर्विंशत्यक्षरा । ततश्चतुराधिक्येनोष्णिगष्टाचत्वारिंशदक्षरा भवति। पुनश्चतुराधिक्ये सति द्वात्रिंशदक्षराऽनुष्टुप् सम्पद्यते । ततोऽक्षरचतुष्टयेन षट्त्रिंशदक्षरा बृहतीत्यादि चतुरुत्तरत्वं छन्दसां द्रष्टव्यम् । स्तोमेष्वपि त्रिवृत्स्तोमो नवस्तोत्रीयात्मकः । ततः षड्भिः स्तोत्रीयाभिराधिक्ये पञ्चदशस्तोमो निष्पद्यते । पुनः षडाधिक्ये एकविंशस्तोम इत्यादि षडुत्तरत्वं स्तोमानामप्यूहनीयम् । तावनुष्टुप्सप्तदशावेतान् पूर्वोक्तान् विराजं मध्यतः उष्णिगनुष्टुभोर्मध्ये प्राजनयतां उत्पादितवन्तौ । त्रिंशदक्षरा हि विराट् द्वाभ्यामक्षराभ्यामधिका उष्णिगेव विराट् भवति । तथा चोक्तं–द्वाभ्यां विराट् स्वराजाविति ॥ ४ ॥

अथ सृष्टानां स्तोमानां मध्ये स्तोमद्वयस्याहर्विशेषसम्बन्धं प्रदर्शयन् तयोरह्नोरहरन्तरात् पूर्वप्रयोज्यत्वमाह—

**त्रिवृच्च त्रिणवश्च राथन्तरौ तावजश्चाऽश्वश्चान्वसृज्येतां तस्मात्तौ राथन्तरं प्राचीनं प्रधूनुतः ॥ ५ ॥**

त्रिवृच्च त्रिणवश्चेत्येतौ द्वौ स्तोमौ राथन्तरौ राथन्तरेऽहनि प्रयोज्यौ । पृष्ठ्यषडहे प्रथमतृतीयपञ्चमानि त्रीण्यहानि राथन्तराणि। अन्यानि त्रीणि बार्हतानि । तदुक्तं सूत्रकृताऽश्वलायनेन (१)'अभिप्लवपृष्ठ्याहानि। रथन्तरपृष्ठ्यान्ययुजानिबृहत्पृष्ठानीतराणी'ति। अतः एतौ स्तोमौ तृतीयस्याऽह्नः सप्तदशस्याऽवरुद्धत्वात् प्रथमपञ्चमयोरह्नोः प्रयोज्यत्वाद्राथन्तरौ तौ स्तोमावनु पश्चात् तयोः सृष्ट्यनन्तरं अजश्चाश्वश्चेत्येतौ पशू असृज्येतां सृष्टावभूताम् । तस्मात्पश्चात् सृष्टत्वात् तावजाश्वौ राथन्तरमहः प्राचीनं प्राक्तनं बार्हता द्वितीयादेरह्नः पूर्वं प्रयोज्यं प्रधूनुतः प्रक्षिपतः स्थापयत इत्यर्थः ॥ ५ ॥

अथाऽन्ययोः स्तोमयोरहर्विशेषसम्बन्धं दर्शयन् तस्याऽहर्विशेषस्य पश्चाद्भाविनोऽपि दीप्तिर्भवतीत्याह—

**पञ्चदशश्चैकविंशश्च बार्हतौ तौ गौश्चाऽविश्चान्वसृ-**

---

१. आश्व. श्रौ. उ. १. ५. १–३.

उपेतां तस्मात्तौ बार्हतं प्राचीनं भास्कुरुतः ॥ ६ ॥

पञ्चदशश्चैकविंशश्चेति द्वौ स्तोमौ बार्हतौ बार्हतेऽहनि प्रयोज्यौ तावनु पश्चात् गौश्चाऽविश्चेत्येतौ पशू असृज्येतां सृष्टावभूताम् । तस्मा द्बार्हतयोः पञ्चदशैकविंशयोरनन्तरं सृष्टत्वात् तौ पशू बार्हतं द्वितीयच- तुर्थादिकमहः प्राचीनं प्राक्तनं, अञ्चुगतिपूजनयोः, यथा पूजितं भवति तथा भास्कुरुतः भासा दीप्त्या युक्तं कुरुतः ॥ ६ ॥

एवं वाग्रूपानुष्टुभः सकाशात् प्रजापतेः आत्मनः सप्तदशाद्योक्तां सृष्टिं जानतः फलमाह—

एवं वै विद्वांसमाहुरपि ग्राम्याणां पशूनां वाच आजानाति ॥ ७ ॥

एवमुक्तां सृष्टिं विद्वांसं जानन्तं पुरुषं आहुर्ब्रह्मवादिनः, किमिति ग्राम्याणा ग्रामे भवानां गवादीनां पशूनामपि च वाचः अव्यक्तानि वा- क्यानि आजानाति अभिजानातीति । एवं विद्वान् पुरुषः मनुष्यवा क्यस्येव पशूनां वाक्यस्याऽपि आकारणादिकमर्थं जानातीत्यर्थः ॥७॥

इति ताण्ड्यमहाब्राह्मणे दशमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

## अथ तृतीयः खण्डः ॥

अथ द्वादशाहसमृद्धिफलकं विधित्सुराह—

प्रजापतिरकामयत बहु स्यां प्रजायेयेति स आत्म- न्नृतव्यमपश्यत्तत ऋत्विजोऽसृजत यदृतव्यादसृजत तदृ- त्विजामृत्विक्त्वं तैरेतं द्वादशाहमुपासीदत्सोऽराध्नोत् ॥

अस्य जगतः सृष्टेः प्रागवस्थायां प्रजापतिः सर्वस्य स्रष्टा अकामयत ऐच्छत् । किमिति ? बहु स्यां नानाविधकार्य्यात्मना अहं बहुर्भवेयम्, तदर्थं प्रजायेय प्रजारूपेणोत्पद्येयेति । एवं कामयमानः स प्रजापतिः आत्मन् आत्मनि स्वस्मिन् ऋतव्यं ऋतौ ऋतुकाले भवं गर्भस्य कारणं बीजमपश्यत् दृष्टवान् । ततस्तस्मात् आत्मन ऋतव्यात् प्रजापतिर्ऋत्वि- जोऽसृजत यद्यस्मात् ऋतव्यात् सृष्टवान् तस्मात् ऋत्विजां याजकानां ऋत्विक्त्वं ऋत्विगिति नाम सम्पन्नम् । एवमृत्विजः सृष्ट्वा तैः सृष्टैः एतं द्वादशाहं, अत्राहःशब्देन सवनत्रयात्मकः सोमयागः उक्तः, तमेतं द्वा- दशाहसंज्ञं सोमयागं उपासीदत् उपागच्छत् अन्वतिष्ठदित्यर्थः । तदनु-

ष्ठानेन स प्रजापतिरराध्नोत् प्रजादिभिः समृद्धोऽभवत् । राधसाधसं सिद्धाविति धातुः ॥ १ ॥

एवं द्वादशाहः समृद्धिहेतुरित्युक्तम् । अथ तस्मिन् द्वादशाहे या द्वादश दीक्षा साऽपि समृद्धिहेतुः । किमु वक्तव्यं द्वादशाहस्य समृद्धि हेतुत्व इत्यभिप्रायेणाऽऽह—

**पिता नोऽरात्सीदिति मासा उपासीदꣳस्ते दीक्षयैवाऽराध्नुवन्नुपसत्सु त्रयोदशमदीक्षयन् सोऽनुव्यमभवत् तस्मादुपसत्सु दिदीक्षाणोऽनुव्यं भवत्येव च हि त्रयोदशं मासं चक्षते नैव च ॥ २ ॥**

संवत्सरात्मकः प्रजापतिः नोऽस्माकं पिता अरात्सीत् अनेन द्वादशाहेन समृद्धोऽभूदिति बुध्वा मासाश्चैत्राद्या मासदेवता अपि एनं द्वादशाहमुपासीदन् अनुष्ठानमुपागच्छन् ते दीक्षयैव द्वादशदिवसनिष्पाद्येन दीक्षासंस्कारेणैव अराध्नुवन् समृद्धा अभवन् । द्वादशभिर्दीक्षादिवसैरेव समृद्धास्ते मासा उपसत्सु, द्वादशाहस्य द्वादश दीक्षाः, द्वादशोपसदो द्वादश प्रसुत, इति स्थितिः । येषु दिवसेषु सायंप्रातःकालयोः प्रवर्ग्योपसदोरनुष्ठानं ते दिवसा उपसद इत्युच्यन्ते । तेषूपसद्दिवसेषु त्रयोदशसंख्यापूरकं संसर्पाहस्पत्याख्यं मासं अदीक्षयन् । समृद्धा मासाः तमपि दीक्षया समस्कुर्वन् । स त्रयोदशो मासः अनुव्यं अनुपूर्वात् वेतेर्गतिकर्म्मणः सम्पदादिलक्षणो भावे क्विप् । ततो द्वितीयैकवचने(१)एरनेकाच' इति यण् । अनुव्यमनुगमनं प्रति अभवत् अजायत द्वादशानां मासानामनुगन्ता त्रयोदशो मासो जात इत्यर्थः । यस्मात्ते पूर्वदीक्षया समृद्धाः अतः पश्चाद्भाविनो मासस्य त्रयोदशस्य युक्तमनुगन्तृत्वम् । यस्मादेवं तस्मादुपसत्सु दिदीक्षाणो दीक्षां कृतवान् पुरुषोऽनुव्यं भवति अनुगमनं प्रति समर्थो भवति । सर्वेषां पूर्वदीक्षिणामनुयायी भवतीति । तस्मादुपसत्सु त्रयोदशेन न दीक्षितव्यम् । तथा चाध्वर्य्युसूत्रम्(२) एको द्वादशाहेन यजेत त्रयष्षड् द्वादश त्रयोदश वा । तेषामुपसत्सु त्रयोदशं दीक्षयन्ति । तस्मात् द्वादशाहे त्रयोदशेन न ब्रह्मणा भावितव्यमित्येक" इति । अत एव मासान्तरवत् प्राधान्याभावात् कदाचिदेव त्रयोदशं मासं नैव चक्षते क्वचिदेव संवत्सरेऽस्तीति कथयन्ति, न चैनं सर्वस्मिन् संवत्सरे । एवमुक्तेन प्रकारेण द्वादशाहेन

१. पा. सू. ६. ४. ८२, २. आप. श्रौ. २१. १. ११-१३

समृद्धिकामो यजेतेति विधिरुन्नेतव्यः ॥ २ ॥

अथ विहिते तस्मिन्नधिकारिविशेषानाह—

**एको दीक्षेतैको हि प्रजापतिरराध्नोद्द्वादश दीक्षेरन् द्वादश हि मासा अराध्नुवंश्चतुर्विंशतिर्दीक्षेरंश्चतुर्विंशतिर्ह्यर्द्धमासा अराध्नुवन् ॥ ३ ॥**

तस्मिन् द्वादशाहे एक एव दीक्षेत एकेनैव यजमानेन द्वादशाहोऽनुष्ठेयः । हि यस्मात् प्रजापतिः एक एव यजमानः सन् अराध्नोत्, तस्मादयमेकयजमानकर्तृको द्वादशाहः । द्वादश यजमानाः संहत्य द्वादशाहमनुष्ठाय समृद्धा अभूवन्निति हि पूर्वमुक्तम् । अतः संहतानामपि द्वादशानामद्याऽप्यनुष्ठानं गम्यते । अथ वा चतुर्विंशतिसंख्याका यजमानाः द्वादशाहाय दीक्षेरन् चतुर्विंशतिसंख्याका ह्यर्द्धमासाः सकृदनुष्ठानेन पूर्वमराध्नुवन्, एकैकस्मिन् मासे द्वौ द्वावर्द्धमासाविति मासानां समृद्धिरेव । तदवयवानामर्द्धमासानामपि सैव समृद्धिरित्यभिप्रायेणेयं स्तुतिः ॥ ३ ॥

इतोऽधिकस्य दीक्षणं प्रतिषेधति—

**यदि पञ्चविंशो दीक्षेतेमे पञ्चेमे पञ्चेमे पञ्चेमे पञ्चेमे चत्वारोऽसावेक इति निर्द्दिशेयुर्यस्मा अराद्धिकामाः स्युस्तमेवाऽराद्धिरन्वेति सर्व इतरे राध्नुवन्ति ॥ ४ ॥**

यदि चतुर्विंशतेरधिकः पञ्चविंशः पञ्चविंशतिसंख्यापूरकोऽन्यः पुरुषो दीक्षेत तदा पञ्चशः पञ्चशः विंशतिसंख्याकान् यजमानांश्चतुर्द्धा पृथक् कुर्यात । अवशिष्टानां पञ्चानां मध्ये इमे चत्वार इति चत्वारः पृथक् कर्त्तव्याः । अथ यस्मै यजमानाय अराद्धिकामाः असमृद्धिकामाः स्युः—असमृद्धिरस्मै भूयादिति कामयेरन्, तं असौ देवदत्त एकोऽस्मद्यो बहिर्भूत इति निर्द्दिशेयुः विभजेयुः । तमेव यजमानं अराद्धिरसमृद्धिरन्वेति अनुगच्छति । इतरे सर्वे यजमाना राध्नुवन्ति संसिध्यन्ति । तस्मात् पञ्चविंशो न दीक्षितव्य इत्यर्थः । यदि बहवो मिलित्वा द्वादशाहेन यजेरन्, तत्रैको गृहपतिः इतरे सहदीक्षणो यजमानाः । यजमानकर्म्मणां मध्ये यानि केवलं क्रत्वर्थानि यूपाञ्जनक्रतुयाज्यादीनि तानि गृहपतिरेव कुर्य्यात्, नेतरे । यानि पुरुषार्थानि क्रतुफलभोक्तृत्वयोग्यतासम्पादकानि च दीक्षासंस्कारादीनि तानि

सर्वे कुर्युः । तथा च भगवानापस्तम्बः(१)सर्वे याजमाने स्थानिनः । सर्वे याजमानं कुर्युः । गृहपतिरेव परार्थानि यथा यूपाञ्जनमृतुयाज्या-मिति । गृहपतिरेव सामिधेनीकल्पेनाऽवदानकल्पेनेति प्रकामेयुर्यानि चा-न्यान्येवंरूपाणि स्यु"रिति ॥ ४ ॥

एवं सति स्वस्य गृहपतित्वं सहदीक्षिणोऽन्यांश्च यजमानान् यः कामयेत तस्य तत्प्राप्त्युपायं दर्शयति—

**यो वै देवानां गृहपतिं वेदाऽश्नुते गार्हपतं प्र गार्ह-पतमाप्नोति ॥ ५ ॥**

यो वै देवानां गृहपतिं सहदीक्षिणश्च वेद जानाति स गार्हपतं गृहपतित्वं सह दीक्षिणश्चाऽश्नुते । एतस्यैव विवरणं गार्हपतमाप्नो-तीति ॥ ५ ॥

कोऽसौ देवानां गृहपतिः ? के वा सह दीक्षिणः ? इत्युभयं दर्शयति—

**संवत्सरो वै देवानां गृहपतिः स एव प्रजापति-स्तस्य मासा एव सह दीक्षिणः ॥ ६ ॥**

संवत्सरः खलु देवानां मध्ये गृहपतिः कालात्मकस्य तस्य कथं गृहपतित्वमित्याशङ्क्योच्यते—स एव संवत्सरः प्रजापतिः प्रजापतिरेव संवत्सरात्मना वर्त्तमानो गृहपतिर्जात इत्यर्थः । तस्य संवत्सरात्मनः प्रजापतेः मासा एव सह दीक्षिणः सह दीक्षमाणा अन्ये यजमाना अभवन् ॥ ६ ॥

एतदेवोपसंहरति—

**विन्दते सह दीक्षिणोऽश्नुते गार्हपतं प्र गार्हपत-माप्नोति य एवं वेद ॥ ७ ॥**

एवमुक्तमर्थं यो वेद जानाति स वेदिता सहदीक्षिणः सह दीक्ष-माणानन्यान् यजमानान् विन्दते लभते स्वयं च गार्हपतं गृहपतित्व-मश्नुते ॥ ७ ॥

अथ द्वादशाहं बृहत्यात्मना तुष्टुवानस्तस्य प्रथमं स्वराज्यप्राप्ति-हेतुतामाह—

**यो वै छन्दसां स्वराजं वेदाऽश्नुते स्वाराज्यं प्र स्वा-राज्यमाप्नोति बृहती वाव छन्दसां स्वराडश्नुते स्वा-राज्यं प्र स्वाराज्यमाप्नोति य एवं वेद ॥ ८ ॥**

---

१. आप. श्रौ. २१. १. १८, १९; २२. २. ३.

यो वै यः छन्दसां गायत्र्यादीनां मध्ये स्वराजं स्वयमेव राजमानां दीप्यमानां वेद स स्वाराज्यं स्वायत्तदीप्तिमत्तामश्नुते । तस्यैव विवरणम्–प्र स्वाराज्यमाप्नोतीति । का सौ छन्दसां स्वराडुच्यते ? बृहती खलु छन्दसां मध्ये स्वराट् स्वयमेव राजमाना यन्वित्यहरन्यानि छन्दांसि वर्षीयांसि कस्माद्बृहत्युच्यत इत्यादिना बृहत्याः सर्वलोकव्यापकत्वस्य चाऽन्येषां छन्दसां बृहत्यन्तर्भावस्य चोक्तत्वादिति । स्पष्टमन्यत् ॥८॥

अथ स्वाराज्यप्राप्तिहेतुभूतं बृहत्यात्मना द्वादशाहं प्रशंसति—

**तां वा एतामन्नाद्याय व्यावृज्याऽऽसते यदेतं द्वादशाहं द्वादश दीक्षा द्वादशोपसदो द्वादश प्रसुतः षट्त्रिंशदेता रात्रयो भवन्ति षट्त्रिंशदक्षरा बृहती ॥ ९ ॥**

तां पूर्वोक्तां स्वराड्रूपामेवेतां बृहतीमन्नाद्याय अन्नाद्यफलाय व्यावृज्य विभज्य आसते अनुतिष्ठन्ति यत् ये यजमाना एतं द्वादशाहमासते । कथं बृहत्या विभाग इति ? उच्यते–अथ द्वादशाहस्य द्वादश रात्रयो दीक्षाः दीक्षया पयोव्रतादिनियमात्मिकया युक्ता भवन्ति । ततो द्वादश रात्रयः उपसदः । ततो द्वादश प्रसुतः सुत्याः । एवं षट्त्रिंशत्सङ्ख्याका एता रात्रयो दिवसाः भवन्ति । बृहती च षट्त्रिंशदक्षरा । ततो बृहतीमेवैवं त्रेधा विभज्य द्वादशाहं कुर्वाणाः अन्नाद्यायाऽनुतिष्ठन्तीत्यन्वयः । अतः स्वराडात्मिकया बृहत्या संस्तुतत्वात् द्वादशाहोऽपि स्वराज्यहेतुरित्युक्तो भवति ॥ ९ ॥

अथोक्तं दीक्षादिकमवयुत्य प्रशंसति—

**जायते वाव दीक्षया पुनीत उपसद्भिर्देवलोकमेव सुत्ययाऽप्येति ॥ १० ॥**

"ब्राह्मणो वा एष जायते यो दीक्षत" इति श्रुत्यन्तरात् द्वादशदिवसानुष्ठितया दीक्षया पुनर्यजमानो जायते । ततः कृताभिरुपसद्भिः पुनीते शुध्यति । ततः शुद्धः सन् सुत्यया द्वादशदिवसकृतया तत्साध्येन सोमयागेन देवलोकं देवानां लोकं स्वर्गादिकं अप्येत्यपि गच्छति । अनेन देवलोकप्राप्तिरपि द्वादशाहस्य फलमित्युक्तं भवति ॥१०॥

अथाऽनेन संवत्सरसम्बन्धीन्द्रियवीर्यप्राप्तिरपि भवतीत्याह—

**एतावद्वाव संवत्सर इन्द्रियं वीर्यं यदेता रात्रयो द्वादश पौर्णमास्यो द्वादशैकाष्टका द्वादशाऽमावास्या यावदेव संवत्सर इन्द्रियं वीर्यं तदेतेनाऽऽप्त्वाऽवरुन्धे द्वादशाहेन ॥ ११ ॥**

यदेता वक्ष्यमाणाः या रात्रयः एतावदेव संवत्सरे वर्त्तमानं बलं वीर्यं बलसाध्यं वीरकर्म च संवत्सरस्य सारभूता रात्रयः इत्यर्थः। काः पुनरेताः ? (१)द्वादश पौर्णमास्यः द्वादशमासात्मके संवत्सरे द्वादशसंख्याकाः पौर्णमास्यो भवन्ति। एकाष्टकाश्च द्वादश भवन्ति। यद्यपि माघकृष्णाष्टम्येवैका। तथा चाऽध्वर्युसूत्रम्-(२)या माध्याः पूर्णमास्याः उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया सम्पद्यते तामेकाष्टकेत्याचक्षत" इति, तथापि तत्सामान्यात् चैत्रादिमासगताः सर्वा एव कृष्णाष्टम्योऽत्रैकाष्टकाशब्देनोच्यन्ते। तथाऽमावास्याश्च द्वादश भवन्ति। एवं संवत्सरे यावदेव षट्त्रिंशद्दिवसात्मकमिन्द्रियं तत्सर्वमेतेन द्वादशाहेन षट्त्रिंशद्दिवससाध्येन आप्त्वा प्राप्याऽवरुन्धे स्वात्मनि निदधाति॥ ११॥

अथ द्वादशाहस्य विराट्सम्पत्तिमाह—

**त्रिंशदक्षरा वा एषा विराट् षडृतव ऋतुष्वेव विराजा प्रतितिष्ठत्यृतुभिर्विराजि॥ १२॥**

द्वादशाहस्य हि दीक्षोपसत्सुत्या मिलित्वा षट्त्रिंशदहानि भवन्ति। तत्र यानि त्रिंशत् सा विराट्(२) "त्रिंशदक्षरा विराट्" इति श्रुतेः। यान्यवशिष्टानि षट् ते षडृतवः। स्पष्टमन्यत्॥ १२॥

पुनः षट्त्रिंशत्सङ्ख्यामवयुत्य स्तौति—

**द्वात्रिंशदक्षरा वा एषाऽनुष्टुब्वागनुष्टुप् चतुष्पादः पशवो वाचा पशून्दाधार तस्माद्वाचा सिद्धा वाचाहूता आयन्ति तस्मादु नाम जानते॥ १३॥**

अथ द्वादशाहस्य यान्यादितो द्वात्रिंशदहानि एषा द्वात्रिंशदक्षरानुष्टुबेव। यान्यवशिष्टानि तानि चत्वारि तानि चतुष्पादः पशवः। अनुष्टुप् च वाग्रूपा। तया पूर्वप्रयुक्तया वाचा चतुष्पादः पशून् दाधाराऽऽत्मनि धारयति। यस्मादेवं तस्मादेव कारणात् पशवो वाचा सिद्धाः वाग्व्यवहारे लब्धाः वाचा नामधेयात्मकेन शब्देन आहूताः आकारिताश्च सन्तः पशवः आयन्ति आगच्छन्ति। यस्मादेव पशून् वाचा दाधार तस्मादेव कारणात्ते पशवः स्वं स्वं नाम जानते अवगच्छन्ति॥ १३॥

इति ताण्ड्यमहाब्राह्मणे वेदार्थप्रकाशसहिते दशमाध्यायस्यतृतीयः खण्ड

---

१. आप. गृ. २१. १०  २. तै. सं. ७. ४. ३.

# अथ चतुर्थः खण्डः ॥

एवं द्वादशाहं विधाय समुदायेन बहुशः स्तुतिः कृता। अथ तस्य आद्यन्तयोर्यावतिरात्रौ तौ स्तुतिमुखेन विधत्ते—

**भूतं पूर्वोऽतिरात्रो भविष्यदुत्तरः पृथिवी पूर्वोऽतिरात्रो द्यौरुत्तरोऽग्निः पूर्वोऽतिरात्र आदित्य उत्तरः प्राणः पूर्वोऽतिरात्र उदान उत्तरः ॥ १ ॥**

भूतं इतः पूर्वं सृष्टेरूर्ध्वं उत्पन्नं यावत्पदार्थजातमस्ति स एव पूर्वः द्वादशाहस्य प्रथमोऽतिरात्रः। भविष्यदितः परमुत्पत्स्यमानं यावदस्ति विकारजातं स एवोत्तरः द्वादशाहस्याऽन्त्योऽतिरात्रः। तथा पृथिव्यग्निप्राणानां प्राथम्यात् प्रथमोऽतिरात्रस्तत्स्थानीयः। द्यौरादित्य उदान इत्येतेषां स्वपूर्वापेक्षयोत्तरत्वात् चरमातिरात्रस्य तदात्मकत्वम्। अत एवंविधावतिरात्रौ आद्यन्तयोः कर्त्तव्याविति विधिरुन्नीतो भवति ॥ १ ॥

अथ प्रथमादतिरात्रादूर्ध्वमुत्तमान्त्यपूर्वे अग्निष्टोमसंस्थे द्वे अहनी कार्य्ये इति विधित्सुराह—

**चक्षुषी अतिरात्रौ कनीनिके अग्निष्टोमौ यस्मादन्तरा अग्निष्टोमावतिरात्राभ्यां तस्मादन्तरे सत्यौ कनीनिके भुङ्क्तः ॥ २॥**

यावेतौ पूर्वोक्तावतिरात्रौ तौ चक्षुषी यज्ञस्य चक्षुषो गोलकस्थानीयौ। उभयोः समीपेऽनुष्ठीयमानौ यावग्निष्टोमौ ते कनीनिके नेत्रमध्ये वर्त्तमानकृष्णमण्डलस्थानीयौ। एवं सति यस्मादतिरात्राभ्यां अन्तरा मध्ये अग्निष्टोमावनुष्ठेयौ तस्मादन्तरे चक्षुर्मण्डलस्य अन्तरा मध्ये सत्यौ वर्त्तमाने कनीनिके भुङ्क्तः पुरुषं पालयतः। भुजपालनाभ्यवहारयोः। (१) 'भुजोऽनवन' इति पर्य्युदासादात्मनेपदाभावः ॥ २ ॥

अथाऽनयोरतिरात्रयोश्शयनं न कार्य्यमिति विधत्ते—

**संवत्सरस्य वा एतौ दंष्ट्रौ यदतिरात्रौ तयोर्न स्वप्तव्यं संवत्सरस्य दंष्ट्रयोरात्मानं नेदपिदधानीति ॥ ३ ॥**

यत् यौ पूर्वोक्तावतिरात्रौ एतौ संवत्सरस्य दंष्ट्रौ(२) "सवंत्सर-

---

१. पा. सू. १.३.६६.  २. तै. ब्रा. १.१.९.

प्रतिमा वै द्वादश रात्रयः" इति श्रुतेः संवत्सरस्य द्वादशाहस्य दंष्ट्रस्थानीयौ। तयोर्न स्वप्तव्यं स्वापो न कार्य्यः। संवत्सरस्य दंष्ट्रयोः स्वापान्नैवाऽऽत्मानमपिदधानि अपिदध्यां प्रक्षिपेयमिति बुद्ध्या ॥ ३ ॥

अथ पक्षान्तरमाह—

**तदाहुः कोऽस्वप्तुमर्हति यद्वाव प्राणो जागर तदेव जागरितमिति ॥ ४ ॥**

तत्तत्र विषये अभिज्ञा ब्रह्मवादिन आहुः लोके—को नाम पुरुषः अस्वप्तुं स्वापमकर्त्तुमर्हति ? स्वापस्याऽवश्यम्भावित्वात्। तर्हि कथं पूर्वोक्तदोषपरिहारः ? उच्यते—यद्वाव यदेव प्राणो देहे वर्त्तमानः प्राणवायुर्जागर्त्ति कदाचिदपि न स्वपिति। स हि जाग्रत्स्वप्नसुषुप्तिषु तिसृष्वप्यवस्थासु सर्वदा प्रबुद्ध एव वर्त्तते। तदेव प्राणकर्त्तृकं जागरणमस्य यजमनस्य जागरितं जागरणमिति उक्तदोषो न भविष्यति ४

अथ पूर्वोक्तानां चतुर्णामह्नामन्तराले उक्थसंस्थान्यष्टावहानि कर्त्तव्यानीति विधित्सुराह—

**गायत्रीं वा एतां ज्योतिःपक्षामासते यदेतं द्वादशाहमष्टौ मध्य उक्था अग्निष्टोमावभितो भासा स्वर्गं लोकमेत्याऽऽजरसं ब्रह्माद्यमन्नमत्ति दीप्यमानः ॥ ५ ॥**

यत् य एतं द्वादशाहं आसते अनुतिष्ठन्ति ते एतां वक्ष्यमाणां ज्योतिःपक्षां गायत्रीमेवाऽऽसते। कैषा गायत्री ? किं वा तस्याः पक्षभूतं ज्योतिः ? तदुभयमुच्यते ये द्वादशाहस्य मध्ये अष्टावुक्थाः उक्थसंस्थाः सैषा गायत्री। अष्टाक्षरा च गायत्रीत्युभयोरष्टसंख्यासाम्यात्। अभितः पार्श्वयोरुक्थानां पुरस्तात् परस्ताच्च यावग्निष्टोमौ क्रियमाणौ तावेवास्याःगायत्र्याः पक्षौ(१) अग्निर्देवतानां ज्योतिर्विराट्छन्दसां ज्योतिरिति श्रुतेः। तस्मिन् ज्योतिष्टोमस्य समाप्तत्वादग्निष्टोमोऽपि ज्योतिः। तस्मादेषा गायत्री ज्योतिःपक्षा। एवं ज्ञात्वाऽनुतिष्ठन् देहावसाने भासा दीप्त्या सह स्वर्गं लोकमेति गच्छति। अस्मिंश्च लोके आजरसं यावज्जीर्य्यते तावत्पर्य्यन्तं ब्रह्माद्यं ब्राह्मणजात्या अदनीयं प्रशस्तमन्नं अत्ति भुङ्क्ते। दीप्यमानः मध्ये मध्ये ज्वरादिभिः तप्यमानः सन्। एतदुक्तं भवति—द्वादशाहस्य प्रथममतिरात्रे तत एकमहरग्निष्टोमः ततोऽग्निष्टोमातिरात्राविति क्रमेण कर्त्तव्यानीति ॥ ५ ॥

---

१. तै. सं. ७. १.१.

अथैतेष्वहःसु आद्यन्तावतिरात्रौ मुक्त्वा यो मध्ये दशरात्रः क्रमेण कर्त्तव्यः तत्राऽऽदितः त्रिष्वहस्सु पृष्ठस्तोत्रे विकल्पेन रथन्तरं साम कार्य्यमिति विधत्ते—

**त्रिष्पुरस्ताद्रथन्तरमुपयन्ति त्र्यावृद्धै वाक् सर्वामेव वाचमवरुध्य सर्वमन्नाद्यं द्वादशाहं तन्वते ॥ ६ ॥**

पुरस्तात् पूर्वस्मिन् भागे दशाहस्याऽऽदितः त्रिष्वहःसु रथन्तरं त्रिरुपयन्ति त्रिवारं प्रयुञ्जीरन्। त्र्यावृद्धै त्रिधा आवर्त्तमाना खलु वाक् सुप्तिङ्कृदन्तरूपेण यद्वा वेदत्रयरूपेण त्रिधा वर्त्तमाना एव रूपावर्त्तनेन रथन्तरस्य त्रिरूपामनेन सर्वां कृत्स्नामेव वाचं सर्वमन्नाद्यञ्चाऽवरुध्य द्वादशाहं तन्वते विस्तारयन्ति ॥ ६ ॥

अस्मिन् पक्षे रथन्तरस्य नैरन्तर्य्येण प्रयोगाज्जामितादोषमाशङ्क्य परिहरति—

**जामि वा एतद्यज्ञे क्रियत इत्याहुर्यत् त्रिष्पुरस्ताद्रथन्तरमुमयन्तीति सौभरमुकूथानां ब्रह्मसाम भवति तेनैव तदजामि ॥ ७ ॥**

पुरस्ताद्रथन्तरं पूर्वस्मिस्त्र्यहे रथन्तरं साम नैरन्तर्य्येणोपयन्तीति यत् एतद्यज्ञे जामि नीरसमेव क्रियते प्रयुक्तस्यैव पुनः पुनः प्रयोगादिति ब्रह्मवादिन आहुः। तत्रायं जामितादोषपरिहारः उकूथानां तृतीयसवनगतानां स्तोत्राणां मध्य ब्रह्मसाम ब्रह्मणःस्तोत्रनिर्वर्तकं साम तत् सौभरं कार्य्यम्। तेन प्रयुक्तेन सौभरेणैव एतदहरजामित्वदोषरहितं सारवदेव भवति ॥ ७ ॥

ननु दशरात्रस्य प्रथमेऽहन्यग्निष्टोमसंस्थे तृतीयसवने उक्थानि न सन्ति। तत्र कथमजामित्वमित्यत आह—

**प्रत्नवत्यः प्रायणीयस्याऽह्नः प्रतिपदो भवन्ति तेनो एव तदजामि ॥ ८ ॥**

प्रतिपद्यन्ते प्रारभन्तेऽनेनाह्नेति प्रायणीयं पृष्ठ्यमहः। तस्य प्रायणीयस्याऽह्नः प्रत्नवत्यः (१)'अस्य प्रत्नामनुद्युत'मित्याद्या ऋचः प्रतिपदो बहिष्पवमानस्य प्रारम्भार्था भवति। तेनो तेन उ तेनैव प्रत्नवतीनां प्रतिपत्वेनैव तत् प्रायणीयमहरजामि तत्रत्यानां प्रतिपदां प्रत्नवत्त्वलक्षणेन विशेषणेन योगात् अहरन्तरस्य तद्योगाभावाच्च अस्याप्यह्नो

१. सा. सं. १२. १६. १.

जामित्वदोषो न भवतीत्यर्थः ॥ ८ ॥

अथ दशरात्रस्योपरिभागे अष्टमनवमदशमेष्वहःस्वपि रथन्तरस्य त्रिरुपायनं विधत्ते—

**त्रिर्वैवोपरिष्टाद्रथन्तरमुपयन्ति त्र्यावृद्धै वाक् सर्वामेव वाचमवरुध्य सर्वमन्नाद्यं द्वादशाहादुत्तिष्ठन्ति ॥९॥**

उपरिष्टाद्दशरात्रस्योपरितनेष्वपि त्रिष्वप्यहःसु एवमेव रथन्तरं त्रिरुपयन्ति त्रिवारमुपगच्छेयुः । अन्यत् पूर्ववद्व्याख्येयम् । सर्वां वाचं सर्वमन्नाद्यं प्राप्य द्वादशाहादनुष्ठिताद्यागादुत्तिष्ठन्ति उत्क्रामन्ति तं परिसमापयन्तीत्यर्थः । अत्रापि पूर्ववत् । जामित्वशङ्कापरिहारश्च पूर्ववद्योजनीयः । दशमेऽहन्यपि प्रत्नवत्यः प्रतिपद इति व्याख्यास्यति । अतः पूर्ववदजामित्वम् ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे वेदार्थप्रकाशे दशमाध्यायस्य चतुर्थः खण्डः ॥

---

## अथ पञ्चमः खण्डः ॥

अथाऽस्मिन् द्वादशाहे आद्यन्तावतिरात्रौ दशममहश्च । अन्तर्मध्ये यो नवरात्रः तं स्तोतुं त्रेधा विभजति—

**त्रयो वा एते त्रिरात्रा यदेष द्वादशाहो गायत्रमुखः प्रथमो गायत्रमध्यो द्वितीयो गायत्रोत्तमस्तृतीयः ॥ १ ॥**

अत्र द्वादशाहशब्दः तदवयवे नवरात्रे वर्त्तते । यत् एष द्वादशाहो द्वादशाहावयवो नवरात्रः एते त्रयस्त्रिरात्राः । तत्र त्रिरात्रो गायत्रमुखः गायत्रीछन्दस्कमहर्मुखे प्रथमतो यस्य स तथोक्तः । द्वितीयस्त्रिरात्रो गायत्रमध्यः तत्र मध्यमस्याह्नो गायत्रत्वात् । तृतीयस्तु गायत्रोत्तमः तृतीयमहर्हि तत्र गायत्रम् । अत्र प्रथमं पदशास्त्रं गायत्रीछन्दकत्वञ्चाभिप्रेत्य गायत्रमुख इत्यादि व्यपदेशः । एतत्(१) छन्दांसि वा अन्योन्यस्य लोकमभ्यध्याय"न्निति छन्दसां व्यूहनविधानसमये विस्पष्टं दर्शयिष्यामः ॥१॥

अस्त्वेवम् , ततः किं जातम् ? अत आह—

**यस्माद्गायत्रमुखः प्रथमः तस्मादूर्द्धोऽग्निर्दीदाय यस्माद्गायत्रमध्यो द्वितीयस्तस्मात्तिर्यङ् वायुः पवते यस्माद्गायत्रोत्तमस्तृतीयस्तस्मादवाङादित्यस्तपति ॥ २ ॥**

---

१. ता. ब्रा. १०.५.११.

यस्मात्प्रथमस्त्रिरात्रो गायत्रमुखो भवति तस्मात्तेजोरूपाया गायत्र्याः प्रथमतः प्रयुक्तत्वात् तत्प्रदेशादारभ्य ऊर्ध्वं ऊर्ध्वाभिमुखः सन् अग्निर्दीदाय ज्वलति । यस्मात् द्वितीयस्त्रिरात्रो गायत्रमध्यः तस्माद्गायत्र्या मध्यतः प्रयोगात् द्यावापृथिव्योर्मध्ये तिर्यङ्ङिति तिरश्चीनो वायुः पवते । यस्मात् तृतीयस्त्रिरात्रोत्तमः तस्माद्गायत्र्या उपरिस्थितत्वादादित्यो द्युलोकस्योपर्य्यवस्थाय अवाक् अवाङ्मुखस्तपति प्रकाशयति ॥ २ ॥

अथ प्रकारान्तरेण एतेषां त्रिरात्राणां गायत्रीसम्बन्धं स्तौति—

**तेजसा वै गायत्री प्रथमं त्रिरात्रं दाधार पदैर्द्वितीयमक्षरैस्तृतीयम् ॥ ३ ॥**

येषा गायत्री चतुर्विंशत्यक्षरात्मिका आग्निना तेजसैव प्रथमं त्रिरात्रं दाधार धारयति । पदैः पादैर्द्वितीयं त्रिरात्रम् । अक्षरैरात्मीयैश्चतुर्विंशत्यक्षरैस्तृतीयं त्रिरात्रं धारयति ॥ ३ ॥

किञ्च तस्यास्तेजः ? के पादाः ? कियन्ति वा तदीयान्यक्षराणि ? कथं वा तैस्त्रयस्त्रिरात्रा धृता ? इति सर्वमेतद्दर्शयति—

**त्रिवृद्वै गायत्र्यास्तेजः त्रिवृत्प्रायणीयमहस्तेन प्रथमस्त्रिरात्रो धृतस्त्रिपदा गायत्री त्रिरात्रो मध्ये तेन द्वितीयस्त्रिरात्रो धृतश्चतुर्विंशत्यक्षरा गायत्री चतुर्विंशꣳश उत्तममहस्तेन तृतीयस्त्रिरात्रो धृतः ॥ ४ ॥**

त्रिवृत्स्तोमो हि गायत्र्यास्तेजः ; प्रजापतिमुखाद्योः सहोत्पत्तेः अग्निना सहोत्पन्नत्वाच्च त्रिवृतस्तेजोरूपत्वम् । दशरात्रस्य प्रायणीयं प्रथममहस्त्रिवृत् त्रिवृत्स्तोमकम् त्रिवृदेव स्तोमो भवतीति विधास्यमानत्वात् । तेन त्रिवृदात्मकेन गायत्र्यास्तेजसा प्रथमस्त्रिरात्रो धृतः त्रिवृतस्तृचः त्र्यात्मकत्वेन त्रिसंख्यायुक्तत्वात् अष्टाक्षरास्त्रयः पादा अस्यामिति त्रिपदा गायत्री (१)'संख्यासुपूर्वस्ये'ति पादशब्दस्यान्त्यलोपः । (२)"पादोऽन्यतरस्या"मिति ङीपि प्राप्ते(३) "टाबृचीति" टाप् । (४)"पादःपत्" इति पद्भावः, । मध्ये प्रथमतृतीययोस्त्रिरात्रयोरन्तराले त्रिरात्रस्तिस्रो रात्रयः । तेनोभयोस्त्रिरात्रयोगेन गायत्र्याः पादैर्द्वितीयस्त्रिरात्रो धृत इत्युच्यते चतुर्विंशत्यक्षरात्मिकायाः ।

---

१. पा. सू. ५. ४. १४०. २. पा. सू. ४. १. ८.

३. पा. सू. ४. १. ९. ४. पा. सू. ६. ४. १३०.

एवं प्रथममध्यमोत्तमानां त्रिरात्रगतानामह्नां गायत्रत्वं(१) "गायत्रो वा ऐन्द्र वायवो गायत्रं प्रायणीयमह"रित्यादिना शाखान्तरे स्पष्टमाम्नातम्। यद्वा प्रथमे त्रिरात्रे त्रीण्यपि प्रातःसवनानि गायत्राणि। मध्ये तु माध्यन्दिन-सवनानि। उत्तमे त्रिरात्रे तु तृतीयसवनानि गायत्राणि एतदेका गायत्री। सप्तममहश्चतुर्विंशस्तोमकम्। अत एतद्द्वयं संख्याद्वारेण सम्बद्धम्। तेन सप्तमाह्नः सम्बन्धेन तृतीयस्त्रिरात्रोऽक्षरैर्धृत इत्युच्यते ॥ ४ ॥

अथोक्तप्रकारेण गायत्र्यास्त्रिरात्रयव्याप्तिं स्तौति—

**तेजसा वा एते प्रयन्ति तेजो मध्ये दधति तेजो-ऽभ्युद्यन्ति, ज्योतिषा वा एते प्रयन्ति ज्योतिर्मध्ये दधति ज्योतिरभ्युद्यन्ति, चक्षुषा वा एते प्रयन्ति चक्षु-र्मध्ये दधति चक्षुरभ्युद्यन्ति, प्राणेन वा एते प्रयन्ति प्राणं मध्ये दधति प्राणमभ्युद्यन्ति, ये गायत्र्या प्रयन्ति गायत्रीं मध्ये दधति गायत्रीमभ्युद्यन्ति ॥ ५ ॥**

ये यजमाना गायत्र्या गायत्रीछन्दसा प्रयन्ति प्रगच्छन्ति प्रथमं त्रिरात्रमारभन्ते एते तेजसा वै तमसो निवर्त्तकमालोकादिकं तेजस्ते-नैव प्रयन्ति प्रारभन्ते। ये गायत्रीं मध्ये दधति द्वितीयं त्रिरात्रं माध्य-न्दिनसवनेषु धारयन्ति एते तेज एव मध्ये दधति स्थापयन्ति। ये गायत्रीमभिलक्ष्योद्यन्ति उद्गच्छन्ति गायत्रैस्तृतीयसवनैस्तृतीयं त्रिरात्रं समापयन्ति। एते पूर्वोक्तं तेजोऽभिलक्ष्योद्यन्ति उदयनं समापनं कुर्व-न्ति। एवमुत्तरेषु त्रिषु पर्य्यायेषु योज्यम्। तेजसा तेजःशब्दाभिधेयेन अग्न्यादिना अन्यं प्रकाशं ज्योतिः चष्टेः पश्यतिकर्मणः चक्षुर्ज्योति-रन्यं ज्ञानं चक्षुः प्राणापानादिपञ्चवृत्त्यात्मकः प्राणः। गायत्र्याश्च तेज-आदिसम्बन्धः 'तेजो वै गायत्री' 'ज्योतिर्वै गायत्री'त्यादिवाक्यशेषैरधि-गन्तव्यः ॥ ५ ॥

अथैनं द्वादशाहं वस्त्रात्मकत्वेन रूपयन् विस्तार्य्यमाणस्य तस्य प्रान्तदार्ढ्यहेतुशङ्कुसगन्तयैतां गागत्रीं स्तौति–

**तन्त्रं वा एतद्वितायत यदेष द्वादशाहस्तस्यैतै मयू-खा यद्गायत्र्यसंव्याथाय ॥ ६ ॥**

तायते विस्तार्यत इति तन्त्रं वस्त्रम्। एतदेव वै एतद्वितायते विस्तीर्यते। (२)तनोतेर्यकी"ति अनुमासिकस्याकारः। यत् य एष द्वादशाहस्तस्य

१. तै. सं. ७. २. ८. २. पा. सू. ६. ४. ४४.

विस्तारितस्य असंव्याथाय संव्याथस्सञ्चलनं, व्यथ भयचलनयोरिति धातुः, चलनाभावाय दाढर्याय एते मयूखाः प्रान्तेषु निखातव्याः शङ्कवः। यत् यैषा गायत्री सर्वद्वादशाहं व्याप्नुवती गायत्री कृत्स्नमेव द्वादशाहं द्रढयतीत्यर्थः ॥ ६ ॥

अथोक्तिप्रत्युक्त्या सदृष्टान्तं द्वादशाहो गायत्र्यां प्रतिष्ठित इति प्रदर्शयति—

**गिरिक्षिदौच्चामन्यवेति होवाचाऽभिप्रतारी काक्षसेनिः कथं द्वादशाह इति यथाऽरान्नेमिः पर्य्येत्येवमेनं गायत्री पर्य्येत्यविस्रꣳसाय यथाऽरा नाभौ धृता एवमस्यां द्वादशाहो धृतः ॥ ७ ॥**

उच्चामन्युपुत्रो गिरिक्षिन्नामकः कश्चिहृषिः। हे औच्चामन्यव गिरिक्षित्! इति तं सम्बोध्य काक्षसेनिः कक्षसेनस्य पुत्रः अभिप्रतारी नाम ऋषिः इति ह इति खलु पूर्वमुवाच। इतिशब्दपरामृष्टमेव प्रदर्श्यते-कथं द्वादशाह इति कथं केन प्रकारेण स्थितोऽसौ द्वादशाह इति उच्चामन्यवं काक्षसेनिः पप्रच्छ। तस्योत्तरमेतत्–यथा अरान् रथचक्रमध्यस्थान् कीलकान् नेमिर्बहिर्वलयः पर्य्येति परितो व्याप्नोति एवमेनं द्वादशाहं गायत्री पर्येति परितो व्याप्नोति। किमर्थम्? अविस्रंसाय विस्रंसनाभावाय शैथिल्याभावाय यथा वा अरा नाभौ चक्रमध्ये धृताः सम्बद्धा एवमस्यां द्वादशाहो धृतः ॥ ७ ॥

अथैतमनुष्टुप्रूपेण स्तौति—

**अनुष्टुभं वा एतामन्नाद्याय व्यावृज्याऽऽसते यदेतं द्वादशाहम् ॥ ८ ॥**

यत् यमेतं विहितं द्वादशाहमासते अनुष्टुभं द्वात्रिंशदक्षरात्मिकामेवैतां व्यावृज्य विभज्य अन्नाद्याय अन्नञ्च तदाद्यञ्च अन्नाद्यं तदर्थं आसते अनुतिष्ठन्ति ॥ ८ ॥

कथं द्वादशाहमनुतिष्ठद्भिरनुष्टुभो विभागः क्रियते? इति तदर्थं तद्विभागमाह—

**अष्टाभिर्वा अक्षरैरनुष्टुप् प्रथमं द्वादशाहस्याऽहरुद्यच्छत्येकादशभिर्द्वितीयं द्वादशभिस्तृतीयम् ॥ ९ ॥**

द्वात्रिंशदक्षरात्मिकाऽनुष्टुप् अष्टाभिरात्मीयैरक्षरैर्द्वादशाहस्य प्रथममहः उद्यच्छति उद्गृह्णाति व्याप्नोति। तस्याऽह्नो गायत्रत्वात् तत प-

कादशाभिरात्मीयैरक्षरैर्द्वितीयमहरुद्यच्छति । तस्याऽह्नस्त्रैष्टुभत्वात् त्रिष्टुभश्च पादा एकादशाक्षरा इति तद्योगः द्वादशाभिरवशिष्टैरक्षरैस्तृतीयमहरुद्यच्छति, जागतं हि तदहः । अतो जागतपादयोगात्तदभिप्रायेणेदम् ॥ ९ ॥

अत्र प्रथमेऽह्नि नियुक्तानामष्टानामक्षराणामन्त्यमक्षरमुपादाय तत्प्रभृति पुनरेकादशाक्षराणि द्वितीयेऽह्नि विनियुज्यन्ते । तत्रापि अन्त्यमक्षरमुपादाय तदारभ्य द्वादशाक्षराणि तृतीये सम्बध्यन्ते । एवमेकैकमक्षरमादाय विनियोगे सति त्र्यक्षरमवशिष्यते । तान्येवाक्षराणि चतुर्थ्यादीनि त्रीण्यहानि व्याप्नुवन्तीत्याह—

**अक्षरं त्र्यक्षरमुच्छिष्यते तदेवोत्तरं त्रिरात्रमनुविदधाति ॥ १० ॥**

उक्तप्रकारेण अन्त्यमक्षरमादाय परिगणनायां त्र्यक्षरमक्षरत्रयमुच्छिष्यते अवशिष्यते । तदेवाक्षरत्रयं द्वितीयत्रिरात्रमनुक्रमेण विदधाति करोति । न त्वनुष्टुभि विद्यमानानि सर्वाण्यक्षराणि गतानि ॥ १० ॥

**छन्दांस्येवाऽस्यास्तृतीयं त्रिरात्रं वहन्ति ॥ ११ ॥**

अस्याः अनुष्टुभः सम्बन्धीनि यानि गायत्रीत्रिष्टुब्जगत्यात्मिकानि छन्दांसि तान्येव तृतीयं त्रिरात्रं वहन्ति निर्वहन्ति । (१)'अनुष्टुप् च वै सप्तदशश्च समभवता'मित्यादिना छन्दसामनुष्टुभः सकाशात् सृष्टिरुक्ता । तैश्च गायत्र्यादिभिश्छन्दोभिर्मीयमानानि सप्तमादीन्यहानि । चतुर्विंशत्यक्षरा हि गायत्री । सप्तममहश्चतुर्विंशस्तोमकम् । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् अष्टममहरष्टाचत्वारिंशस्तोमकम् । अष्टाचत्वारिंशदक्षरा जगती अष्टाचत्वारिंशस्तोमकञ्च नवममहः । अत एतानि छन्दांसि तृतीयं त्रिरात्रं वहन्तीत्युच्यते एतेषाञ्चानुष्टुप्प्रभवत्वात् अनुष्टुबेव व्याप्नोतीति कृत्स्नस्य नवरात्रस्य अनुष्टुप्रूपता । अतो द्वादशाहमनुतिष्ठन्त एतामनुष्टुभमेव विभज्य आसत इति पूर्ववदन्वयः ॥ ११ ॥

अथोक्तं नवरात्रस्याऽनुष्टुभो व्यापने यत्प्रतित्रिरात्रव्याप्तिवैलक्षण्यं तत्प्रशंसति—

**तां वा एतां प्रतीचीं तिरश्चीं पराचीमासतेऽन्नाद्याय तस्मात्प्रत्यञ्चं तिर्यञ्चं पराञ्चं प्रजाः पशुमुपजीवन्ति ॥ १२ ॥**

तां पूर्वोक्तामेतामनुष्टुभं प्रतीचीं प्रतिमुखं अञ्चन्तीं प्रत्यक्षीभूतां

१ ता. ब्रा. १०. ३. ४.

प्रथमे त्रिरात्रे प्रयुञ्जते ; तत्र अष्टावकादश द्वादशेति आनुष्टुभाक्षरसंख्यया भूयस्त्वेनोपलम्भात्। द्वितीये तु त्रिरात्रे तिरश्चीं तिरोऽञ्चतीं अन्तर्द्धानं प्राप्नुवन्तीं आसते तत्र हि त्रीण्येकाक्षराणि विभज्य प्रत्यहं एकैकमक्षरमानुष्टुभं संयोजितम्। अतोऽक्षरस्याऽल्पीयस्त्वात् तस्यास्तिर्यक्त्वम्। अथ तृतीये त्रिरात्र पराञ्चीं परावृत्तां परोक्षमेवाऽनुष्टुभमासते; तत्र हि अनुष्टुभः सकाशादुत्पत्तेः। छन्दोभिर्गायत्र्यादिभिः स्तोमसंख्यासाम्यमनुष्टुभो व्याप्तिहेतुरिति वर्णितं आत्माभिमुखं तिर्यञ्चं तिरश्चीनं अन्यथावृत्तमुखं पराञ्चं परावृत्तं पारोक्षस्थितञ्चोपजीवन्ति ॥ १२ ॥

अथ छन्दसां व्यूहनप्रकारं विधित्सुराह—

**छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् गायत्री त्रिष्टुभस्त्रिष्टुब्जगत्या जगती गायत्र्यास्तानि व्यौहन्यथा लोक ततो वै तानि यं यं काममकामयन्त तमसन्वन् ॥ १३ ॥**

छन्दांसि वै गायत्रीत्रिष्टुब्जगत्यात्मकानि छन्दांसि अन्योन्यस्य लोकं स्थानं अभ्यध्यायन् एतेषां हि क्रमेण प्रातःसवनादीनि सवनानि स्थानतया क्लृप्तानि गायत्रं प्रातःसवनं ॥ १३ ॥

**यत्कामो व्यूढच्छन्दसा द्वादशाहेन यजते सोऽस्मै कामः समृध्यते ॥ १४ ॥**

द्वादशाहेन यजते स कामः काम्यमानोऽर्थः अस्मै यजमानाय समृध्यते। एतदुक्तं भवति—द्वादशाहस्तावत् द्विविधः—सत्रात्मकोऽहीनात्मकश्च। पुनरपि प्रत्येकं द्वेधा भवति—समूढो व्यूढश्चेति। यत्रोक्तं व्यूहनं न क्रियते स समूढः, अपरस्तु व्यूढः। स कामप्राप्तिहेतुरिति अस्मिन् ब्राह्मणे प्राधान्येन प्रतिपाद्यत्वात् श्रूयते ॥ १४ ॥

अथैतं द्वादशाहं देवानां स्थानत्वेन स्तौति—

**ओको वै देवानां द्वादशाहो यथा वै मनुष्या इमं लोकमाविष्टा एवं देवता द्वादशाहमाविष्टा देवता ह वा एतेन यजते य एवं विद्वान् द्वादशाहेन यजते ॥ १५ ॥**

योऽयं द्वादशाहः स देवानामोकः स्थानं वै। तदेवोपपाद्यते—यथा खलु मनुष्या इमं लोकमाविष्टाः एवं देवता द्वादशाहमाविष्टाः। तथा सति

य एवं विद्वान् जानन् द्वादशाहेन यजते स देवतायुक्तेनैव एतेन द्वादशाहेन यजते ॥ १५ ॥

अथैतं गृहत्वेन प्रशंसति—

**गृहा वै देवानां द्वादशाहो नाऽगृहताया भय्यम् ॥१६॥**

देवानां द्वादशाहो गृहस्थानीय एव, सर्वदा तत्रैव वासात्। अत एवं जानता द्वादशाहेन यष्ट्वा अगृहताया अगृहत्वात् गृहराहित्यात् न भय्यं न भेतव्यं भीतिस्तस्य न जायते, सर्वत्र गृहलाभादित्यर्थः। (१)भय्यप्रवय्ये च छन्दसी"ति बिभेतेर्हेतुभये यत् प्रत्ययो निपात्यते ॥ १६ ॥

एवं द्वादशाहं बहुधा प्रशस्य अथ तस्याऽग्निष्टोमसाध्यतां जानतः फलमाह—

**यो वै द्वादशाहमग्निष्टोमेन कल्पमानं वेद कल्पतेऽस्मै प्रातःसवनेनैव प्रथमस्त्रिरात्रः कल्पते माध्यन्दिनेन द्वितीयस्तृतीयसवनेन तृयीयोऽग्निष्टोमसाम्नैव दशममहः कल्पते ॥ १७ ॥**

यः खल्वेवं द्वादशाहमग्निष्टोमेन अग्निष्टोमसंस्थेन ज्योतिष्टोमेन कल्पमानं निष्पाद्यमानं वेद जानाति अस्मै जानते यजमानाय अग्निष्टोमस्य यत्प्रातःसवनं तेनैवं द्वादशाहिकस्य दशरात्रस्य प्रथमस्त्रिरात्रः कल्पते क्लृप्तो भवति। अग्निष्टोमकेन माध्यन्दिनसवनेनैव दशरात्रस्य द्वितीयास्त्रिरात्रः कल्पते। तृतीयसवनेन तृतीयस्त्रिरात्रस्तस्मिन् तृतीयसवने यदन्तिममग्निष्टोमसाम तेनाऽग्निष्टोमसाम्नैव दशममहरविवाक्याख्यं कल्पते क्लृप्तो भवति ॥ १७ ॥

इममुक्तमर्थं वेदितुरपि फलमाह—

**कल्पतेऽस्मै य एवं वेद ॥ १८ ॥**

स्पष्टोऽर्थः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये वेदार्थप्रकाशे
दशमाध्यायस्य पञ्चमः खण्डः ॥

---

१. पा. सू. ३. १. ८३.

# अथ षष्ठः खण्डः ॥

द्वादशाहस्य दशरात्रस्य पञ्चभिरध्यायैः स्तोत्रीयाः सामानि च विधास्यन् तत्र पृष्ठ्यषडहे या स्तोत्रीयाः सामानि च तेषामसाङ्कर्य्याय प्रत्यहं विभिन्नानि रूपाणीतः परं षड्भिः खण्डैः प्रदर्श्यन्ते। तत्राऽऽदितस्त्रिभिः स्तोत्रीयाणां रूपाणि, ततस्त्रिभिः साम्नां रूपाणीति विवेकः। एवं प्रदर्शितरूपैरुपेताः स्तोत्रीयाः तद्युक्तानि सामानि चोत्तरत्र विधेयानि। तथोत्तरत्र गायत्र्यः सत्यस्त्रिष्टुभो रूपेण त्रिष्टुभः सत्यो जगत्या रूपेणेत्यादिना छन्दसामपि प्रत्येकमसाधारणरूपवत्त्वं सिद्धवदाम्नायते। अतो ऽनेन खण्डेन सहस्तोमछन्दःसाम्नां साधारणानि रूपाणि षडक्षरसंम्बन्धीन्यभिधीयन्ते। तत्र प्रथमस्याऽह्नस्तदीयस्तोमादेश्च रूपाणि दर्शयति—

**एति प्रेत्याशुमद्वीतिमद्रुक्मत्तेजस्वद्युज्जानं प्रथमस्याऽह्नो रूपं त्रिवृतः स्तोमस्य गायत्रस्य छन्दसो रथन्तरस्य साम्नः ॥ १ ॥**

आ इति प्र इति एवमेतदुपसर्गद्वयं प्रथमस्य त्रिवृत्स्तोमकस्य प्रायणीयस्याऽह्नो रूपमहरन्तराद्व्यावर्त्तकम्। अत एव(१) "अग्न आयाहि वीतये"(२) 'आ नो मित्रावरुणा'(३) 'प्र सोमासो विपश्चितः'(४) 'प्र सोमासो मदच्युत' इत्यादिकमुक्तरूपद्वयोपेतं तस्मिन्नहनि प्रयुज्यमानस्य त्रिवृत्स्तोमस्य गायत्रस्य छन्दसो रथन्तरस्य साम्नश्चैतदेव रूपम्। अत एतेषामप्यसाधारणरूपत्वसिद्धिः। एवमाशुमादित्यादावपि योज्यम्। अशू व्याप्तावित्यस्माद्धातोर्निष्पन्न आशुशब्दः। स चाऽस्मिन्नहनि(५) 'अश्वन्न त्वा वाजिन'(६) 'अश्वायन्तो मघवन्निन्द्र वाजिन' इत्यादिषु दृश्यते। तदभिप्रायेणेदमाशुमदिति आशुमत् आशुधातुनिष्पन्नशब्दयुक्तम्।

यद्वा आशुरश्वः अर्थपरोऽयमाशुशब्दः। आशुशब्दार्थयुक्तमित्यर्थः। वीतिमत् वीगत्यादिषु' एतद्धातुनिष्पन्नेन शब्देन युक्तम्। तथा हि-वीतियुक्तं दृश्यते-'अग्न आयाहि वीतये, 'प्रसोम देव

---

१. सा. सं. उ. १. १. ४. १.  २. सा. सं. १. १. ५. १.

३. सा. सं. उ. १. २. १९. १.  ४. सा. सं. उ. १. २. २१. १.

५. सा. सं. उ. १. १. १०. १.  ६. सा. सं. उ. १. १. ११. २.

वीतये' इति । तथा रुक्मत्, रुचिधातुयुक्तम् , तेजस्वत् तेजःप्रतिपादकशब्दोपेतम् । युञ्जानं युजिधातुयुक्तं एतान्यपि रूपाणि प्रथमेऽहनि विनियुज्यमानासु स्तोत्रीयास्वन्यत्र विद्यमानायां गायत्र्यां द्रष्टव्यानि, अहरादिषु साधारणत्वात् रूपाणाम् । अत एवाऽन्यत्र गायत्र्यां 'दविद्युतत्या रुचे'ति रुचिधातुयोगो दृश्यते । अस्मिश्चाऽहनि(१) 'अयं सूर्य्य इवोपदृगि'ति तेजःप्रतिपादकसूर्य्यशब्दश्रवणात् तदभिप्रायेण तेजस्वदिति रूपम् (२)'ब्रह्माणस्त्वा युजा वयं' (३)"आ त्वा ब्रह्म युजा हरी" इति युजिधातुयोगाश्च दृष्टः । एतदभिप्रायेण तेजस्वादिति रूपं 'ब्रह्माणस्त्वा-युजा वय'मित्युपन्यस्तम् । यद्वा युञ्जानं योजनमेव कुर्वन्ति सम्बन्धो नियोगः लोटो लिटश्च मध्यमपुरुषप्रयोगः । एतावत् प्रथमस्याऽह्नो रूपं त्रिवृदादेश्च ॥ १ ॥

अथ पृष्ठ्यषडहे द्वितीयस्याऽह्नः तदीयस्तोमादीनाञ्च साधारणानि रूपाणि दर्शयति—

**वृषवद्वृत्रहवद्रयिमद्विश्ववदुपस्थितं द्वितीयस्याऽह्नो रूपं पञ्चदशस्य स्तोमस्य त्रैष्टुभस्य छन्दसो बृहतः साम्नः ॥२॥**

वृषवत वृषिधातुनिष्पन्नशब्दयुक्तं द्वितीयस्य पार्ष्ठिकस्याऽह्नो रूपं पञ्चदशस्तोमादेश्चैतदेव रूपम् । अत एवास्मिन् द्वितीयेऽहनि(४) । "वृषा पवस्व धारया" (५)"वृषा शोणो" इत्यादिकाः वृषशब्दवत्यः स्तोत्रीया विनियुज्यन्ते । एवमुत्तरेष्वपि रूपेषु योज्यम् । वृत्रहवत् वृत्रहननलिङ्गयुक्तम् । तथा हि तत्र मन्त्रवर्णः-(६)"हन्ति वृत्राणि दाशुषे"(७)"जघ्निर्वृत्रममित्रिय"मिति । तथा रयिमत् रयिशब्दयुक्तम् । तथा च(८) "रयिं वीरवतीमिष"मिति दृश्यते । तथा विश्ववद्विश्वशब्दोपेतम् , अत एव तत्र दृश्यते(९) "अभि विश्वानि काव्ये"ति । उपस्थितमित्यनेन तिष्ठतिधातुर्निर्द्दिष्टः, तद्युक्तमपि द्वितीयस्याऽह्नो रूपम् ; तथा हि तस्मिन्नहनि दृश्यते (१०)"महिम्ने सोम तस्थिर" इति । यद्वा उपस्थितं प्राप्तं विद्यमानस्यैव कथनं वर्त्तमानकालापदर्शिनो लटः प्रयोग इति यावत् ॥ २ ॥

---

१. सा. सं. उ. १. २. १६. २.
२. सा. सं. उ. १. १. ६. ३.
३. सा. सं. उ. १. १. ६. २.
४. सा. सं. उ. २. १. १०. १.
५. सा. सं. उ. २. १. ११. १.
६. सा. सं. उ. २. १. १३. २.
७. सा. सं. उ. २. १. १५. २.
८. सा. सं. उ. २. १. ५. ३.
९. सा. सं. उ. २. १. १. १.
१०. सा. सं. उ. २. १. १. ३.

अथ तृतीयस्याऽह्नः सप्तदशस्तोमादेश्च रूपाणि दर्शयति—

उद्वत्त्रिवद्दिग्वद्गोमदृषभवत् तृतीयस्याऽह्नो रूपं सप्तदशस्य स्तोमस्य जागतस्य छन्दसो वैरूपस्य साम्नः ॥३॥

उद्वत् उच्छब्दयुक्तं त्रिवृत् त्रित्वसंख्यायोगश्च तृतीयस्य पार्ष्ठिकस्याऽह्नो रूपं तदीयस्य सप्तदशस्तोमादेश्च तदेव रूपम्। अत एव तस्मिन्नहनि(१) 'तिस्रो वाच उदीरते' इति रूपद्वयं दृश्यते। तथा दिक्शब्दवत्वञ्चाऽपरं रूपम्। तस्मादेव दिशं विशं हासिति दिक्शब्दयोगो दृश्यते। गोमत् गोशब्दवत्वञ्चाऽन्यद्रूपम्(२) 'गावो मिमन्ति धेनव' इति हि तत्रत्यो मन्त्रवर्णः। ऋषभवत् अर्थपरोऽयं निर्देशः ऋषभशब्दार्थवत्वमपरं रूपम्। "(३)इन्द्र स्वब्दी ववंसग" इति तत्र दृश्यते। यद्वा शोभनशब्दो ववंसगः ववनीयगामी वृषभ इव इन्द्रः कदाऽस्मद्यज्ञं प्राप्नोतीति ॥ ३ ॥

अथ चतुर्थस्याऽह्नः एकविंशस्तोमादेश्च रूपाणि दर्शयति—

राजन्वज्जनवद्वत्सूर्यवद्विराडनुतोदवच्चतुर्थस्याऽह्नो रूपमेकविंशस्य स्तोमस्याऽऽनुष्टुभस्य छन्दसोराजस्य वैसाम्नः ॥ ४ ॥

राजन्वत् राजन्शब्द युक्तं, यद्वा राजतिधातुयुक्तं एवमादिकं चतुर्थस्य पार्ष्ठिकस्याऽह्नोऽसाधारणं रूपं एकविंशस्तोमादेश्च एतदेव रूपम्। तथा हि मन्त्रवर्णे दृश्यते(४)—"राजानावनभिद्रुहा"(५) "पवनमानो अजीजन" दित्यादौ। तथा सूर्यवत् सूर्यशब्दयोगोऽप्यन्यद्रूपम्(६) 'उषाः सूर्यो न रश्मिभि"रिति' हि तत्र मन्त्रवर्णः। तथा विराट्छन्दसो ऽनुतोदवत् अनुतोदयुक्तं अन्यद्रूपम्, तत्र हि(७)"पिबा सोममिन्द्रमन्दतु त्वे"त्यादिका विराट्मत्स्वाहावोजीयाउसहो हाउ वलं हाविन्द्रोहाउवयो हाउ बृहतं हाउ स्वाहाउ ज्योतिर्हाउ दा २ ध इत्यादिभस्तोमः प्रतिपादमनुतोद्यतेऽयवधीयते। यद्वा अनुतोदोऽभ्यासः स च चतुर्थेऽहनि विहिते महावैराजसामादौ दृश्यते। तथा हि 'पिबा सोममिन्द्र मन्दतु त्वे'त्यादिकं त्रिरभ्यस्यते ॥ ४ ॥

अथ पञ्चमस्याऽह्नस्त्रिणवस्तोमादेश्च रूपाणि दर्शयति—

चित्रवच्छिशुमत् पङ्क्तिः शक्वरी न्यूनाक्षरा गो-

---

१, २. सा. सं. २. २. १४. १. ३. सा. सं. उ. २. २. १२. २
४, सा सं. उ. ३. १. ७. २. ५. सा सं. ३. १. २. १,
६. सा सं ३. १. ३. ५. ७. सा सं. पू. ५. १. १. ८.

**मदृषभवद्वज्रवदभिमत्पञ्चमस्याऽह्नो रूपं त्रिणवस्य स्तोमस्य पाङ्क्तस्य छन्दसः शाक्वराणांꣳसाम्नः ॥ ५ ॥**

चित्रवत् चित्रशब्दयुक्तं शिशुमत् शिशुशब्दयुक्तं एतदादिकं पञ्चमस्याऽह्नो रूपं त्रिणवस्तोमादेश्चैतदेव रूपं शक्वर्य्य इति एकस्यैव "विदा मघवन्नि"त्यस्यां गीयमानस्य साम्नः संज्ञा। स्त्रीत्वं बहुत्वापेक्षया शक्वर्य्याश्रयस्य साम्न इत्यर्थः।तथा पङ्क्तिछन्दोऽप्यस्याऽह्नो रूपम् अत एव(१)"इन्द्रो मदाय वावृध" इत्यादिका पङ्क्तिर्दृश्यते। सप्तपदा शक्वरी। सा च विदा मघवन्नित्यादिका पञ्चमेऽहनि विधित्सिता। तथा द्यूनाक्षरा द्वाभ्यामक्षराभ्यां न्यूनाऽप्यन्या ऋगस्याऽह्नो रूपम्। गोमत् गोशब्दयुक्तं ऋषभवत् ऋषभशब्दयुक्तम्।(२)अनूपे गोमान् गोभिरक्षा" इत्यादिकमपि पञ्चमस्याऽह्नो रूपं तथा वज्रवत् वज्रयुक्तं अभिमत् अभिशब्दयुक्तं(३) वज्रं हिन्वन्ति सायकं (४)"अभि व्रतानि पवते पुनान" इति हि तत्रत्यौ मन्त्रवर्णौ। एतावत्सर्वं पञ्चमस्याऽह्नस्त्रिणवस्तोमादेश्च रूपम् ॥ ५ ॥

अथ षष्ठस्याऽह्नस्त्रयस्त्रिंशस्तोमादेश्चाऽसाधारणानि रूपाण्याह—

**परिवत्प्रतिवत्सप्तपदा द्विपदा विनाराशꣳसा गोमदृषभवत् षष्ठस्याऽह्नो रूपं त्रयस्त्रिꣳशस्य स्तोमस्य सर्वेषां छन्दसां रूपं रेवतीनां साम्नः ॥ ६ ॥**

परिवत् परिशब्दयुक्तं प्रतिवत् प्रतीत्यनेन युक्तञ्च षष्ठस्याऽह्नो ऽहरन्तराद्व्यावर्त्तकं रूपं अत एवैतदुभयं तस्मिन्नहनि दृश्यते(५) "भिन्धि विश्वा अप द्विषः परिबाधः" इति(६) "प्रति वां सूर उदित" इति प्रतिशब्दस्य त्रयस्त्रिंशस्तोमस्य तस्मिन्नहनि प्रयुज्यमानस्य तथा सर्वेषां गायत्र्यादीनां छन्दसां तथा रेवतीनां(७)"रेवतीर्नः सधमाद" इति अस्यामुत्पन्नं साम रेवत्यः। "आपो वो रेवत्य" इति श्रुतेः अप्त्वेन संस्तुतत्वात् अप्शब्दवदस्यापि स्त्रीत्वं बहुत्वञ्च, रेवत्याख्यस्य साम्नोऽप्येतदेव रूपम्। एवमुत्तरेष्वपि योजना। सप्तपदा सप्तभिः पदैरुपेता। "सप्तपदया यजती"ति ब्राह्मणे विशेषदर्शनात्। होत्रा साम्ना योज्येत्यवगच्छति(८) "वृषन्निन्द्र वृषपाणास इन्दवः" सुष्टुमायातमद्रिभिः अयं जायत

१. सा. सं. ३. २. १४. १.
२. सा. सं. ३. २. १२. २.
३. सा. सं. ३. २. १५. २.
४. सा सं उ. ३, २. २०, ३.
५. सा. सं. उ. ४. १. ९. १.
६. सा. सं. उ. ४. १. ८. १.
७. सा. सं. उ. ४. १. १४. १.
८. ऋ. सं. २. २. ४. १. इयं पादसप्तकविशिष्टा ऋग्वेदे पठिता।

धनुषोधारीत्यादिकाः सप्तपदाश्चाऽत्र विनियुज्यन्ते। द्विपदा पादद्वयात्मिका(१)अग्ने त्वं नो अन्तमः, (२)इमा नु कं भुवना सीषधेम" त्यादिका विनाराशंसाः, नराः शस्यन्ते अनयेति नाराशंसा स्तुतिः तद्राहिता ऋक् अस्याह्नो रूपम्, तथा गोमत् गोशब्दयुक्तं ऋषभवत् ऋषभशब्द युक्तश्च(३)'गोभिरञ्जानो अर्षसि' (४)सुदुघामिव गोदुह" इत्यादिकम्॥६॥

अथोक्तानां षडहसम्बन्धिनां रूपाणां नानात्वं स्तौति—

**यस्मादेषा समाना सती षडहविभक्तिर्नानारूपा तस्माद्विरूपः संवत्सरः॥ ७॥**

यस्मादेषोक्ता षडहविभक्तिः षडहस्य विभक्तिर्विभागः समाना सती षडहविभक्तित्वेन सदृशी भवत्यपि नानारूपा उक्तप्रकारेण परस्परं विभिन्नरूपा तस्मात् संवत्सरो विरूपो विभिन्नरूपः उक्तप्रकरेण विलक्षणान्यहानि षडृतुस्थानीयानि। अतो वसन्तादीनां परस्परं विभिन्नधर्मत्वात् उक्तं संवत्सरस्य विरूपत्वम्॥ ७॥

एतद्वेदनं प्रशंसति—

**विरूपमेनमनुप्रजायते य एवं वेद॥ ८॥**

एनं वेदितारमनु पश्चात् विरूपं विविधरूपमपत्यादि प्रजायते उत्पद्यते य एवमुक्तां विलक्षणां षडहविभक्तिं वेद जानीयात्॥ ८॥

इति ताण्ड्यमहाब्राह्मणे माधवीये वेदार्थप्रकाशे
दशमाध्यायस्य षष्ठः खण्डः॥

---

## अथ सप्तमः खण्डः॥

अथाऽस्मिन्नेव पृष्ठ्ये षडहे अग्निविभक्तिवैचित्र्यं प्रदर्श्य स्तौति—

**अग्न इति प्रथमस्याऽह्नो रूपमग्निविभक्तेरग्निमिति द्वितीयस्याऽग्निनेति तृतीयस्याऽग्निरिति चतुर्थस्य॥ १॥**

अग्निविभक्तेः अग्निशब्दस्य या विभक्तयस्तासां मध्ये अग्न इति सम्बुध्यन्तं प्रथमस्याऽह्नो रूपम्। (५)'अग्न आयाहि वीतये'इति हि तस्मिन्नहनि दृश्यते। अग्निमिति द्वितीया विभक्तिः द्वितीयस्याऽह्नो रूपम्(६)"अग्निं दूतं वृणीमहे" इति तत्र मन्त्रवर्णः। अग्निनेति तृतीया तृतीयस्याह्नो रूपम्

---

१. सा. सं. उ. ४. १. २२. १. २. सा. सं. उ. ४. १. २३. १.
३. सा. सं. उ. ४. १, २. २. ४. सा सं. उ. ४. १. १५. १.
५. सा. सं. उ. १. २. १६. २. ६. सा. सं. उ. २. १. ६. १.

अत एव तत्राऽपि (१)"अग्निनाऽग्निः समिध्यत' इति दृश्यते । अग्निरिति प्रथमैव चतुर्थस्याऽह्नो रूपम् । (२)"जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः" इति तत्र दर्शनात् ॥ १ ॥

अथ पञ्चमस्याऽह्नोऽसाधारणाग्निविभक्तिं विवक्षुराह—

**देवा वै श्रियमैच्छꣳस्तान्न प्रथमेऽहन्यविन्दन्न द्वितीये न तृतीये तांश्चतुर्थेऽहन्यविन्दन् विन्दते श्रियं य एवं वेदाऽग्नेरिति पञ्चमस्य तेनो श्रीः प्रत्युपोदितेत्याहुः॥२॥**

देवाः खलु पुरा श्रियं सम्पदं ऐच्छन् । तदर्थं द्वादशाऽहमन्वतिष्ठन्। तत्र च तां श्रियं प्रथमेऽहनि नाऽविन्दन् नाऽलभन्त । तथा द्वितीये चाऽहनि नाऽविन्दन्। तृतीये चाऽहनि नाऽविन्दन्। एवं प्रथमे त्रिरात्रे अलब्ध्वा तां चतुर्थेऽहन्यविन्दन् । एवमुक्तश्रियो लाभं यो वेद असौ श्रियं सम्पदं विन्दते लभते । एवं चतुर्थेनाऽह्ना श्रियः प्राप्तौ सत्यां अग्नेः इति विभक्तिः पञ्चमस्याऽह्नो भवतीति यत् तेनो तेनैव सा प्राप्ता श्रीः प्रत्युपोदिता प्रत्याख्यातेत्याहुर्ब्रह्मवादिनः । (३)"तव श्रियो वर्ष्यस्येव विद्युतोऽग्नेश्चिकित्र" इति हि पञ्चमेऽहनि दृश्यते । तत्र चाग्नेः इति सम्बन्धः प्रतीयते । तस्मात् सम्बन्धः प्रत्याख्यात इति तेषां ब्रह्मवादिनामभिप्रायः ॥ २ ॥

एतद्वेदनस्य फलमाह—

**अप्रतिवाद्येनं भ्रातृव्यो भवति य एवं वेद ॥ ३ ॥**

एवमुक्तं प्रतिवचनं यो वेद भ्रातृव्यः शत्रुः एनमप्रतिवादी भवति अनेनोक्तं प्रतिवक्तुं न शक्नोति ॥ ३ ॥

आरम्भावसानयोः सारूप्यार्थं तमेव सम्बुद्ध्य षष्ठस्याऽह्नो रूपमित्याह—

**अग्न इति षष्ठस्य येनैव रूपेण प्रयन्ति तदभ्युद्यन्ति ॥४॥**

(४)'अग्ने सख्ये मा रिषामा वयं तवे'ति षष्ठेऽहनि दर्शनात् अग्न इत्येतदेव षष्ठस्याऽह्नो रूपम् । तथा च येनैव रूपेण प्रयन्ति षडहं प्रारभन्ते तेनैव रूपमभिलक्ष्य तेनैव रूपेणोद्यन्ति षडहं समापयन्ति ॥ ४ ॥

उक्तविभक्तिनानात्वं प्रशंसति—

**यस्मादेषा समाना सत्याग्निविभक्तिर्नानारूपा तस्मा-**

---

१. सा. सं. उ. २. २. ५. १. २. सा. सं. ३. १. १. ६. १.
३. सा. सं. उ. ३. २. ७. १. ४. सा. सं. उ. ३. १. ६. १.

यथर्त्वादित्यस्तपति ॥ ५ ॥

एषोक्ताऽग्निविभक्तिः समाना अग्निविभक्तित्वेन सरूपा सती यस्मान्नानारूपा सम्बुद्ध्यादिविभक्तिभेदेन परस्परं विलक्षणाकारा तस्माद्धेतोर्यथर्त्तु ऋतावृतौ वसन्तादिके आदित्यो नानारूपः सन् तपति सर्वं जगाद्भासयति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये वेदार्थप्रकाशे
दशमाध्यायस्य सप्तमः खण्डः ॥

---

## अथाऽष्टमः खण्डः॥

अथाऽस्मिन् षड्हे विभक्तेर्नानात्वं प्रदर्श्य स्तौति—

**इन्द्रेति प्रथमस्याऽह्नो रूपमिन्द्रविभक्तेरिन्द्रमिति द्वितीयस्येन्द्रेणेति तृतीयस्येन्द्र इति चतुर्थस्येन्द्रादिति पञ्चमस्येन्द्रेति षष्ठस्य येनैव रूपेण प्रयन्ति तदभ्युद्यन्ति यस्मादेषा समाना सतीन्द्रविभक्तिर्नानारूपा तस्माद्यथर्त्वोषधयः पच्यन्ते ॥ १ ॥**

इन्द्रविभक्तेः इन्द्रशब्दस्य विभक्तीनां मध्ये इन्द्रेति सम्बुध्यन्तं प्रथमस्याऽह्नो रूपम्। तथाच तत्रत्यो मन्त्रवर्णः—(१)"आ याहि सुषमा हि त इन्द्र सोम"मिति। इन्द्रमिति द्वितीया विभक्तिर्द्वितीयस्याऽह्नो रूपम्। (२)"इन्द्रमिद्गाथिनो बृह"दिति हि तत्र दृश्यते। इन्द्रेणेति तृतीयस्य (३)"इन्द्रेण सं हि दृक्षस" इति तत्र दर्शनात्। इन्द्र इति प्रथमान्तं चतुर्थस्य। "(४)इन्द्रो दधीचो अस्थभि"रिति हि तत्र मन्त्रो दृश्यते। इन्द्रादिति पञ्चमस्य, (५)"इन्द्रात्परितन्वं मम" इति तत्रत्यान्मन्त्रवर्णात्। इन्द्रेति सम्बुध्यन्तमेव षष्ठस्य (६)"यद्वीडाविन्द्र यत्स्थिरे"इति हि तत्र दृश्यते शिष्टं सिद्धप्रायम् ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये वेदार्थप्रकाशे
दशमाध्यायस्याऽष्टमः खण्डः ॥

---

१. सा. सं. उ. १. १. ६. १.    २. सा. सं. उ, २. १. ८. १.
३. सा. सं. उ. २. २, ७. १.    ४. सा. सं. उ. ३. १. ८. १.
५. सा. सं. ५. १. ९. ३.    ६. सा. सं. उ. ४. १. ९. ३.

## अथ नवमः खण्डः ॥

इत्थं स्तोत्रीयागतानि रूपाणि दर्शयित्वा साम्नामपि पृष्ठ्यषडहे विधास्यमानानां रूपाणीति उत्तरं त्रिभिः खण्डैः प्रदर्श्यन्ते । तत्र प्रथमं स्वराश्रयाणि रूपाणि षडहस्य दर्शयति—

**यदृचा प्रस्तौति तत्प्रथमस्याऽह्नो रूपं स्वरविभक्तेर्यत्पुरस्तात् स्तोभं तद्द्वितीयस्य यदुभयतः स्तोभं तत् तृतीयस्य यदनुतुन्नं तच्चतुर्थस्य यदभ्यारब्धं तत्पञ्चमस्य यदिहकारेणाऽभ्यस्तं तत् षष्ठयाऽह्नो रूपम् ॥ १ ॥**

स्वरविभक्तेः स्वराणां विभक्तयो विभज्यमाना एकदेशाः स्वरविभक्तयः, जातावेकवचनम्, स्वरविभक्तीनां मध्ये ऋचा स्तोभादिवर्जितया केवलयैवर्चा प्रस्तोता साम प्रस्तौतीतियत् तत् प्रथमस्याऽह्नो रूपम्। तथाहि—प्रथमेऽहनि माध्यंन्दिनसवने विधास्यमानानि आश्वं सोमसाम औशनादीनि ऋचैव प्रस्तूयन्ते । यत् पुरस्तात् ऋक्प्रारम्भात् पूर्वमेव स्तोभयुक्तं साम तत् द्वितीयस्याऽह्नो रूपं तथैव तस्मिन्नहनि यौक्ताश्वं, आयास्यं वासिष्ठ बृहादित्येवमादीनि सामानि पुरस्तात् स्तोभान्येव विधास्यन्ते । यदुभयतःस्तोभं पादस्याद्यन्तयोः स्तोभयुक्तं साम तत् तृतीयस्याऽह्नो रूपम् । हाउ अभिसोमास आयवो हाउ इत्यादिकमुभयतः स्तोभं गौतमस्य तत्र विधानात् यत् अनुतुन्नं अनुपादः स्तोभैस्तुद्यमानं साम तच्चतुर्थस्याऽह्नो रूपम्। स्वराडनुतोदचाथत्यत्रैव एतत्साम प्रदर्शितम् । यत्सामाऽभ्यारब्धं अभि उपर्य्यधः एकस्या ऋच उपर्य्यभ्यारब्धव्यं भवति तत् पञ्चमस्याऽह्नो रूपम् सर्वाण्यपि सामानि एकैकस्यामृचि समाप्यन्ते, शाक्करसाम तु त्रिसृष्वृक्षु समाप्यत इत्यभिप्रायेण अभ्यारब्धव्यमित्युक्तम् । एवं तिस्रः तिस्र एकैका स्तोत्रीयेति पञ्चमेऽह्नि पृष्ठस्तोत्रम् । तथा चाऽश्वलायनसूत्रम्—नव प्रकृत्या तिस्रो भवन्तीति । यत्साम इहकारेणाऽभ्यस्तं पुनः पुनरिहकारेण इहशब्दोच्चारणेन स्तोभयुक्तेन दीदिहीचेति नवभिर्ऋग्भिः स्तोत्रीयास्तृचो निष्पद्यन्ते भद्रं वीतिश्रोषं इत्यादिकं तत् षष्ठस्याऽह्नो रूपमुक्तम् ॥ १ ॥

स्वरविभक्तेर्नानात्वं प्रशंसति—

**स्वराणां यस्मादेषां समाना सती स्वरविभक्तिर्नानारूपा तस्माद्यथर्त्तु वायुः पवते ॥ २ ॥**

स्वराणां मध्ये यैषा स्वरविभक्तिरुक्ता सा समाना सती सामावयस्वेन सदृशी भवन्ती यस्मान्नानारूपा उक्तप्रकारेण प्रत्यहं विभिन्नरूपा तस्माद्यथर्तु ऋतावृतौ वीप्सालक्षणेऽर्थे यथाशब्दस्याऽव्ययीभावः प्रत्यृतु वायुर्नानाकारः पवते गच्छति ॥ २ ॥

इति ताण्डमहाब्राह्मणे माधवीये वेदार्थप्रकाशे
दशमाध्यायस्य नवमः खण्डः ॥

---

## अथ दशमः खण्डः ॥

अथ तस्मिन् षडहे निधनविभक्तेर्नानात्वं प्रदर्श्य स्तौति—

**पदनिधनं प्रथमस्याऽह्नो रूपं निधनविभक्तेर्बहिर्णिधनं द्वितीयस्य निधंनिधनं तृतीयस्येनिधनश्चतुर्थस्याऽथकारणिधनं पञ्चमस्य यदिहकारेणाभ्यस्तं तत् षष्ठस्याऽह्नो रूपं निधनानां यस्मादेषा समाना सती निधनाविभक्तिर्नानारूपा तस्मादिमे लोकाः सह सन्तो नानैव ॥ १ ॥**

निधनानि तावत् द्विविधानि–अन्तर्निधनानि बहिर्निधनानि च। (१)"इहकार इडाथकारौ गीतश्च निधनस्वरं हाषीस्वरश्च द्व्यक्षरं देवताश्चारण्ये गेयेषु तान्यन्तस्सामनिधनानी"त्यादिना सूत्रकारेण अन्तनिधनान्युक्तानि। सर्वत्र तावच्चत्वार एव सामान्ताः स्वरो निधनमिडावागित्यादिना बहिर्निधनान्यपि सूत्र एवोक्तानि। तदुभयमत्राऽनुसन्धातव्यम्। अयमर्थः–निधनविभक्तीनां मध्ये पदनिधनं पादे पादे क्रियमाणेन निधनेन युक्तं साम प्रथमस्याऽह्नो रूपम्। तथा यौधाजयं बहिर्निधनं ऋगक्षराद्बहिर्भूतं निधनं यस्य तत् द्वितीयस्याऽह्नो रूपम्। तथा यौक्ताश्वादिकं दिश इति निधनं यस्य तद्दिङ्निधनं तृतीयस्याह्नो रूपम्। तथा क्षुल्लकवैष्टम्भमंहावैष्टम्भं ई इति निधनं यस्य तदीनिधनं चतुर्थस्याह्नो रूपम्। तथा महावात्सप्रमहावैराजे अथकारः अथेति शब्दो निधनं यस्य तदथकारणिधनं पञ्चमस्याह्नो रूपम्। इहकार इडाथकारौ गीतश्च निधनस्वरमित्यादिना सूत्रकृता अथकारस्यान्तर्णिधनत्वमुक्तम्। तच्च शाक्वरे साम्नि दृश्यते इन्द्रा द्युम्नायना १ इषा इत्यादि। तथा इडा इहा यत् साम भद्रं दीदिहा औषादिकं इह कारणिधनेनाऽभ्यस्तं तत् षष्ठस्याऽह्नो रूपं नाना

१. लाट्या. श्रौ. ७. ८. ५.

-सम्बन्धिनी एषा निधनविभक्तिः समाना सती यस्मादुक्तप्रकारेण नानारूपा तस्मात् भूरादयस्त्रयो लोकाः सह सन्त एकरूपाः सन्तोऽपि नानैव नानारूपा एव भवन्ति ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये वेदार्थप्रकाशे
दशमाध्यायस्य दशमः खण्डः ॥

---

## अथैकादशः खण्डः ॥

अथेडाविभक्तेर्नानात्वं प्रदर्श्य स्तौति—

**द्रवदिडं प्रथमस्याऽह्नो रूपमिडाविभक्तेरूर्ध्वेडं द्वितीयस्य परिष्टुब्धेडं तृतीयस्येडाभिरैडं चतुर्थस्याऽध्यर्द्धेडं पञ्चमस्य यदिहकारेणाऽभ्यस्तं तत् षष्ठस्याऽह्नो रूपमिडानां यस्मादेषा समाना सतीडाविभक्तिर्नानारूपा तस्मात्समानाः सन्तः पशवो नानारूपाः ॥ १ ॥**

इडाविभक्तेः इडाविभक्तीनां इडाप्रभेदानां मध्ये द्रवदिति हि क्षिप्रनाम द्रवन्तीडा यस्य तद्द्रवदिडं कालेयगौतमादिकं तत्प्रथमस्याऽह्नो रूपं इडाभिरैडाभिशब्देन युक्ता इडा यस्य पृश्निसामादेः तत्तथोक्तं इडा २३ भा ३४३ तु २३४५ इ डा भा २३४५ ई इति ऊर्ध्वेडा यस्येति तत् । माधुच्छन्दसादेः तत् द्वितीयस्याऽह्नो रूपम्(१) । अर्धमधिकं यस्याः सा अध्यर्द्धा अध्यर्द्धा इट् इडेत्येवं रूपा यस्य वार्षवाम्नादेः तदध्यर्द्धेडं पञ्चमस्याऽह्नो रूपं, यद्यपि वार्षवाम्नादेरध्यर्द्धरूपा ऊ२३२३पा एवाऽध्ययने दृश्यते तथापि सूत्रकारेण (२)"उपा स्थानेष्वन्यानि निधनानी"त्यपक्रम्य इडा परिष्टुब्धा इडा यस्य संश्लैरवभृथाच्छावाकसाम भवतीत्यादेः तद्गौरवादिपरिष्टुब्धेडं तत्र हिउप ३ होवा हो ५ इडा २३ भा २४३ पो २३४५ इ डा इति हि तत्र दृश्यतेऽनादेश इत्यादिना अध्यर्द्धत्वमध्यर्द्धोपानामित्येतेन अध्यर्द्धोपास्थाने इट् इडेत्येवं रूपा अध्यर्द्धेडा प्रयोगकाले प्रयोजयेत्युक्तत्वात् वार्षवाम्नयोरप्यध्यर्द्धेडत्वम् यत्साम इहकारेणाऽभ्यस्तं आवर्त्तमानिहकारयुक्तं वारवन्तीयादिकं तत् षष्ठस्याऽह्नोरूपं इडानां सम्बन्धिन्येषा उदाहृतेडाविभक्तिः समाना

---

१. अत्र पतितमनुमीयते । २. लाट्या. श्रौ. ७. १. १०

सदृशी सत्यपि यस्मान्नानारूपा द्रुतदुर्द्रुतादिभेदेन विभिन्नाकारा तस्मात् पशवः समानाकृतयः सन्तोऽपि नानारूपाः ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये वेदार्थप्रकाशे दशमस्याध्यायस्यैकादशः खण्डः ॥

---

## अथ द्वादशः खण्डः ॥

अथाऽस्य षडहस्य प्रत्यहं विशिष्टफलहेतुतां ब्रह्मवादिनां प्रश्नप्रत्युक्तिभ्यां दर्शयति—

**भरद्वाजायना वै सत्रमासत तानपृच्छन् किं प्रथमेनाऽह्ना कुरुतेति प्रैवैमेति किं द्वितीयेनेत्यवसमेवाऽकुर्म्महीति किं तृतीयेनेति पर्य्येवाप्सवामहीति किं चतुर्थेनेति सतैव सदप्यदध्मेति किं पञ्चमेनेति प्राणानेव विच्छिन्दन्त एमेति किंषष्ठेनेतीदमेवाऽगच्छामेति इति ॥१॥**

भारद्वाजायनाः भरद्वाजगोत्राः खलु पुरा ऋषयः सत्रं सत्रात्मकमेतं द्वादशाहमासत अन्वतिष्ठन् । सत्रमासीनान् यजमानान् अन्ये तु ब्रह्मवादिनोऽपृच्छन्—हे ऋषयो यूयं प्रथमेन पार्ष्ठिकेनाऽह्ना तु किं कुरुत किं फलं प्राप्नुथेति । तान् प्रत्येवमब्रुवन्—प्र एवैमेति पदच्छेदः एतेर्लेटि लङि रूपमेतत् प्रैवैमैव यज्ञस्य प्रायणमेव केवलमकार्ष्मेति । अथ द्वितीयेनाऽह्ना किं कुरुतेति पुनस्ते ब्रह्मवादिनोऽपृच्छन् अवसं अन्नमेव कुर्म्महि निष्पादितवन्तो वयमिति प्रत्यवोचन्त । अथ तृतीयेनाऽह्ना किं कुरुतेति ब्रह्मवादिभिः पृष्टे तस्येदमुत्तरम्—परि सर्वत एवाऽप्सवामहि प्राप्नुवन्तः स्म इति । पुनश्चतुर्थेनाऽह्ना किं कुरुतेति ब्रह्मवादिनां प्रश्नः । तस्येदमुत्तरं सतैव विद्यमानेन निष्पन्नेन एते सुपांसुलुगिति तृतीयाया आकारः अन्वादेशः विषयादेतादेशः एतेन चतुर्थेनाऽह्ना सत् विद्यमानं सर्वं फलमप्यदध्म अपिहितवन्तः स्थापिवन्तः प्राप्तवन्तो वयमिति । पञ्चमेनाऽह्ना किं कुरुतेति ब्रह्मवादिभिः पृष्टे सत्येतान् विद्विषां प्राणानेव विछिन्दन्तः वियोजयन्तः एतान् प्राणानेव प्राप्ताः स्म इति प्रत्यब्रुवन् । अथ षष्ठेनाऽह्ना किं कुरुतेति ब्रह्मवादिभिः पुनः पृष्टे तस्येदमुत्तरम्—इदमेव स्थानं इहलोकावस्थानमेव प्राप्तवन्तः स्म इति ॥ १ ॥

अथ यद्दचा प्रस्तौतीत्यादिना येषा स्वरविभक्तिः पूर्वं प्रदर्शिता त-त्रैकैकमनूद्य स्तौति—

**यस्य पदेन प्रस्तौत्यथ स्वारमभि वाव तेन देवाः प-शूनपश्यन् यत् पुरस्तात् स्तोभमथ स्वारमुदेव तेनासृ-जन्त यदुभयतःस्तोभमथ स्वारमेभ्य एव तेन लोकेभ्यो देवाः पशुभ्योऽन्नाद्यं प्रायच्छन् यदनुतुन्नमथ स्वारमुपैव तेनाशिक्षन्यस्य मध्ये निधनमथ स्वारं गर्भांꣳस्तेनादधत तानि ह्वतास्वारेण प्राजनयन् ॥ २ ॥**

यस्य प्रथमेऽहनि विहितस्य साम्नः पदेन ऋचः पादेनैव स्तोभ-रहितेन प्रस्तौति प्रस्तोता प्रस्तावभागं ब्रूयात् अथाऽनन्तरं स्वारं स्व-र्यमाणं स्वरिति विशिष्टं उद्गीथभागञ्चोद्गाता ब्रवीति तेन साम्नास्तूय-माना देवाः पशूनेवाऽभ्यपश्यन् यजमानाय दातुमभ्यजानन् यत् पुर-स्तात्स्तोभं ऋचः पुरस्तात् क्रियमाणेन स्तोभेन युक्तं अथानन्तरं स्वारं स्वर्य्यमाणं द्वितीयेऽहनि विनियोज्यं साम तेन स्तुता देवा उद्-सृजन्तैव पूर्वदृष्टान् पशून् यजमानैः प्राप्तुं व्यमुञ्चन् प्रायच्छन्नित्यर्थः यदुभयतःस्तोभं आद्यन्तयोः स्तोभं आद्यन्तयोः स्तोभयुक्तं अथानन्तरं स्वर्य्यमणि स्वारं तृतीयेऽहनि विनियोज्यं साम तेन साम्ना स्तुताः देवा एभ्य एव भूरादिभ्यो लोकेभ्य एव दृष्टेभ्यः पशुभ्यः सकाशादन्ना-द्यं क्षीरादिकं अदनीयमन्नं प्रायच्छन् प्रकर्षेण दत्तवन्तः यदनुतुन्नं प्रथ-मं अनुतोदवत् अथाऽनन्तरं स्वारं स्वरितयुक्तं चतुर्थेऽहनि विनियो-ज्यं साम। तेन स्तुता उपैवाशिशिक्षन् शिक्षयितुमैच्छन् यजमानान् शक्ता-न् कर्त्तुमैच्छन्नित्यर्थः। शिक्षतेः(१) 'सनि मीमाघुरभलभशकपे'त्यादिना सन् प्रत्यये परतः(२) "अत्र लोपोऽभ्यासस्ये"त्यभ्यासलोपः। यद्वा शिक्ष इति दानकर्म्मा यजमानैर्यद्यत्प्रार्थितं तत्तत् प्राप्नुयुरित्यर्थः। यस्य साम्नो मध्ये निधनं इडा अथेत्यादिकं अथानन्तरं स्वारं स्वरितयुक्तं तेन साम्ना स्तूयमाना देवाः गर्भान् दधन् प्रजासु गर्भाणां निक्षेपणमकार्षुः इहवताइ इहवताइ हाइहकारवता स्वारेण स्वर्य्यमाणेन साम्ना तान् पूर्वमाहितान् गर्भान् प्राजनयन् प्रकर्षेण उदपादयान् ॥ २ ॥

पदनिधनं प्रथमस्येत्यादिना येषां निधनविभक्तिरुक्तास्तानवयुत्य

---

१. पा. सू. ७. ४. ५४. २. पा सू ७. ४. ५८.

स्तौति—

इमं वाव देवा लोकं पदनिधनेनाऽभ्यजयन्नमुं बहिर्णिधनेनान्तरिक्षं दिङ्निधनेनाऽमृतत्वमीनिधनेनागच्छन् ब्रह्मवर्चसमथनिधनेनाऽवारुन्धताऽस्मिन्नेव लोक इहनिधनेन प्रत्यातिष्ठन् ॥ ३ ॥

देवाः खलुः पुरा इममेव भूर्लोकं पदनिधनेन क्रियमाणेन निधनेन तद्वता साम्ना अभ्यजयन् अमुं स्वर्गलोकं बहिर्णिधनेन ऋगक्षराद्बहिर्भूतनिधनयुक्तेन साम्नाऽभ्यजयन्। अथ दिङ्निधनेनाऽगच्छन् प्राप्नुवन् दिश इति निधनवता साम्ना अन्तरिक्षमभ्यजयन्। तथा अमृतत्वं कदाचिदपि मरणराहित्यं ईनिधनेन इकारनिधनेन साम्ना आगच्छन् प्राप्नुवन् अथनिधनेन अथकारणिधनेन साम्ना ब्रह्मवर्चसं ब्राह्मं तेजः अवारुन्धत प्राप्नुवन्। तथा इहनिधनेन इहकारनिधनेन साम्ना अस्मिन्नेव भूर्लोके प्रत्यतिष्ठन् चिरकालावस्थायिनोऽभूवन् ॥ ३ ॥

अथ द्रवदिडं प्रथमस्याऽह्ना रूपमित्यादिना यैषा इडा विभक्तिर्नानारूपोक्ता तामवयुत्याऽनुवादेन स्तौति—

इमं वाव देवा लोकं द्रवदिडेनाऽभ्यजयन्नमुमूर्ध्वेडेनान्तरिक्षं परिष्टुब्भेडेन प्रतिष्ठामिडाभिरैडेनाऽवारुन्धत प्रतिष्ठायाऽध्यर्द्धेडेन व्यजयन्ताऽस्मिन्नेव लोक इहेडेन प्रत्यातिष्ठन् ॥ ४ ॥

इममेव भूर्लोकं देवाः पुरा द्रवदिडेन हो इडा इति युक्तेन साम्नाऽभ्यजयन्। ऊर्ध्वेडेन अमुं द्युलोकमभ्यजयन्। परिष्टुब्भेडेन परितः स्तोभयुक्तेडाशब्दोपेतेन साम्ना अन्तरिक्षलोकमभ्यजयन्। इडाभिरैडेन साम्ना प्रतिष्ठां प्रतिष्ठानं अवारुन्धत प्राप्नुवन्। प्रतिष्ठाय च अध्यर्द्धेडेन अर्द्धाधिकयेडया युक्तेन साम्ना अजयन्त ऊर्ध्वमभ्यजयन्त अभितो जयन्त अभितो जयं प्राप्नुवन् अस्मिन्नेव भूर्लोके इहेडेन इहकारयुक्तषडहोपेतेन साम्ना प्रत्यतिष्ठन् प्रतिष्ठिता अभवन् ॥ ४ ॥

अथैतामिडाविभक्तिं प्रकारान्तरेण स्तोष्यन् वाङ्निधनात् इडानिधस्याऽतिशयं दर्शयति—

न वाक् संवत्सरमतिवदतीडैव संवत्सरमतिवदति गर्भेण संवत्सरे पर्यावृत्य प्रजायेते तेनाऽतिवदति ॥५॥

वाक् वाङ्निधनं संवत्सरं द्वादशमासात्मकं कालविशेषं नातिवदति अतिक्रम्य न वदति। किन्तु ततः पूर्वमेव वदति जननादूर्ध्वं पञ्चसु मासेषु हि बालानां जल्पितं भवति। इडेव इडानिधनमेव तु संवत्सरमतिवदति। एतदेव विव्रियते गर्भेणेति इडेति गोनामसु पाठात्(१) 'पशवो वा इडे'ति श्रुतेश्च इडाशब्देन पशुरेवोच्यते। स च गर्भेण गर्भरूपेणाऽवस्थितस्सन् संवत्सरे मासदशके सम्पूर्णे पर्य्यावृत्य योनिदेशं प्रति स्वकीयं शिरः प्रतिनिवृत्य प्रजायते उत्पद्यते। तेन प्रकारेण इडानिधनं संवत्सरमतिवदतीति ॥ ५ ॥

अस्त्वेवम्। ततः किम्? अत आह—

**ता वा एताश्चतस्रः षडहं पराच्य इडा अतियन्त्येषा नूतैषा विषूच्येषा प्रतीच्येतच्चीडम् ॥ ६ ॥**

एतास्ताः पूर्वोक्ताः पराच्यः पराक् उपरिभागे वर्त्तमानाश्चतस्रः इडाः परिष्टुब्धेडाद्याः षडहत्रिवृदादि षट्पृष्ठकं अतियन्ति अतीत्य गच्छन्ति प्राप्नुवन्तीत्यर्थः। द्रवदिडोर्द्धे तु रथन्तरस्य बृहतश्चोभयोः प्रकृतावेव सम्बन्धात् तद्विषये एवेति न ताभ्यां षडहव्याप्तिः। एषा नु एषा खल्विडा ऊता प्रोता षाडहिकेषु सामसु सम्बद्धा। तथैषा विषूची विष्वक् सर्वत्राऽञ्चती साम्नामधस्तादुपरिष्टाच्च वर्त्तमाना। एषैव प्रतीची प्रत्यञ्चती प्रत्येकं स्तोमानि प्राप्नुवती भवति। एतदिदं परिदृश्यमानं जगत्सर्वं ऐडमु ऐडमेव इडाप्रभवमेव इडायाः पशुरूपत्वात् पशुभिश्च सर्वं जगत् पुष्टं भवतीति इडाजगतोस्सम्बन्धः ॥ ६ ॥

यद्येवं इडानिधनमेव स्यात् न तर्हि वाङ्निबन्धनाशीर्भवेदित्याशङ्क्य सम्पत्त्या तदपि लभ्यत इत्याह—

**संवत्सरोऽग्निर्वाक् सम्वत्सरो यदग्निर्विभज्यते वाचमेव तद्विभजन्ति ॥ ७ ॥**

अग्निस्तावत् संवत्सरः, तन्निष्पाद्यत्वात् वाक् च संवत्सरात्मिका, सम्वत्सरे पूर्णे एव शिशवो व्यक्तवर्णां वाचं प्राप्नुवन्ति। (२)"तस्मादेकहायना मनुष्या वाचं वदन्ती"ति श्रुत्यन्तरात्। अतो वाचः सम्वत्सरात्मकत्वम्। एवं परम्परया अग्निरेव वागित्युक्तं भवति। युक्तञ्चैतत्—अग्नेर्वाचोऽधिष्ठातृत्वात्, श्रूयते हि "अग्निर्वाग्भूत्वा मुखं प्राविश"दिति। एवं सति यदग्निर्विभज्यते अग्न इति प्रथमस्याऽह्नो

---

१. तै. सं. २. ६. ८. १. २. तै. सं. ६. १. ६. ७.

रूपमित्यादिनोक्तेन प्रत्यहं अग्निशब्दो विभक्तिभेदेन भिद्यते तस्तेन वाचमेव तद्विभजन्ति वाग्विभक्तिरेव सा एषा विभक्तिः। अतो वाङ्निबन्धनाश्रितमपि फलं सम्पद्यत इत्यर्थः॥ ७॥

तत्र विभज्यमानाग्निशब्दगतां संख्यामनूद्य प्रशंसति—

**द्वे द्वे अक्षरे विभजन्ति द्वौ द्वौ हि मासावृतुरथो मासानामेव तद्रूपं क्रियते॥ ८॥**

अग्निविभक्तौ च द्वे द्वे अक्षरे अग्निरिति द्वे अक्षरे इन्द्र इति द्व्यक्षरञ्च विभजन्ति। कुतः? हि यस्मात् द्वौ द्वौ मासौ चैत्रादिकौ सम्भूय ऋतू वसन्तादिक ऋतुर्भवति। अथो अपि च तदक्षरद्वयविभजनात् मासानां द्वन्द्वशो वर्त्तमानानामेव रूपं क्रियते॥ ८॥

अथोक्तां षडहविभक्तिमनूद्य स्तौति—

**षडहानि विभजन्ति षडृतव ऋतूनां धृत्या ऋतूनां प्रतिष्ठित्या अथो ऋतूनामेव तद्रूपं क्रियते षड्‌वै पुरुषा यानाग्निरनुविह्रियते॥ ९॥**

दशरात्रस्याऽऽदितः षट्संख्यान्यहानि विभजन्ति एति प्रेत्याशुमदित्यादिना पूर्वोक्तेन साधारणरूपेण विभजन्ति विभक्तानि कुर्वन्ति। ऋतवश्च षट्सङ्ख्याका भवन्ति। यथा च तत् षडहविभजनं ऋतूनां धृत्यै स्थैर्य्याय भवति तथा तेषामृतूनां प्रतिष्ठित्यै प्रतिष्ठानाय च भवति। अथो अपि च तद्विभजनं ऋतूनामेव रूपं क्रियते ऋतवोऽपि परस्परं विभक्ताकारा विभज्यमानान्यहानि च परस्परं विलक्षणानि भवन्ति इति तद्वैलक्षण्यमेव ऋतुवैलक्षण्यकारणमित्यर्थः। यस्मादेतानि विभज्यमानान्यहानि षट्संख्यानि अत एव कारणात् सदसि निविष्टा(१) होतृमैत्रावरुणाद्या वषट्कर्त्तारः पुरुषाः षट् षट्संख्याका भवन्ति यान् होत्रादीननुलक्ष्य समपि अग्निर्विह्रियते होत्रियादिषु धिष्ण्यषेषु आग्नीध्रीयादाहृत्याऽग्निः, प्रक्षिप्यते॥ ९॥

ननु सर्वासां देवतानां मध्ये अग्नेरिन्द्रस्य चोभयोरेव विभक्तिरुक्ता, कुतो नान्यासामित्यत आह—

**यदिदं बहुधाग्निर्विह्रियते पदसावादित्यः सर्वाः प्रजाः प्रत्यङ् तस्मादेते एव देवते विभक्तिमानशाते नातोऽन्या काचन॥ १०॥**

१. होता, मैत्रावरुणः पोता, नेष्टा, ब्राह्मणाच्छंसी अच्छावाकः इति षट्।

यस्मात् इदमयमग्निर्बहुधा बहुप्रकारं विह्रियते यस्माच्च असौ द्युलोकस्थः आदित्यः सर्वा इमाः भूर्लोकवर्त्तिनीः प्रजाः प्रत्यङ् प्रत्यञ्चन् प्रत्येकं पूर्वस्यां दिश्युद्यन् भवति। श्रुत्यन्तरञ्च भवति(१) "तस्मात् सर्व एव मन्यते मां प्रत्युदगादिती"ति। इन्द्र एव आदित्यः तस्माद्धेतोः एते एव अग्निरिन्द्रश्चेति देवते विभक्तिं षडहे प्रत्यहं विभागं आनशाते प्राप्तवत्यौ। अतोऽन्या एतद्व्यतिरिक्ता काचन काचिदपि देवता न प्राप्तवतीति।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
दशमाध्यायस्य द्वादशः खण्डः॥
दशमाध्यायः समाप्तः॥



(१) ते. सं. ६. ५. ०.

# अथैकादशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

इत्थं द्वादशाहं विधाय समुदायशोऽवयवशश्च तत्प्रशंसा कृता । तदवयवे पृष्ठ्यषडहे स्तोत्रीयाणां तदाश्रितानां साम्नाञ्च रूपाणि प्रदर्शितानि । अथ तद्रूपविशिष्टाः स्तोत्रीयाः सामानि च दाशरात्रिकाणि विधास्यन्ते । द्वादशाहस्य यावाद्यन्तावतिरात्रौ तौ पूर्वोक्तात् ज्योतिरतिरात्रान्न विशिष्यते । अतस्तौ वर्जयित्वायानि मध्ये दशाऽहानि– पृष्ठ्यः षडहस्त्रयश्छन्दोमाः दशममहरविवाक्यञ्चेति तेषु प्रथमेऽहनि अग्निष्टोमसंस्थे सर्वेष्वपि स्तोत्रेषु त्रिवृदेव स्तोमः । द्वितीयादीन्यष्टावहान्युक्थसंस्थानि पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशचतुश्चत्वारिंशाष्टाचत्वारिंशस्तोमकानि । दशममहस्तु चतुर्विंशस्तोमकमग्निष्टोमसंस्थम् । तत्राऽग्निष्टोमसाम्नि तु त्रयस्त्रिंशस्तोमः । अथैषामह्नामितः परैर्दशाभिः प्रकरणैः स्तोत्रीयाः सामानि च विदधानः प्रदर्शितान् स्तोमांश्च क्रमेण विधत्ते । तत्र प्रथमेऽहनि बहिष्पवमानस्य स्तोमक्लृप्तिं विधित्सुराह—

**स्तोमो युज्यते सात्रियेभ्योऽहर्भ्यः प्रत्नवतीभिश्चोपवतीभिश्च ॥ १ ॥**

दशरात्रस्य प्रथमेऽहनि बहिष्पवमाने योऽयं विधास्यमानस्त्रिवृत्स्तोमः सोऽसौ प्रत्नवतीभिः प्रत्नशब्दयुक्ताभिः(१)"अस्य प्रत्नामनुद्युत"मित्यादिभिः । उपवतीभिः(२)"उपशिक्षापतस्थुषः" इत्यादिभिः स्तोत्रीयाभिः प्रयुज्यते सम्बध्यते निष्पद्यते इत्यर्थः । किमर्थम्? सात्रियेभ्यः, द्वादशाहप्रभृतिविश्वसृजामयनपर्यन्तानि सत्राणि । तत्सम्बन्धिभ्यः विधिरित्सितो दशरात्रश्च सर्वसत्रसम्बन्धी भवति । तत्र तत्र"द्वादशाहस्य दशाऽहानीति" विधिदर्शनात् ईदृग्भ्योऽहर्भ्यः अहरर्थम् ।

---

१. सा. सं. उ. १. २. १९. १.    २. सा. सं. उ. १. २. १८. १.

एतच्च(१)नव भवन्ति, नवाहस्य युक्त्या'' इत्यनेन विशदीकारिष्यते समिधो यजति तनूनपातं यजतीत्यादाविव ॥ १ ॥

प्रस्तवतीभिश्चोपवतीभिश्चेति पाठाद्योऽनुष्ठानक्रमोऽवगतस्तमनूद्य स्तौति—

**यत्प्रस्तवत्य उपवतीभ्यः पूर्वा युज्यन्ते ब्रह्म तत्पूर्वं क्षत्त्राद्युज्यते ब्रह्म हि पूर्वं क्षत्त्रात् ॥ २ ॥**

उपवतीभ्यः पूर्वे प्रस्तवत्यो युज्यन्ते सम्बध्यन्ते इति यत् तत्तेन ब्रह्म हि पूर्वं क्षत्त्रात् ब्राह्मणजातिरेव क्षत्त्रात् क्षत्रियजातेः पूर्वं युज्यते सम्बध्यते। युक्तश्चैतत् क्षत्त्रात् क्षत्रियजातेः पूर्वं हि ब्रह्म ब्राह्मणजातिः। सृष्टिसमये हि (२)प्रजापतिमुखात् ब्राह्मणजातावुत्पन्नायां पश्चादुरसो बाहुभ्यां‍श्च क्षत्रियस्योत्पत्तेः ॥ २ ॥

एतदेव पौर्वापर्य्यं प्रकारान्तरेण स्तौति—

**मनस्तत्पूर्वं वाचो युज्यते मनो हि पूर्वं वाचो यद्धि मनसाऽभिगच्छति तद्वाचा वदति ॥ ३ ॥**

उपवतीभ्यः पूर्वाः प्रस्तवत्यः इति यत् तत् तेन वाचः पूर्वं मन एव युज्यते। मनो हि मनः खलु वाचः शब्दात् पूर्वं प्रथमभावि भवति। यद्धि यत् खलु मनसा अभिगच्छति अभिप्राप्नोति विषयीकरोति तदेव वाचा वदति, न खलु कश्चित्प्रेक्षावान् मनसा ऽविषयीकृतं वस्तु वक्तुं शक्नोति। तस्मादेतयोः पौर्वापर्य्यनियमादत्रत्येन पौर्वापर्य्येण तदेव क्रियत इत्यर्थः ॥ ३ ॥

अथ पुनः प्रकारान्तरेण स्तौति—

**बृहत्तत्पूर्वं रथन्तराद्युज्यते बृहद्धि पूर्वꣳ रथन्तराद्विजित्या तु वै रथन्तरं पूर्वं योगमानशे ॥ ४ ॥**

तत्तेन प्रस्तवतीनां पूर्वयोगेन रथन्तरात् पूर्वमुत्पन्नं बृहत्सामैव युज्यते। बृहत्साम हि रथन्तरात् पूर्वं प्रजापतेरजायत। नन्वेवं बृहतः प्रथमभावित्वं प्रथमेऽहनि बृहत्सामैव पृष्ठस्तोत्रीयं स्यात्। उभयसामसु च संसवादिषु बृहदेव पूर्वं सम्बध्येतेत्याशङ्कायामिदमुच्यते—विजित्या त्विति। तुशब्दः पक्षव्यावृत्त्यर्थः। "प्रजापतिरकामयत बहु स्यां प्रजायेयेति। स तूष्णीं मनसा ध्याय'दित्यादौ बृहत एव प्रथमभावित्वं प्रतीयते। तथाऽपि यन्वित्याहुर्बृहत् पूर्वं प्रजापतेः समभवदि-

१. ता. ब्रा. ११. १. ६. २. तै. सं. ७. १. १. द्रष्टव्यम्।

स्यादिना कस्मात् पूर्वं रथन्तरं योगमानश इत्यन्तेन पूर्वं प्रजापतेर्मनसि समुद्भूतमपि बृहत्तिरस्कृत्य सृष्टिसमये रथन्तरस्यैव प्रथमसर्जनात् प्रथमयोग इति पूर्वमुक्तम् । तदेवाऽत्र विजित्येत्युच्यते । विजित्या विजयेनैव रथन्तरं बृहतः पूर्वं दशरात्रस्य प्रथमेऽहनि योगं सम्बन्धमानशे प्राप । तृचत्रयात्मको हि त्रिवृत्स्तोमस्तेषु तेषु प्रदेशेषु समाम्नातामेकैकामृचमादाय तृचीकृताः ते तृचाः स्युरिति ॥ ४ ॥

विधत्ते—

**सम्भार्यास्तृचा भवन्ति यथाऽऽशिष्ठान्वहिष्ठान्सम्भरेदेवमेवैतान् सम्भरन्ति गत्यै ॥ ५ ॥**

एते तृचाः सम्भार्याः सम्पाद्या भवन्ति । यद्यपि तृतीय एव तृचः सम्भार्यस्तथापि तद्योगात्(१) प्राणभृन्न्यायेन सर्वेऽपि तृचाः सम्भार्या इति व्यपदेशः । यथा खलु लोक आशिष्ठान् भोक्तृतमान् भक्षणसमर्थान् वहिष्ठान् वोढृतमांश्च अनडुह अन्विष्य एकत्र सम्भरन्ति समूहीकुर्वन्ति; गत्यै गमनाय दशरात्रस्याऽन्तप्राप्त्यर्थम् ॥ ५ ॥

अथ सत्रियेभ्य इति यदुक्तं पूर्वं तत् स्तोत्रीयासङ्ख्यानुवादेनोपपादयति—

**नव भवन्ति नवाहस्य युक्त्या ऋचचैवाऽहर्युनक्ति यथा प्रार्थस्य शम्या अवदध्यादेवमेवैतन्नवाहस्य शम्या अवदधाति गत्यै ॥ ६ ॥**

एवं त्रिषु तृचेषु नवस्तोत्रीया भवन्ति । एतच्च नवाहस्य अविवाक्यात् पूर्वभाविना नवरात्रस्य युक्त्यै योजनाय भवति । एतदेव विव्रियते-ऋचर्चैवाहर्युनक्तीति । अत्रत्यया एकैकया ऋचा नवस्वहःसु एकैकमहर्योजितवान् भवति । अपिच प्रार्थस्य प्रकर्षेण इयर्त्ति गच्छतीति प्रार्थोऽनड्वान् तस्य युजे योजनाय । यथा शम्या अवदध्यात् युगच्छिद्रेषु प्रक्षेप्यान् कीलकान् प्रोतान् कुर्य्यात् एवमेवैतत् । एतेन नवर्चेन नवाहस्य योजनाय शम्या एवाऽवदधाति । तथा सति गत्यै समाप्तिपर्य्यन्तं गमनायैतत्सम्पद्यते ॥ ६ ॥

---

१. 'प्राणभृत उपदधाति' इत्यत्र प्राणभृच्छन्दः प्राणभृदप्राणभृत्समुदायमभिधत्ते । तत्रैक एव मन्त्रः प्राणशब्दघटितः । अन्ये त्वतथाभूताः । तथापि तत्समुदायः प्राणभृच्छब्देनोच्यते तद्वत् ।

अथाऽस्मिन्नहनि विधित्सितं स्तोमं बहिष्पवमानस्य विधाय प्रशंसति—

**त्रिवृदेव स्तोमो भवति तेजसे ब्रह्मवर्चसाय ॥ ७ ॥**

सिद्धप्रायमेतत् । तेजः (१)प्रकाशः । ब्रह्मवर्चसं श्रुताध्ययनादिजन्यं ब्राह्मं तेजः । अग्निना सहोत्पन्नत्वात् त्रिवृत्स्तोमः तस्योभयस्य कारणं भवतीत्यर्थः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये एकादशाध्यायस्य प्रथमः खण्डः ॥

## अथ द्वितीयः खण्डः ॥

प्रथमेऽहनि बहिष्पवमानस्य स्तोत्रियाः स्तोमाश्च विहिताः । अथा ज्यानां विधित्सुराह—

**उभाभ्यां वै रूपाभ्यां बहिष्पवमान्यो युज्यन्ते यत्सामा स्तोमो भवति तदाज्येषु ॥ १ ॥**

उभाभ्यां बृहद्रथन्तराभ्यां रूपाभ्यां खलु बहिष्पवमानस्य स्तोत्रीयाः युज्यन्ते बृहत्तत् पूर्वं रथन्तरादिति हि पूर्वमुक्तम् । अतः प्लवस्यो बार्हतं रूपं उपवत्यो राथन्तरमिति रूपद्वययोगः आज्येषु आज्यस्तोत्रेषु उत्तरस्यैव साम्नो रूपं भवति यत्सामा यत्सामपृष्ठकस्तोमवान् यागो भवति प्रथमेऽहनि होतुः पृष्ठस्तोत्रे यत्सामा क्रियते तस्यैव साम्नो रूपमाज्येषु भवति नान्यस्येत्यर्थः । अत एव वक्ष्यति राथन्तरमेव तद्रूपं निर्द्योतयति स्तोम इति ॥ १ ॥

अथाऽऽज्यानि लिङ्गविशेषयुक्तानि विधत्ते—

**निराहावन्त्याज्यानि भवन्ति युक्तमेव तैराह्वयति २**

निराहावन्ति निष्कृष्य समूहात् पृथक्कृत्य सम्बुध्याभिमुखीकृत्याऽऽह्वानं निराहवः, तद्वन्त्याज्यानि आज्यस्तोत्राणि भवन्ति निराहावन्तीत्यत्र एको वकारलोपश्छान्दसः । तैराह्वानलिङ्गकैराज्यैर्बहिष्पवमान्या युक्तं योजितमेव प्रथममहराह्वयति ॥ २ ॥

---

१. शरीरकान्तिः, इति. क.

कानि पुनस्तथाविधानीति ? तान्याह—

**(१)"अग्न आयाहि वीतय" (२)"आ नो मित्रावरुणा" (३)"ऽऽयाहि सुषमा हि त" (४)"इन्द्राग्नी आगतꣳसुत" मिति राथन्तरमेव तद्रूपं निर्द्योतयति स्तोमः इति ॥३॥**

एते चत्वारस्तृचाश्चत्वार्य्याज्यस्तोत्राणि। एषु च आकारो दृश्यते; एति प्रेत्याशुमन्निति परिगणितत्वात्। तच्च राथन्तरं रूपं तदेकमेव राथन्तरं रूपं निर्द्योतयति प्रकाशयति स्तोमश्चाऽऽज्येष्वपि त्रिवृदेव। स चैकैकस्मिन्नाज्ये तृचस्याऽऽवर्त्तनेन पूरणीय इत्यर्थः। एवं प्रातःसवनिकेषु पञ्चसु स्तोत्रेषु स्तोत्रीयाणामेव विधानादत्र गातव्यं साम प्राकृतमेव गायत्रम् ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकादशाध्यायस्य द्वितीयः खण्डः॥



---

(१) क. अग्न आयाहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि ॥
ख. तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य ॥
ग. स नः पृथुश्रवाय्यमच्छा देव विवाससि। बृहदग्ने सुवीर्यम् ॥ (सा.सं.उ.१.१.४.)

(२) क. आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मध्वा रजांसि सुक्रतू।
ख. उरुशꣳसा नमो वृधा मह्ना दक्षस्य राजथः। द्राघिष्ठाभिः शुचिव्रता ॥
ग. गृणाना जमदग्निना योनावृतस्य सीदतम्। पातꣳसोममृतावृधा ॥
(सा. सं. उ. १. १. ५.)

(३) क. आ याहि सुषमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिस्सदो मम ॥
ख. आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना। उप ब्रह्माणि नश्शृणु ॥
ग. ब्रह्माणस्त्वा युजा वयꣳसोमपामिन्द्र सोमिनः। सुतावन्तो हवामहे ॥
(सा. सं. उ. १. १. ६.)

(४) क. इन्द्राग्नी आगतꣳसुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता।
ख. इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः। अया पातमिमꣳसुतम् ॥
ग. इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृम्पतम् ॥
(सा. सं. १. १. ७.)

## अथ तृतीयः खण्डः ॥

अथ माध्यन्दिनपवमानस्य सामानि विधास्यन् स्तोत्रीयांस्तावद्विधाय स्तौति—

"प्र सोमासो विपश्चित" इति गायत्री भवति प्रेत्या "अभिद्रोणानि बभ्रव" इत्यभिक्रान्त्यै "सुता इन्द्राय वायव" इति सᳪंस्कृत्यै "प्र सोम देव वीतय" इति प्रेत्यै "प्र तु द्रवे"ति प्रेत्यै प्र वा एतेनाऽह्ना यन्ति ॥ १ ॥

(१)'प्र सोमास' इति गायत्रीछन्दस्का प्रथमा स्तोत्रीया भवति । सा च प्रशब्दयोगात् प्रेत्यै प्रायणाय दशरात्रप्रारम्भायोचिता(२)"अभिद्रोणानि बभ्रव" इत्यस्यां तु अभीत्युपसर्गो दृश्यते । तेन चाऽभिक्रमणं स्मार्यते । अतः सा अभिक्रान्त्यै अभिक्रमणाय दशरात्रस्याऽभितः आक्रमणाय भवति । (३)'सुता इन्द्राय वायव' इत्यत्रस्थ(४) सुतशब्देनाऽभिषुतसोमवाचिना अभिषवाख्यः संस्कारो बुद्धावुपस्थाप्यते । अतस्सा संस्कृत्यै प्रवृत्तस्य दशरात्रस्य संस्कारगुणातिशयाधानाय भवति । (५)"प्र सोम देव वीतये' (६)"प्र तु द्रवे"त्यनयोः प्रशब्दयोगात् प्रायणं बुद्धिस्थं भवति । अतस्तदुभयं प्रेत्यै प्रायणाय दशरात्रस्याऽऽरम्भाय योग्यम् । एतेन त्रिवृत्स्तोमकेन प्रथमेनाऽह्ना प्रयन्ति वै प्रायणमेव कुर्वन्ति यजमानाः । अतः प्रायणस्य प्रतिपादिका स्तोत्रीया योग्येति भावः ॥ १ ॥

अथ "प्र सोमास' इत्यस्यां स्तोत्रीयायां गातव्यं साम विधत्ते—

गायत्रं भवति ॥ २ ॥

तच्चैकर्चमित्युत्तराग्रन्थे एकस्या ऋच एवाऽध्ययनादवसीयते ॥ २ ॥

अस्य च गायत्रस्य स्तुतिप्रकारविधायकं ब्राह्मण सार्थवादं पूर्वमा·

---

१. प्र सोमासो विपश्चितोऽपो नयंत ऊर्मयः । वनानि महिषा इव ॥

२. अभिद्रोणानि बभ्रवः शुक्रा ऋतस्य धारया । वाजं गोमन्तमक्षरन् ॥

३. सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमा अर्षन्तु विष्णवे ॥
( सा. सं. उ. १. २. १९ । )

४. सुतशब्दोऽभिषुतसोमवाची तेन. इति ख. पु.

५. प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छाकोशं मधुश्चुतम् । (सा. सं.उ. १.२.२०.१)

६. प्र तु द्रव परिकोशं निषीद नृभिः पुनानो अभिवाजमर्ष । अश्वं नत्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ ( सा. सं. उ. ११. १०. १. )

स्नातमन्त्राऽप्यतिदिशति—

**यदेव गायत्रस्य ब्राह्मणम् ॥ ३ ॥**

यदेव प्रकृतावग्निष्टोमे विहितस्य गायत्रस्य ब्राह्मणं(१) "इमे वै लोका गायत्रं स्यावृदूगेय"मित्यादि तदेवाऽस्याऽपि विहितस्य गायत्रस्य ब्राह्मणम् । प्रकरणभेदादूब्राह्मणस्याऽसम्बन्धशङ्का स्यात् । तन्मा भूदित्यर्थमयमतिदेशः ॥ ३ ॥

अथाऽ'भिद्रोणानी'त्यस्यां गातव्यं साम विधत्ते—

**आश्वं भवति ॥ ४ ॥**

स्पष्टम् । एतदप्येकर्चम ॥ ४ ॥

अथैतत् प्रवृत्त्युपन्यासेन प्रजातिहेतुरिति स्तौति—

**अश्वो वै भूत्वा प्रजापतिः प्रजा असृजत स प्राजायत बहुरभवत्प्रजायते बहुर्भवत्याश्वेन तुष्टुवानः॥५॥**

पुरा खलु प्रजापतिः सर्वकारणभूतः स्रष्टा अश्वः अश्वरूपी भूत्वा प्रजाः स्रष्टव्या असृजत सृष्टवान् । पुनरपि स प्राजायत बहुप्रजारूपेणोत्पद्यत । ततः बहुरनेकविधोऽभवत् । अतः आश्वेनाऽश्वसम्बन्धिना साम्ना तुष्टुवानः स्तुतवान् यजमानः प्रजायते पुत्रपौत्रादिरूपेणोत्पद्यते ततो बहुरनेको भवति ॥ ५ ॥

अथैतस्य निधनविभक्तिमनूद्य स्तौति—

**एकाक्षरं निधनमुपयन्ति रथन्तरस्याऽनतिवादाय ॥ ६ ॥**

रा २३४५न् इति एकाक्षरं हि अस्य साम्नो निधनं तदुपयन्ति । रथन्तरस्य साम्नोऽनतिवादायाऽतिवादाभावाय भवति । अस्ति हि रथन्तरस्यैकमेवाऽक्षरं निधनम् । तद्यत्राऽपि अनेकाक्षरं निधनं स्यात् रथन्तरस्याऽतिवादो भवेत् । अत उभयोरेकाक्षरत्वेन साम्यादतिवादाभावः सिध्यतीत्यर्थः ॥ ६ ॥

एतद्वेदनं प्रशंसति—

**अनतिवाद्येनं भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥**

य एवमुक्तमर्थं जानाति एनं वेदितारं भ्रातृव्यः शत्रुरनतिवादी अतीत्य वादी न भवति एतद्वचनस्योपरि भ्रातृव्यवचनं नोत्पद्यत इत्यर्थः॥७॥

अथ"सुता इन्द्राय वायव" इत्यस्यां गातव्यं साम विधत्ते—

**सोमसाम भवति ॥ ८ ॥**

---

१. ता. ब्रा. ७. १. १.

सोमेन दृष्टं साम सोमसाम तदप्येकर्चम् ॥ ८ ॥

अथास्य साम्नः सोमसम्बन्धमेवाऽऽख्यानेन प्रदर्शयन् राज्यादिहेतुत्वेनेदं स्तौति—

**यथा वा इमा अन्या ओषधय एवꣳ सोम आसीत्स तपोऽतप्यत स एतत्सोमसामाऽपश्यत्तेन राज्यमाधिपत्यमगच्छद्यशोऽभवद्राज्यमाधिपत्यं गच्छति यशो भवति सोमसाम्ना तुष्टुवानः ॥ ९ ॥**

यथा वा यथा खलु इमाः इदानीं दृश्यमानाः अन्या ओषधयः लतागुल्माद्याः, एवमेव सोमः पुरा अविशिष्ट आसीत् । स सोमस्तपोऽतप्यत् ईश्वरस्मरणात्मकं तपश्चक्रे । तत ईश्वरानुग्रहात् स सोम एतत्सोमसामाऽपश्यत् दृष्टवान् । दृष्ट्वा च तेन स्तुत्वा राज्यं राज्ञः कर्म आधिपत्यं ओषधीनामाधिपतित्वञ्चाऽगच्छत् प्राप्नोत् । ततो यशो यशस्वी अभवत् । अतोऽन्योऽपि सोमसाम्ना तुष्टुवानः स्तुवन् राज्यमाधिपत्यं च गच्छति यशो यशस्वी च भवति ॥ ९ ॥

"प्र सोम देव वीतय" इति तृचे गातव्यसामविधायकं प्राकृतं तद्ब्राह्मणं चातिदिशति—

**यौधाजयं भवति यदेव यौधाजयस्य ब्राह्मणम् ॥१०**

(१)"देवा वै यशस्कामास्सत्रमासताऽग्निरिन्द्रो वायु"रित्युपक्रम्य "अथेन्द्रो यौधाजयं प्रावृहते"त्यादि यदेव प्राकृतस्य यौधाजयस्य ब्राह्मणं तदेवाऽस्यापि ब्राह्मणं द्रष्टव्यम्, तत्रोक्तं सर्वमस्यापि भवतीत्यर्थः ॥ १० ॥

अथ "प्र तु द्रवे"ति तृचे गातव्यं साम विधाय पूर्ववत्तद्ब्राह्मणमप्यतिदिशति—

**औशनं यदौशनस्य स्तोमः ॥ ११ ॥**

भवति, ब्राह्मणमिति पदद्वयमनुषज्यते । औशनं भवति यदेव प्रकृतावौशनस्य ब्राह्मणमाम्नातम् । "(२)अथ वायु रौशनं प्रावृहते"त्यादिना तदेवास्याऽप्यौशनस्य ब्राह्मणं भवति । स्तोत्रीयाभिर्माध्यन्दिनस्य पवमानस्य त्रिवृत्स्तोमो निष्पन्न इत्यर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये वेदार्थप्रकाशे
एकादशाध्यायस्य तृतीयः खण्डः ॥

---

१. ता. ७. ५. ६–१२.    २. ता. ब्रा. ७. ५. १६.

## अथ चतुर्थः खण्डः ॥

होतृमैत्रावरुणब्राह्मणाछंस्यच्छावाकानां क्रमेण चत्वारि पृष्ठस्तोत्राणि । तेषां स्तोत्रीयाः सामानि च प्राकृतान्येव । तत्र होतुः पृष्ठस्य स्तोत्रीयं प्रगाथविधमनूद्य स्तौति—

**"अभि त्वा शूर नो नुम" इत्यभीति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः ॥ १ ॥**

(१)"अभि त्वा शूर"त्यषा हि रथन्तरस्य योनिः । ततोऽभिशब्दस्योत्पत्तावेव रथन्तरेण सम्बन्धादभिशब्दो रथन्तरस्य रूपम् । एतत्प्रायणीयमहश्च राथन्तरं रथन्तरपृष्ठकम् । हि यस्मादेवं तस्मादभिशब्दयुक्तः प्रगाथोऽस्मिन्नहनि सम्बन्धयोग्य इत्यर्थः ॥ १ ॥

अथ द्वितीयस्य पृष्ठस्य स्तोत्रीयं तृचमुपादाय स्तौति—

**"कया नश्चित्र आभुव"दिति कवत्यस्तेन प्राजापत्याः को हि प्रजापतिः प्रजापतेराप्त्यै ॥ २ ॥**

(२)"कया नश्चित्र" इत्याद्याः कवत्यः कशब्दोपेतास्तिस्र ऋचो भवन्ति । यतः कवत्यस्तेन प्राजापत्याः प्रजापतिदेवताकाः । कुत एतत् ? को हि कशब्दाभिधेयः खलु प्रजापतिः । एवं कवत्यो भवन्तीति यत् तत् प्रजापतेराप्त्यै प्राप्तये सम्पद्यते ॥ २ ॥

अथ तृतीयस्य पृष्ठस्य स्तोत्रीयं तृचमनूद्य स्तौति—

**(३)"तं वोदस्ममृतीषहं वसोर्मन्दानमन्धसोऽभिवत्सं न**

---

१. अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥
न त्वा वाꣳ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ (सा.सं.उ. १. १. १.)

२. कया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता ॥ १ ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढाचि दारुजे वसु ॥ २ ॥
अभीषुणः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥ ३ ॥
( सा, सं. उ. १. २. १२ )

३. तं वो दस्म मृतीषहं वसोर्मन्दानमन्धसः ।
अभिवत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्हवामहे ॥ १ ॥
द्युक्षः सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजꣳ शतिनꣳ सहस्रिणो मक्षू गोमन्तमीमहे ॥ २ ॥
( सा. सं. १-१-१३ )

**स्वसरेषु धेनव" इत्यभीति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः ॥ ३ ॥**

"तं वोदस्म"मित्यस्मिन्तृचे अभिवत्समिति अभिशब्दो विद्यते। अभीत्येतद्रथन्तरस्य रूपमित्यादि पूर्ववद्व्याख्येयम् । ऋचस्तु उत्तरास्वेव व्याख्याता इति न पुनर्व्याख्यायन्ते ॥ ३ ॥

अस्मिन्नेव तृचे कञ्चित्पादमादाय तदभिप्रायमाह—

**'इन्द्रं गीर्भिर्हवामह' इति हवन्त एवैनम् ॥ ४ ॥**

'इन्द्रं गीर्भिर्हवामह' इत्यनेन पादेन एनमिन्द्रं हवन्त एव आह्वयन्त एव ॥ ४ ॥

अथ चतुर्थस्य पृष्ठस्य स्तोत्रीयं प्रगाथमनूद्य स्तौति—

**(१)"तरोभिर्वो विदद्वसु"मिति स्तोमो वै तरो यज्ञो विदद्वसुः स्तोमेन वै यज्ञो युज्यते यत्तरोभिर्वो विदद्वसुमित्याह यज्ञमेव तद्युनक्ति ॥ ५ ॥**

"स्तोमो वै देवेषु तरो नामाऽऽसी"दित्यादिना तरःशब्दस्य स्तोमवाचकत्वं विदद्वसुशब्दस्य यज्ञवाचकत्वं च पूर्वमुक्तम् । तरत्यनेन यज्ञमिति तरः स्तोमः वसूनां लम्भकत्वात् यज्ञो विदद्वसुः । अत्र मन्त्रे यद्यपि शब्दद्वयमर्थान्तरपरं तथाऽपि शब्दसामान्येन स्तुतिः । स्तोमेन च त्रिवृदादिना यज्ञो युज्यते सम्बध्यत इति च प्रसिद्धम् । तथा सति यथा तरोभिर्वो विदद्वसुमिति तरोभिः करणैः सम्बन्धं विदद्वसुमाह तत्तेन यज्ञमेव विदद्वसुवाच्यं तरःशब्दवाच्येन स्तोमेन युनक्ति सम्बद्धं करोति ॥ ५ ॥

अथ प्रथमे स्तोत्रीये प्रकृतमेव सामविधिमनूद्य स्तौति—

**रथन्तरं भवति ब्रह्म वै रथन्तरं ब्रह्म प्रायणीयमहर्ब्रह्मण एव तद्ब्रह्माऽऽरभ्य प्रयन्ति ॥ ६ ॥**

---

ऋगन्तरवत् 'तं वोदस्म मित्यस्या अप्यृचः प्रतीकमात्रग्रहणे कर्तव्ये अस्या अभिशब्दवत्त्वेन स्तुतेः कर्तव्यतया तस्य चोत्तरार्धे एव सत्वात् तदर्थं समग्राया अनुवादः ॥

१. तरोभिर्वो विदद्वसुमिन्द्रꣳ सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ १ ॥
न यं दुध्रा वरन्ते न स्थिरामुरोमदेषु शिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ २ ॥
( सा. सं. १. १. १४ )

ब्रह्म ब्राह्मणजातिरेव रथन्तरं प्रजापतिमुखात्सहोत्पत्तेः । प्रयन्त्यनेनेति प्रायणीयं प्रथममहः । तत्र ब्रह्म तस्मिन्नहनि रथन्तरस्य करणात् ब्रह्मण एव सकाशात् ब्रह्माऽऽक्रम्याऽधिष्ठाय प्रयन्ति प्रायणमुपक्रमं कुर्वन्ति ॥ ६ ॥

प्रकारान्तरेण प्रशंसति—

**इयं वै रथन्तरमस्यामेव प्रतिष्ठाय सत्रमासते ॥७॥**

इयं दृश्यमाना भूमिरेव रथन्तरं, तथा सति अस्यामेव पृथिव्यां प्रतिष्ठाय सत्रमासतेऽनुतिष्ठन्ति ॥ ७ ॥

अथ मैत्रावरुणपृष्ठस्तोत्रनिर्वर्तकं साम विधाय स्तौति—

**वामदेव्यं भवति पशवो वै वामदेव्यं पशूनामवरुध्यै प्राजापत्यं वै वामदेव्यं प्रजापतावेव प्रतिष्ठाय सत्रमासते ॥ ८ ॥**

शान्तिहेतुतया पशुसाधनत्वात् वामदेव्यस्य पशुत्वम् । 'कया नश्चित्र' इति वामदेव्याधारस्य तृचस्य प्राजापत्यत्वात् तदाश्रितं सामाऽपि प्राजापत्यमित्युक्तम् । स्पष्टमन्यत् ॥ ८ ॥

अथ तृतीयस्य पृष्ठस्तोत्रस्य साम विधाय स्तौति—

**नौधसं भवति ब्रह्म वै नौधसं ब्रह्म प्रायणीयमहर्ब्रह्मण एव तद्ब्रह्माऽऽक्रमन्ते ॥ ९ ॥**

नोधा नाम ऋषिस्तेन दृष्टं साम नौधसं तद्ब्रह्म परिबृढम् । यद्वा बृहत्प्रतिरूपकत्वेन राथन्तरेऽहनि प्रयोज्यत्वात् ब्रह्मेति व्यपदेशः । प्रायणीयमहश्च परिबृढं मुख्यत्वात् । एवं सति नौधसं भवतीति यत्तेन ब्रह्मणः सकाशादेव ब्रह्माऽऽक्रमन्ते अवलम्बन्ते ॥ ९ ॥

अथ चतुर्थस्य पृष्ठस्य साम प्रदर्श्य तच्च रथन्तरञ्चोभयं संयुज्य स्तौति—

**कालेयं भवति समानलोके वै कालेयञ्च रथन्तरञ्चेयं वै रथन्तरं पशवः कालेयमस्याञ्चैव पशुषु च प्रतिष्ठाय सत्रमासते ॥ १० ॥**

कालेयं सामाऽच्छावाकपृष्ठस्तोत्रं भवति । कालेयञ्च रथन्तरञ्चैते सामनी समानलोके समानायतने रथन्तरं यत्र प्रयुज्यते तत्र कालेयमपि प्रयोज्यमित्यर्थः । इयं खलु पृथिवी रथन्तरं साम पशवश्च कालेयं तत्साधनत्वात् ईदृशयोरुभयोः प्रयोगात् अस्याञ्चैव पृथिव्यां पशुषु

गवादिषु च प्रतिष्ठाय चिरकालं स्थित्वा सत्रमासते अनुतिष्ठन्ति॥१०॥

अस्य साम्नो निधनस्याऽहरानुरूप्यं दर्शयति—

**द्रवदिडं तथा ह्येतस्याऽह्नो रूपꣳ स्तोमः ॥ ११ ॥**

(१)हो ५ इडेति हिम्प्रगेयेन इडाशब्देन युक्तं एतत्साम तथा हि तथा खल्वेतस्य प्रायणीयस्याह्नो रूपं पूर्व्वमुपन्यस्तं तत् द्रवदिडं प्रथमस्याऽह्नो रूपमिति एतेषु चतुर्षु पृष्ठस्तोत्रेषु उक्त एव त्रिवृत् स्तोमो वेदितव्यः११

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
एकादशाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

## अथ पञ्चमः खण्डः ॥

अथाऽऽर्भवपवमानस्य स्तोत्रीया विधाय तत्र तासामानुरूप्यञ्च दर्शयति—

**"प्र सोमासो मदच्युत" इति गायत्री भवति मदवद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधात्य "या पवस्व देवयु"रित्येति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः॥१॥**

**"पवतेऽहर्य्यतो हरि"रिति बृहतो रूपं बृहदेव तदेतस्मिन्नहनि युनक्ति तद्युक्तꣳ स्व आरभन्ते ॥ २ ॥**

**"प्र सुन्वानायाऽन्धस"इति प्रवत्यो भवन्ति प्राणिनीषण्यामिव ह्येतदह "रभिप्रियाणि पवते च नोहित"इत्यभीति रथन्तरस्य रूपꣳराथन्तरꣳ ह्येतदहः ॥ ३ ॥**

(२) "प्र सोमास" इत्येषा एका स्तोत्रीया गायत्री प्रथमा भवति। तत्तृतीयसवनं तन्मदवद्वै मदयुक्तमेव रसवत् रसयुक्तं भवति तत्राऽऽशिरावनयनेन मदकररसजननात् 'विश्वे देवाः सोमस्य मत्सन्' 'ऋभवो देवाः सोमस्य मत्सन्नित्यादिनिविन्मन्त्रवर्णाच्च तृतीयसवनस्य मदहेतुत्वं गम्यते। तत्तेन मदवत्या गायत्र्याः प्रयोगेन मदवत् मदकरमे-

१. निधनमिदं तृचस्याऽन्ते द्रष्टव्यम्।

२. प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्। सुता विदथे अक्रमुः ॥ १ ॥
( सा. सं. उ. १. २. २१. १ )

व रसं तृतीयसवने दधाति, (१)"अया पवस्वे"ति अपरा स्तोत्रीया। तत्र चाऽऽकारो विद्यते। आ इति च रथन्तरस्य रूपं एति प्रेत्याशुमदिति गणनात् एतत्प्रायणीयमहश्च राथन्तरम्। अतो रथन्तररूपयुक्तमत्र परिप्रयोगार्हमित्यर्थः॥ १॥

(२)पवते हर्यत इत्यन्या स्तोत्रीया। तत्र च पवत इति वर्त्तमानकालाभिधायिना पवनस्य स्थितिः प्रतीयते। तच्च बृहतो रूपं उपस्थितं द्वितीयस्याऽह्नो रूपमित्यादिना बृहतस्तद्रूपत्वस्योक्तत्वात्। तत्तेन स्तोत्रीयाकरणेन बृहत्सामैव एतस्मिन् प्रथमेऽहनि युनक्ति पूर्वस्मिन्नहनि युक्तं सम्बद्धं तत्साम श्वः परेद्युरारभन्ते प्रयोक्तुं, परिगृह्णन्ति, प्रशब्दवत्वेन स्तौति। (३)"प्रसुन्वानाय"त्येषाऽपरा स्तोत्रीया। यद्यप्येकर्चमेव तत्र सामद्वयं गौरीवीतं गौतमञ्चाऽत्र गीयते, तथाऽपि उत्तराभ्यां सह मिलित्वैतत्प्रशस्यते प्रवत्यः प्रशब्दयुक्ता भवन्ति तत्प्रायणीयमहः प्रणिनीषेण्यमिव हि प्रणतव्यत्वेनेष्टं खलु 'अभिप्रियाणी'त्यपरः स्तोत्रीयः स्तृचः। अभीति रथन्तरस्य रूपं, तद्योन्या'मभित्वा शूरे'ति दृष्टत्वात्। गतमन्यत्॥ १॥

अथाऽग्निष्टोमसाम्नः स्तोत्रीयां दर्शयति—

**"यज्ञा यज्ञा वो अग्नय" इत्यग्निर्वै यज्ञो यज्ञ एव तद्यज्ञं प्रतिष्ठापयति॥ २॥**

यज्ञा यज्ञाव इत्यस्मिन् प्रगाथे यज्ञायज्ञेति द्वौ यज्ञशब्दौ दृश्येते। तयोरेकः यज्ञशब्दोऽग्निवाचकः, अपरस्तु क्रियाया इत्यभिप्रायेण व्याचष्टे-अग्निर्वै यज्ञ इति। योऽयं यज्ञः यज्ञशब्दाभिधेयः क्रतुः सोऽग्निर्वै अग्निरेव तन्निष्पाद्यत्वात् यज्ञशब्दस्योपरि पुनर्यज्ञशब्दोच्चारणात् यज्ञे संस्तुते अग्नावेव तत्तेन यज्ञं प्रतिष्ठापयति॥ २॥

अथ प्रसोमास इत्याद्यायां स्तोत्रीयायां गायत्रं साम विधाय इमे वै लोका गायत्रं व्यावृद्गेयमित्यादिकं तद्ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम्॥ ३॥**

---

१. अया पवस्व देवयु रेभन्पवित्रं पर्येषि विश्वतः। मधोर्धारा असृक्षत॥ १॥

२. पवते हर्यतो हरिरति ह्वरांसि रंह्या। अभ्यर्षस्तोतृभ्यो वीरवद्यशः॥ २॥

३. प्रसुन्वानायाऽन्धसो मर्तो न वष्ट तद्वचः।
अपश्वानमराधसꣳ हता मखं न भृगवः॥ ३॥

(सा. सं. पू. ६. २. १. ९. सा. सं. उ. १. २. ११)

व्याख्यातमेतत् ॥ ३ ॥

अथ तस्यामेव स्तोत्रीयायां सामान्तरं विधाय निधनद्वारा तत्प्रतिष्ठाहेतुरिति स्तौति—

**सꣳहितं भवति द्व्यक्षरणिधनं प्रतिष्ठायै प्रतिष्ठायैव सत्रमासते ॥ ४ ॥**

गायत्रं संहितञ्चैते द्वे अपि च सामनी एकर्चे तत्र संहितं द्व्यक्षरणिधनं द्वे अक्षरे निधनं यस्य तत्तथोक्तं ऊ२ ३ ४ ५ मुः इति हि तस्य निधनमधीयते । तच्च मनुष्यपादद्वयसाम्यात् प्रतिष्ठायै प्रतिष्ठानाय भवति । एवमनेन निधनेन प्रतिष्ठायैवाऽनन्तरं प्रतिष्ठिताः यजमानाः सत्रमासते ॥ ४ ॥

'अया पवस्वे' त्यस्यां गातव्यं साम विदधाति—

**सफं भवति ॥ ५ ॥**

स्पष्टोऽर्थः ॥ ५ ॥

एतत्सामनिर्वचनद्वारेण लोकत्रयप्राप्तिहेतुरेतत्सामेति दर्शयति—

**सफेन वै देवा इमान् लोकान् समाप्नुवन् यत्समाप्नुवꣳस्तत्सफस्य सफत्वमिमानेवैतेन लोकान् समाप्य सत्रमासते ॥ ६ ॥**

सफेन खलु साम्ना साधनेन देवाः पुरा इमान् पृथिव्यादिकान् लोकान् समाप्नुवन् सम्यगाप्तवन्तः यद्यस्मात्समाप्नुवन् तत्तस्मात् समाप्तिसाधनत्वात् सफस्य साम्नः सफत्वं सफमिति संज्ञा सम्पन्ना । सम्पूर्वादाप्नोतेः सफशब्दो व्युत्पादनीयः। पृषोदरादित्वाद्वर्णविकारः। यस्मादेवं तस्मादिदानीन्तना अपि यजमानाः एतेन सफेन साम्ना इमानेव लोकान् समाप्य सम्यगवाप्य सत्रमासते ॥ ६ ॥

"पवते हर्यतो हरि"रित्यस्यां गातव्यं साम विदधाति—

**आक्षारं भवति ॥ ७ ॥**

स्पष्टोऽर्थः ॥ ७ ॥

इदं साम भ्रातृव्यापनोदनहेतुरिति प्रतिपादयिषुराह—

**अष्टौ वा एताः कामदुघा आसꣳस्तोमेका समशीर्यंत सा कृषिरभवदृध्यतेऽस्मै कृषौ य एवं वेद ॥ ८ ॥**

पुरा खलु एता गायत्रीत्रिष्टुबाद्याः अष्टौ अष्टसंख्याः सत्यः कामदुघाः कामस्य काम्यमानस्याऽभिमतस्य सर्वस्य फलस्य दोग्ध्र्यो गो-

रूपा आसन् । तासां मध्ये एका समशीत्यंत संशीर्णा प्रध्वस्ताऽभूत् । ततः सा कृषिः व्रीहियवादिहेतुः कर्षणाक्रियाऽभूत् । अत इदानीं गायत्र्यादीनि चतुरक्षराधिकानि सप्तैव छन्दांस्युपलभ्यन्ते । एवं कृषेरुत्पत्तिं यो वेद जानाति तस्मै जानते कृषौ कर्षणक्रियायां ऋध्यते ऋद्धिः समृद्धिर्भवति ॥ ८ ॥

अथ प्रतिपित्सितं भ्रातृव्यापनोदनमेव दर्शयति—

**तासु देवासुरा अस्पर्द्धन्त ते देवा असुरान् कामदुघाभ्य आक्षारेणाऽनुदन्त नुदते भ्रातृव्यं कामदुघाभ्य आक्षारेण तुष्टुवानः ॥ ९ ॥**

तासु पूर्वोक्तासु कामदुघासु देवासुराः देवाश्चाऽसुराश्चाऽस्पर्द्धन्त परस्परं स्पर्द्धां कृतवन्तः । ते स्पर्द्धमाना देवाः अनेनाऽऽक्षारेण साम्ना तानसुरान् कामदुघाभ्योऽनुदन्त प्रैरयन् ताभिरसुरान्वियोजितवन्त इत्यर्थः । यत एवं अतो हेतोरिदानीमपि आक्षारेण तुष्टुवानः स्तुतवान् यजमानो भ्रातृव्यं शत्रुं कामदुघाभ्यः सकाशात् नुदते प्रेरयति (१)निर्गमयति ॥ ९ ॥

अथ प्रसङ्गादिदं साम कस्यचिद्यजमानविशेषस्य ब्रह्मसामत्वेन विधित्सुः(२)अन्वर्थां आक्षारसंज्ञां निर्वक्ति—

**एभ्यो वै लोकेभ्यो रसोऽपाक्रामत्तं प्रजापतिराक्षारेणाऽऽक्षारयद्यदाक्षारयत्तदाक्षारस्याऽऽक्षारत्वम् ॥ १० ॥**

एभ्यस्त्रिभ्यो लोकेभ्यः सकाशात् पुरा रसः क्षीराद्यात्मकः अपाक्रामत् अपागच्छत् । तमपक्रान्तं रसं प्रजापतिः प्रजानां पालयिता देवः आक्षारेणा नेनाऽऽक्षारयत् आसमन्तादासिक्तवान् । यद्यस्मादनेनाऽऽक्षारयत् तत्तस्मादस्य साम्न आक्षारमिति नाम सम्पन्नम् ॥ १० ॥

अस्त्वेवम्, किं ततः ? इत्याह—

**तस्माद्यः पुरा पुण्यो भूत्वा पश्चात्पापीयान् स्यादाक्षारं ब्रह्म साम कुर्वीताऽऽत्मन्येवेन्द्रियं वीर्यꣳ रसमाक्षारयति ॥ ११ ॥**

यस्मात् आक्षारणसाधनमेतत्साम तस्माद्यो यजमानः पुरा पूर्वस्मिन् काले पुण्यः धनादिभिः श्रेष्ठः भूत्वा पश्चात्परस्मिन् काले पापीयान् पापिष्ठो

१. विगमयति इति क. पु । २. तदर्थं इति. ख. पु.

वरिष्ठतमः स्यात् भवेत् स आक्षारं साम ब्रह्मसाम कुर्वीत । कृतेन च तेन साम्ना आत्मनि स्वस्मिन्निमामिन्द्रियं इन्द्रस्य सम्बन्धि वीर्यं रसं पयःप्रभृतिकञ्च आक्षारयति (१)आश्चोतयति ॥ ११ ॥

अथ प्रकृतमेवाऽनुसरन् लफमाक्षारञ्चोभयं संयुज्य धृतिहेतुत्वेन स्तौति—

**जनुषैकर्चौ भवतोऽह्नो धृत्यै यद्वा एतस्याऽह्नोऽधृतं तदेताभ्यां दाधार ॥ १२ ॥**

जनुषा जन्मना स्वभावतः एतौ सामविशेषौ एकर्चौ एकस्यामेवर्चि गेयौ भवतः । तथा चोभयोः साम्यात सामद्वयमपि पादद्वयवत् अस्य प्रायणीयस्याऽह्नो धृत्यै धारणाय भवति । एतदेव विव्रियते-यद्वा इत्यादिना । यत् खलु एतस्य प्रायणीयस्याऽह्नो ऽधृतमधारितं अनाश्रितं भवति तदेताभ्यां सामभ्यां दाधार स्तोता धारयति ॥ १२ ॥

अथ "प्रसुन्वानाये"त्यस्यामृचि गौरीवितगौतमे गातव्ये तत्राऽऽद्यं विदधाति ।

**गौरीवितं भवति ॥ १२ ॥**

स्पष्टम् ॥ १३ ॥

अहीनेषु क्रतुषु पूर्वोत्तरयोरह्नोरिदं साम सन्धानहेतुरिति दर्शयिष्यन् तदर्थमस्य साम्नोऽतिरिक्ततामाह—

**गौरीवितिर्वा एतच्छाक्त्यो ब्राह्मणोऽतिरिक्तमपश्यत्तद्गौरीवितमभवत् ॥ १४ ॥**

(२)शाक्त्यः शक्तिगोत्रः गौरीवितिर्नाम ऋषिः पुरा ब्रह्मणः परमेष्ठिनः शब्दब्रह्मात्मिकाया वाचो विभज्यमानायाः एतत्सामातिरिक्तमपश्यत् तत्साम गौरीविताख्यं अभवत "देवा वै वाचं व्यभजन्त तस्या यो रसोऽत्यरिच्यत । तद्गौरीवितमभव"दिति हि ब्राह्मणम् ॥१४॥

किमतः? तदाह—

**अतिरिक्तं वा एतदतिरिक्तेन स्तुवन्ति यद्गौरीवितेनाहीनाच्छ्वस्तनवद्भवत्यपि प्रजाया उपक्लृप्तम् ॥ १५ ॥**

---

१. आसेचयति इति क. पु.

२. गुरीवितस्याऽपत्यं गौरीवितिः । शाक्त्यनामा इति ख. पु. तत् परमेष्ठिनोऽतिरिक्तं गुरिवीतापत्यशाक्त्यदृष्टं साम । अतस्तस्य गौरीवितमिति नाम सम्पन्नम् इति पाठभेदो दृश्यते ख. पु ।

एतद्गौरीवितं उक्तप्रकारेणाऽतिरिक्तं वै आधिकमेव खलु अतोऽतिरिक्तेनाऽधिकेन अत्र स्थित्वैव अहरन्तरं व्याप्तुं शक्तेन साम्ना स्तुवन्ति अहीनानहःसमूहान् "अह्नः समूहे खो वक्तव्यः" । यद्गौरीवितेन साम्नाऽहीनान् सन्तनोति तेन प्रजायाः पुत्रपौत्रादिरूपायाः उपक्लृप्तं उपकल्पितं सम्पादितं धनादिकं श्वस्तनवत् श्वः परेद्युरपि वर्त्तमानं भवति सर्वदाऽवस्थितं भवति । न कदाचित् क्षीयत इत्यर्थः ॥ १५॥

अथैतत्प्रजातिहेतुत्वेन स्तौति—

**वृषा वा एतद्वाजिसाम वृषभो रेतोधा अद्य स्तुवन्ति श्वः प्रजायते ॥ १६ ॥**

वाजि वाजवत् बलवद्वा एतत्साम वृषा वै वर्षणसमर्थः पुङ्गवः । स च वृषभो रेतोधा रेतसः पुत्रपौत्राद्युत्पत्तिहेतुभूतस्य वीर्यस्याऽऽधाता भवति । अतो वृषसंस्तुतेनाऽनेन साम्ना अहीनेषु अद्याऽस्मिन्नहनि स्तुवन्ति । तेन च रेत एव निषिक्तं भवति । श्वः परेद्युः प्रजायते तदेव निषिक्तं रेतः प्रजारूपेणोत्पद्यते ॥ १६ ॥

अथाऽस्याऽऽधारभूताया ऋचश्छन्दोद्वाराऽपि प्रजाहेतुत्वमाह—

**अनुष्टुभि छन्दसां क्रियतेऽनुष्टुब्भि छन्दसां योनिः स्वायामेव तद्योनौ रेतो धत्ते प्रजात्यै ॥ १७ ॥**

छन्दसां गायत्र्यादीनां मध्ये अनुष्टुभि अनुष्टुप्छन्दस्कायामृचि "प्र सुन्वानाये"त्यस्यां क्रियते । तत्कस्य हेतोः ? हि यस्मात् छन्दसां गायत्र्यादीनामनुष्टुप् योनिर्भवति । "अनुष्टुप् च वै सप्तदशश्च समभवता"मित्यादिना छन्दसामनुष्टुप्योनित्वं पूर्वमेव प्रदर्शितम् । तत्तस्मात्सर्वच्छन्दसां योनावनुष्टुभि गौरीवितस्य करणात् स्वायां स्वकीयायां आत्मीयायामेव योनौ रेतो धत्ते आधत्ते प्रजात्यै पुत्रादिरूपेणोत्पत्त्यै ॥१७॥

एतद्वेदनं प्रशंसति—

**प्रजायते बहुर्भवति य एवं वेद ॥ १८ ॥**

स्पष्टोऽर्थः ॥ १८ ॥

अधुनाऽस्य साम्नोऽहःसमूहे प्रयुज्यमानस्य पूर्वोत्तरयोरह्नोः सन्धायकत्वं दर्शयति—

**ह्युदासं भवत्येतौ वा उदासौ स्वर्गस्य लोकस्याऽवसानदर्शौ पूर्वेण पूर्वमहः सꣳस्थापयन्त्युत्तरेणोत्तरमहरभ्यातिवदन्ति ॥ १९ ॥**

एतत्साम द्व्युदासं द्वावुदासावुत्क्षेपौ यस्मिन् तथाविधं भवति। ततश्च किम्? एतौ खलूदासौ स्वर्गस्य लोकस्याऽवसानदर्शौ पारदृश्वानौ तयोः पूर्वेण पूर्वमनुष्ठीयमानमहः संस्थापयन्ति परिसमापयन्ति, उत्तरेणोदासेन उत्तरमागाम्यहरभिलक्ष्याऽतिवदन्ति इदमहरतिक्रम्य वदन्ति ॥ १९ ॥

अथैतेनोदासद्वयेन यजमानानां स्वर्गलोकाध्यवसानं भवतीति दर्शयति—

**तद्यथाऽदः पूर्वेद्युः स्पष्टं तृणोदकमन्ववस्यन्तो यन्त्येवमेव ताभ्याᳫं स्वर्गं लोकमन्ववस्यन्तो यन्ति ॥२०॥**

तदिति वाक्यालङ्कारे। यस्मादेतावुदासौ स्वर्गस्य लोकस्याऽवसानदर्शौ, अतोऽस्माद्धेतोः यथा पूर्वेद्युः पूर्वस्मिन् दिवसे यागकाले तृणोदक समीपस्थानि तृणान्युदकानीति चाऽन्ववस्यन्तः अध्यवस्यन्तो यन्ति, एवमेवैताभ्यामुदासाभ्यां यजमानाः स्वर्गं लोकमन्ववस्यन्तः अनुक्रमेण पश्यन्तो यन्ति गच्छन्ति ॥ २० ॥

अथाऽस्यामेव स्तोत्रीयायां सामान्तरं विधत्ते—

**गौतमं भवति ॥ २१ ॥**

गौतमेन दृष्टं साम गौतमं एतदप्यत्रैकर्चम् ॥ २१ ॥

तदेतत् स्वर्गे चिरकालस्थितिहेतुत्वेन स्तौति—

**सामाऽऽर्षेयवत् स्वर्गाय युज्यते स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ २२ ॥**

आर्षेयवत् ऋषिसम्बन्धवत् साम स्वर्गाय युज्यते स्वर्गप्राप्त्यै युक्तं भवति। ततोऽनेन तुष्टुवानः स्तुतवान् स्वर्गात् लोकान्न च्यवते न प्रच्युतो भवति ॥ २२ ॥

अथ सामान्तरस्य पूर्वमुक्तं ब्राह्मणमत्राऽप्यतिदिशति—

**यदु चैवाऽऽनुष्टुभस्य मध्ये निधनस्य ब्राह्मणं तदु चैतस्य ॥ २३ ॥**

प्रकृतौ हि "पुरोजितीवो अन्धस" इत्यस्मिन्नानुष्टुभे तृचे श्यावाश्वान्धीगवे द्वे सामनी विहिते। अत्रान्धीगवं मध्येनिधनं दशाक्षरम्। "मध्यतो निधनमुपयन्ती"ति तत्र श्रवणात्। आनुष्टुभस्य अनुष्टुभि क्रियमाणस्य मध्येनिधनस्याऽऽन्धीगवस्य यदु चैव यदेव च ब्राह्मणं 'मध्येनिधनमैडं भवत्येतेन वै तृतीयसवनं प्रतिष्ठित'मित्यादिकं,

तदु तदेव चैतस्य गोतमस्याऽपि ब्राह्मणं तत्र प्रतिपादितं सर्वं अनेनाऽपि शेषत्वेनाऽन्वयित इत्यर्थः ॥ २३ ॥

अथ "अभिप्रियाणी"ति तृचे गेयं साम विदधाति—

**कावं भवति ॥ २४ ॥**

स्पष्टोऽर्थः ॥ २४ ॥

अथैतल्लोकप्राप्तिहेतुरित्याह—

**लोकबिन्दु साम विन्दते लोकं कावेन तुष्टुवानः ॥२५॥**

लोकबिन्दु लोकस्य लम्भकं एतत्साम। अतोऽनेन कावेन तुष्टुवानः स्तुतवान् लोकमभिलषितं स्थानं विन्दते विदल्लृलाभ इत्यस्माद्धातोः बिन्दुरिच्छुरिति उप्रत्ययान्तो निपातितः ॥ २५ ॥

अस्य निधनं प्रदर्श्य स्तौति—

**स्वारमु स्वरेण स्वरेण हि देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते स्वरेणैव तद्देवेभ्योऽन्ततोऽन्नाद्यं प्रयच्छति ॥२६॥**

स्वरेण स्वरितेन स्वारं स्वरनिधनञ्चैतद्भवति ततः किम्? उच्यते-स्वरेण स्वर्य्यमाणेन वषट्कारेण स्वरितान्तेन स्वाहाकारेण वा खलु देवेभ्यः अन्ततो मन्त्रावसानेऽन्नाद्यं अत्तुं योग्यञ्चरुपुरोडाशादिकमन्नं प्रदीयते। तत्तस्मादत्रापि अन्ततः अहरवसाने तृतीयसवने देवेभ्यः स्वरेणैव कावसम्बन्धिना क्रियमाणेनाऽन्नाद्यं देवेभ्यः प्रयच्छति ॥२६॥

एवमाभिविकस्य त्रिवृत्स्तोमस्य नवस्तोत्रीयास्तत्रत्यानि सामानि च विहितानि। अथाऽग्निष्टोमसाम विधत्ते—

**यज्ञायज्ञीयं भवति ॥ २७ ॥**

स्पष्टम् ॥ २७ ॥

तदेतत् स्तौति—

**वाग्यज्ञायज्ञीयं वाचि यज्ञः प्रतिष्ठितो वाच्येव तद्यज्ञमन्ततः प्रतिष्ठापयन्ति तं वाचोऽधि श्व आरभन्ते ॥२८॥**

वाङ्गिनिधनत्वाद्यज्ञायज्ञीयं साम वागात्मकम्। वाचि च वेदात्मिकायां यज्ञः प्रतिपाद्यत्वेन प्रतिष्ठितः। यस्मादेवं तस्मादन्ततोऽहरवसाने आश्रयभूतायां वाच्येव यज्ञं प्रतिष्ठापयन्ति निदधाति तं पूर्वेद्युः प्रतिष्ठापितं यज्ञं वाचोऽधि वाचः सकाशादेव श्वः परेद्युरारभन्ते पुनरावर्त्तते ॥ २८ ॥

तस्याऽग्निष्टोमसाम्नः स्तोमक्लृप्तिं प्रदर्श्य स्तौति—

**त्रिवृदेव स्तोमो भवति तेजसे ब्रह्मवर्चसाय ॥ २९ ॥**

गतार्थः ॥ २९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
एकादशाध्यायस्य पञ्चमः खण्डः ॥

---

## अथ षष्ठः खण्डः ॥

त्रिवृदग्निष्टोमस्य दाशरात्रिकस्य प्रथमस्याऽह्नः स्तोमक्लृप्तिर्विहिता। अथ पञ्चदशस्तोमकस्य उक्थ्य द्वितीयस्याऽह्नः स्तोमक्लृप्तिरभिधीयते। तत्र बहिष्पवमानस्य प्रतिपत्तृचं विदधाति—

**"पवस्व वाचो अग्रिय" इति द्वितीयस्याऽह्नः प्रतिपद्भवति ॥ १ ॥**

प्रतिपद्यते प्रारभ्यतेऽनयेति प्रतिपत्। पवस्व वाचो अग्रिय इति प्रथमतृच इत्यर्थः ॥ १ ॥

वृत्तवर्तिष्यमाणयोरह्नोः सन्धानहेतुरित्येतत् स्तौति—

**पवस्वेति वै राथन्तरꣳ रूपमग्रिय इति बार्हतमुभे रूपे समारभते द्विरात्रस्याऽविस्रꣳसाय ॥ २ ॥**

अस्यामृचि यत्पवस्वेति पवनप्रतिपादकं पदं तत् खलु राथन्तरं रथन्तरसम्बन्धिरूपं युञ्जानं प्रथमस्याऽह्नोरूपमित्यादिना तद्रूपस्योक्तत्वात्। अग्रिय इति पदं तु बार्हतं बृहतो रूपं अग्रे भवोऽग्रियः बृहच्च रथन्तरादग्रे जातत्वादग्रियं भवतीति शब्दसामान्येन तद्रूपता। तथा च पवस्व वाचो अग्रिय इति प्रतिपदा बृहद्रथन्तरयोः साम्नोः स्वरूपे स्वभूते उभे द्वे अपि रूपे समारभते परिगृह्णाति। द्विरात्रस्य पूर्वमनुष्ठितस्याऽह्नोऽस्याऽनुष्ठास्यमानस्य च अहर्द्विरात्रस्य द्व्यहस्याऽविस्रंसाया ऽशैथिल्याय सन्धानायेत्यर्थः। राथन्तरं हि पूर्वमहः। अत्र च तद्रूपान्वयात् सन्धानं भवति ॥ २ ॥

अथ तस्यैव बहिष्पवमानस्य द्वितीयं तृचं विधत्ते—

**'पवस्वेन्दो वृषासुत' इत्यनुरूपो भवति वृषण्वद्वा एतदैन्द्रं त्रैष्टुभमहर्यत् द्वितीयं तदेव तदभिवदति ॥ ३ ॥**

"पवस्वेन्दो वृषासुत" इति तृचोऽनुरूपाख्यो द्वितीयो भवति। तदेतत् द्वितीयमहस्तदैन्द्रं इन्द्रदेवत्यं त्रैष्टुभं त्रिष्टुप्छन्दस्कं वृषण्वत् वृषशब्दयुक्तं च भवति। वृषवद्रूत्रहवद्रयिमद्विश्ववदुपास्थितामिति रूपस्य द्वितीयेऽहनि परिगणितत्वात्तदेव वृषण्वद्रूपम्। तत् पवस्वेन्दो वृषा सुत इति मन्त्रवाक्यं अभिवदति आभिलक्ष्य ब्रवीति ॥ ३ ॥

अथाऽस्य तृचस्याऽनुरूप इति संज्ञां निर्वक्ति—

**पूर्वमु चैव तद्रूपमपरेण रूपेणाऽनुवदति यत्पूर्वं रूपमपरेण रूपेणाऽनुवदति तदनुरूपस्याऽनुरूपत्वम् ॥ ४ ॥**

"पवस्व वाचो अग्रिय" इति प्रथमतृचेन प्रतिपाद्यं यदर्थरूपं पूर्वमु च पूर्वभावि, तदेव च रूपं अपरेण द्वितीयतृचप्रतिपाद्येन पश्चाद्भाविना रूपेणाऽनुवदति तृचः प्रतिपादयति। इत्थम्भावे तृतीया। यद्यस्मात् पूर्वं रूपं अपरेण रूपेणाऽनुवदति तत्तस्मादनुवाद्यरूपवाचकत्वादनुरूपस्य द्वितीयस्य तृचस्याऽनुरूपत्वं अनुरूप इति संज्ञा ॥ ४ ॥

एतद्वेदनफलमाह—

**अनुरूप एनं पुत्रो जायते य एवं वेद ॥ ५ ॥**

य एवमनुरूपत्वं वेद जानाति एनमनुरूपः अस्य स्वानुरूप आत्मीयैर्गुणैः सदृशः पुत्रो जायते ॥ ५ ॥

विहितं तृचद्वयं सहाऽनूद्य स्तौति—

**स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुध्यै ॥ ६ ॥**

उक्तयोः स्तोत्रीयानुरूपयोस्तृचयोः करणं प्राणापानानां प्राणवायूनामपानवायूनाञ्च ऊर्द्ध्वाधोवर्त्तिनामवरुध्यै अवरोधनाय शरीरे निरोधनाय भवति ॥ ६ ॥

अथ विहितमनुरूपं तृचं अर्थवादसम्बन्धार्थं विधित्सुः तेन तृचद्वयेन संयुज्य विधाय स्तौति—

**वृषण्वन्तस्तृचा भवन्तीन्द्रियस्य वीर्य्यस्याऽवरुध्यै ॥ ७ ॥**

'वृषा सोमः, वृषा ह्यसी'ति द्वौ तृचौ, पूर्वोक्तः 'पवस्वेन्दो वृषा सुत' इति तृचश्चेत्येते वृषण्वन्तः वृषशब्दयुक्तास्त्रयस्तृचा भवन्ति। वृषशब्दात् सेचनसामर्थ्यं प्रतीयते। अत एतत्तृचत्रयं इन्द्रियस्य रेतोरूपवीर्य्यस्यावरुध्यै अवरोधनाय भवति ॥ ७ ॥

अथ 'पवमानस्य ते वय'मिति बहिष्पवमानस्याऽन्त्यं तृचं विधत्ते—

**तृच उत्तमो भवति ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

तदेतत् प्रतिपत्सारूप्येण स्तौति—

**येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ९ ॥**

येनैव प्राणेन प्रयन्ति प्रारभन्ते तमभिलक्ष्य उद्यन्ति समापयन्ति प्रथमोत्तमयोस्तृचयोः पवमानसोमदेवताकत्वात्तृचात्मनैवाऽवस्थानाच्चो-भयोः सारूप्यमित्यैकयव्यपदेशः ॥ ९ ॥

अथाऽस्य स्तोत्रस्य स्तोमक्लृप्तिं विदधाति—

**पञ्चदश एव स्तोमो भवति ॥ १० ॥**

पञ्च तृचा अनुक्रान्तास्ते पञ्चदशस्तोत्रीयास्तृचा भवन्तीति पञ्च-दश एव स्तोमोऽस्य भवति ॥ १० ॥

तदेतत्प्रतिष्ठाहेतुरित्याह—

**ओजस्येव तद्वीर्ये प्रतितिष्ठत्योजो वीर्यं पञ्चदशः ॥ ११ ॥**

तत्तथा सति पञ्चदशस्तोमे कृते सति ओजस्येव ओज इति बल-नाम बले बलात्मक एव वीर्ये प्रतितिष्ठति प्रतिष्ठितो भवति । कुतः ? पञ्चदशः स्तोमो यतः ओजः बलात्मकं वीर्यं रेतोरूपं प्रजायते वी-र्यवतोऽङ्गादुत्पन्नत्वात् ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
एकादशाध्यायस्य षष्ठः खण्डः ॥

## अथ सप्तमः खण्डः ॥

अथाऽऽज्यानि विधित्सुराह—

**उभाभ्यां वै रूपाभ्यां बहिष्पवमान्यो युज्यन्ते
यत्सामा स्तोमो भवति तदाज्येषु ॥ १ ॥**

उभाभ्यां बार्हतराथन्तराभ्यां रूपाभ्यां खलु बहिष्पवमान्यः बहि-ष्पवमानस्तोत्रीया युज्यन्ते । 'पवस्वे'ति वै राथन्तरं रूपम्, 'अग्निय' इति बार्हतमुभे रूपे समारभत इति प्रागुक्तम् । आज्येषु आज्यस्तोत्रेषु तत्तस्यैव साम्नो रूपं भवति यत्सामा यत्सामपृष्ठकः स्तोमः, स्तोमवान् यागो भवति । अस्मिन् द्वितीयेऽहनि होतुः पृष्ठस्तोत्रे यद्बृहत्साम क्रियते तस्यैव साम्नो रूपमाज्येषु भवति नाऽन्यस्येत्यर्थः ॥ १ ॥

किं तद्रूपं यत् बृहतोऽसाधारण्येनाऽऽज्येषु भवेदित्याशङ्क्य तद्विशि-ष्टान्येवाऽऽज्यानि विधत्ते—

**निराहोपस्थितान्याज्यानि भवन्ति ॥ २ ॥**

निराह्वो निराह्वावो निष्कृष्य सम्बोध्याऽऽह्वानं तदुपस्थितं समीपे स्थितं सार्थकम्, न तु शब्दतः, एतत् येषु तानि निराह्वोपस्थितानि तादृशान्याज्यस्तोत्राणि भवन्ति । उपस्थितत्वलिङ्गञ्च बृहत एवाऽसाधारणं रूपं न रथन्तरस्येति 'उपस्थितं द्वितीयस्याऽह्नो रूप'मित्यादिना प्रत्यपादि ॥ २ ॥

कानि पुनस्तथाविधान्याज्यानि ? तानि दर्शयति—

**अग्निं दूतं वृणीमहे मित्रं वयꣳ हवामह इन्द्रमिद्गाथिनो बृहदिन्द्रो अग्ना नमो बृहदिति बार्हतमेव तद्रूपं निर्द्योतयति स्तोमः ॥ ३ ॥**

एषु चतुर्ष्वपि उपस्थितात्मकं बार्हतं रूपं दृश्यते । इन्द्रमिद्गाथिनो बृहत्' 'इन्द्रो अग्ना नमो बृह'दिति बृहच्छब्दो दृश्यते । स च शब्दसामान्यात् बृहत्सामाऽवगमयति । तत्तेन बार्हतमेव रूपं निर्द्योतयति प्रकाशयति स्तोमश्चामीषामुक्तः पञ्चदश एव भवति । एवं प्रातःसवनिकेषु पञ्चसु स्तोत्रेषु उक्तासु स्तोत्रीयासु प्राकृतमेव गायत्रं साम गातव्यम् सामान्तरस्य विध्यभावात् ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
एकादशाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

## अथाऽष्टमः खण्डः ॥

अथ माध्यन्दिनपवमानस्य त्रयः स्तोत्रीयास्तृचा विधित्सिताः तत्र प्रथमं विदधाति—

**वृषा पवस्व धारयेति गायत्री भवत्यह्नो धृत्यै ॥ १ ॥**

'वृषा पवस्व धारये'ति गायत्री गायत्रच्छन्दस्का प्रतिपद्भवति प्रथमस्तृचो भवतीत्यर्थः । धारयेति शब्देन धृञ् धारण इत्यस्य धातोः प्रत्यभिज्ञानात् एषा प्रतिपत् अस्य द्वितीयस्याऽह्नो धृत्यै धारणाय स्थैर्याय भवति ॥ १ ॥

ननु गायत्रं वै प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयमित्यादिना द्वितीयस्याऽह्नस्त्रैष्टुभत्वं प्रतीयते । कुतस्तत्र गायत्र्यो विनियोज्यन्त इति? तत्राऽऽह—

**वृषण्वत्यस्त्रिष्टुभो रूपेण त्रैष्टुभꣳ ह्येतदहः ॥ २ ॥**

इमा विहिता गायत्र्यो वृषण्वत्यो वृषच्छब्दयुक्ता भवन्ति । वृषण्वत्त्वञ्च त्रिष्टुभो रूपम्, तस्मात्त्रिष्टुभो रूपेण युक्तत्वात् द्वितीयेऽहनि विनियोगार्हाः । एतदहश्च त्रैष्टुभं हि त्रिष्टुप्सम्बद्धम् । हिशब्दः प्रसिद्धौ । सा च पूर्वमेव दर्शिता ॥ २ ॥

अथाऽपरं स्तोत्रीयं तृचं विदधाति—

**पुनानस्सोमधारयेति धृत्यै ॥ ३ ॥**

पूर्ववद्योज्यम् ॥ ३ ॥

अथाऽन्यं स्तोत्रीयं तृचं विधत्ते--

**वृषाशोणो अभिकनिक्रदद्गा इति ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

अस्य त्रैष्टुभे द्वितीयेऽहनि सङ्गतिमाह--

**वृषण्वत्यास्त्रिष्टुभो रूपेण समृद्धा वृषण्वद्वा एतदैन्द्रं त्रैष्टुभमहर्यत् द्वितीयं तदेव तदभिवदति ॥ ५ ॥**

यत् वृषा शोण इत्याद्या वृषण्वत्यो वृषशब्दयुक्ताः अतस्त्रिष्टुभो रूपेण समृद्धाः सम्पूर्णाः एतदहश्चैन्द्रं इन्द्रदेवत्यं त्रैष्टुभं त्रिष्टुप्छन्दस्कं वृषण्वद्धि वृषच्छब्दयुक्तमेव वृषवद्वृत्रहवदित्यादिना वृषशब्दस्य तद्रूपत्वेनोक्तत्वात् । दशरात्रस्य यत् द्वितीयमहः एतदिति सम्बन्धः तद्वृषा शोण इत्यादिकं मन्त्रवाक्यं तदेव वृषण्वदेव द्वितीयमहरभिवदति अभिलक्ष्य ब्रवीति ॥ ५ ॥

अथ वृषा पवस्वेति प्रथमे तृचे गातव्यं साम विधाय पूर्वमाम्नातं तद्ब्राह्मणञ्चातिदिशति ।

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ६ ॥**

सिद्धमेतत् ॥ ६ ॥

अथाऽस्मिन्नेव तृचे पुनरावृत्ते गातव्यं सामान्तरं दर्शयति--

**यौक्ताश्वं भवति ॥ ७ ॥**

युक्ताश्वेन दृष्टं साम यौक्ताश्वम् ॥ ७ ॥

अथाऽस्य कामप्राप्तिहेतुतां विवक्षुराख्यायिकामाह—

**युक्ताश्वो वा आङ्गिरसः शिशू जातौ विपर्य्यहरत्तस्मान्मन्त्रोऽपाक्रामत्स तपोऽतप्यत स एतद्यौक्ताश्वमपश्यत्तं मन्त्र उपावर्त्तत तद्वाव स तर्ह्यकामयत कामसनि साम यौक्ताश्वं काममेवैतेनाऽवरुन्धे ॥ ८ ॥**

पुरा शुकाश्वो नामाऽऽङ्गिरसोऽङ्गिरोगोत्रजात ऋषिः जातौ जातमात्रौ शिशू बालौ स्तनन्धयौ विपर्य्यहरत विपरिहृतवान् बाधितवान्। अकार्य्यस्य करणात् तस्मादृषेर्मन्त्रो वेदोऽपाक्रमदपागमत्। स मन्त्ररहित्येन हीनः सन् पुनस्तत्प्राप्तये तपोऽतप्यत प्रायश्चित्तात्मकं तपस्तेपे। तेन च तपसा विशुद्धः स ऋषिः एतच्छौकाश्वं सामाऽपश्यत्। यस्मात् एतस्य साम्नो द्रष्टारं तमपक्रान्तो मन्त्रः पुनरुपावर्त्तत, तत् ततोऽनन्तरं तर्हि तस्मिन् काले स खल्वकामयत। किमिति? यदेतच्छौकाश्वं एतत्साम कामसनि कामप्रदम्। षणु दाने।'छन्दसि वनसनरक्षिमथा'मितीन्प्रत्ययः। तस्मादनेन साम्ना यः स्तौति स कामं काम्यमानमभिलषितमेव फलं एतेन साम्नाऽवरुन्धे लभते ॥ ८ ॥

अथ पुनानस्सोमधारयेति तृचे द्विरभ्यस्ते द्वे सामनी क्रमेण गेये दर्शयति—

**आयास्ये भवतः ॥ ९ ॥**

अयास्येन दृष्टे सामनी आयास्ये। प्रथममिडानिधानमायास्यम्, द्वितीयं त्रिणिधनमायास्यम् ॥ ९ ॥

एतत्सामद्वयं निन्दितान्नोपजीवन(१)जन्यस्य पापस्य निष्कृतिहेतुरित्यभिप्रायेणाऽऽह—

**अयास्यो वा आङ्गिरस आदित्यानां दीक्षितानामन्नमाश्नात्तꣳ शुगाच्छेत् स तपोऽतप्यत स एते आयास्ये अपश्यत्ताभ्याꣳ शुचमपाहताऽप शुचꣳ हत आयास्याभ्यां तुष्टुवानः ॥ १० ॥**

पुरा खल्वयास्यो नामाऽऽङ्गिरसः अङ्गिरोगोत्रज ऋषिः दीक्षितानां प्राप्तदीक्षाणां प्रारब्धयज्ञानामादित्यानां अदितेः पुत्राणां अन्नमाश्नात् अभुंक्त। तं ऋषिं शुक् शोक आच्छेत् प्राप्नोत् अभोज्यस्य भक्षणात्। दीक्षितान्नं हि प्रतिषिद्धत्वादभोज्यं हि स्मर्य्यते 'न दीक्षितवसनं परिदधीत, नाऽस्य पापं कीर्त्तयेत्, नाऽन्नमश्नीया'दिति। शुगार्त्तस्स ऋषिः तपोऽतप्यत। तत्तेन तपसा एते आयास्ये सामनी अपश्यत्ताभ्यां सामभ्यां अभोज्यभोजनवशादुपजातां शुचं शोकमपाहत अवर्ज्जयत्। अत इदानीमपि आयास्याभ्यां तुष्टुवानः स्तुतवान् यजमानः शुचमपहते अपहन्ति अभोज्यभोजनजन्यं पापं विनाशयतीत्यर्थः ॥ १० ॥

---

१. जातस्य.

अथैनयोः स्तवनं वृष्टिहेतुरपीति दर्शयति—

एभ्यो वै लोकेभ्यो वृष्टिरपाक्रामत्तामयास्य आयास्याभ्यामच्यावयत् च्यावयति वृष्टिमायास्याभ्यां तुष्टुवानः ॥ ११ ॥

पुरा एभ्यः पृथिव्यादिभ्यस्त्रिभ्योऽपि लोकेभ्यो वृष्टिः अपाक्रामदपागच्छत, त्रिष्वपि लोकेष्वनावृष्टिर्जातेत्यर्थः। तामपक्रान्तां वृष्टिं अयास्य ऋषिः आयास्याभ्यामेताभ्यां सामभ्यां साधनभूताभ्यामच्यावयदवर्षयत्। स्पष्टमन्यत् ॥ ११ ॥

अथाऽन्नाद्यहेतुत्वेनैते स्तौति—

अन्नाद्यं वाव तदेभ्यो लोकेभ्योऽपाक्रामत्तदयास्य आयास्याभ्यामच्यावयत् च्यावयत्यन्नाद्यमायास्याभ्यां तुष्टुवानः ॥ १२ ॥

तत्तत्र वृष्ट्युपक्रमणसमयेऽन्नाद्यं वाव अदनीयमन्नमेवैभ्यो लोकेभ्योऽपाक्रामत्, वृष्टिमन्तरेण तस्याऽनुत्पत्तेः। निगदसिद्धमन्यत् ॥१२॥

अथ वृषाशोण इति तृतीये तृचे गातव्यं साम विदधाति—

वासिष्ठं भवति ॥ १३ ॥

वसिष्ठस्येदं वासिष्ठम् ॥ १३ ॥

इममेव सम्बन्धं प्रदर्शयन् इदं विशिष्टफलहेतुरित्याह—

वसिष्ठो वा एतेन वैडवः स्तुत्वाऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः स्तोमः ॥ १४ ॥

वैडवो वीडुपुत्रो वसिष्ठः खलु पुरा एतेन साम्ना स्तुत्वा अञ्जसा आर्जवेन ऋजुगामिनैव मार्गेण स्वर्गं लोकमपश्यत् सम्यगद्राक्षीत्। अत एतत्सामेदानीं प्रयुज्यमानं स्वर्गस्य लोकस्याऽनुख्यात्या अनुख्यानार्थं सम्यग्दर्शनाय भवति। अपि च तुष्टुवानः स्तुतवान्। स्वर्गाल्लोकात् सम्यक् दृष्टान्न च्यवते न प्रच्युतो भवति, सर्वदा तत्रैवावतिष्ठत इत्यर्थः। एवं त्रयस्तृचा आवृत्त्या सह पञ्चदश स्तोत्रीयास्तृचाः सम्पन्नाः। अतः पञ्चदशस्तोमो निष्पन्न इत्यर्थः ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
एकादशाध्यायस्याष्टमः खण्डः ॥

## अथ नवमः खण्डः ॥

अथ होतुः पृष्ठस्य स्तोत्रीयं तृचं प्रदर्श्य तस्मिन्नहनि तदानुगुण्यं दर्शयति--

'त्वामिद्धि हवामह' इति त्वमिति बृहतो रूपं बार्हतꣳ ह्येतदहः ॥ १ ॥

त्वामिद्धीत्ययं प्रगाथस्तोत्रीयो भवति । प्रथमस्य पृष्ठस्तोत्रस्य त्वामिति युष्मच्छब्दरूपस्योपलक्षणं त्वामिद्धीति बृहतो योन्यां त्वामिति युष्मच्छब्दः श्रूयते । अतस्तद्बृहतो बृहत्साम्नो रूपं उत्पत्तिशिष्टत्वात् । एतत् द्वितीयमहश्च बार्हतं बृहत्पृष्ठत्वात् । अतोऽस्मिन्नहनि त्वामिद्धीति प्रगाथस्य करणं युक्तमिति भावः ॥ १ ॥

अथ ब्रह्मणः पृष्ठस्तोत्रस्याऽऽधारभूतं तृचं विधाय स्तौति—

अभिप्रवः सुराधसमिति युञ्जते वै पूर्वेणाऽह्ना ह्येतेन प्रयन्ति ॥ २ ॥

पूर्वेण प्रथमेनाऽह्ना यज्ञं युञ्जते प्रारभन्ते । यथा देशान्तरं गच्छन् रथे अश्वान् युङ्क्ते, एवं यज्ञसमाप्तिं गन्तुं तस्योपक्रम एव क्रियते । तेनाऽह्ना युक्तं यज्ञं एतेन द्वितीयेनाऽह्ना अभिप्रयन्ति उद्दिश्य प्रकर्षेण गच्छन्ति । अतोऽस्याह्नः अभिप्रायणसाधनत्वादभिशब्दयुक्तोऽयं तृचः सङ्गत इत्यर्थः ॥ २ ॥

अथाऽच्छावाकपृष्ठस्य स्तोत्रीयं तृचं विधाय तस्य पूर्वोत्तरयोरह्नोः सन्धानहेतुतामाह—

त्वामिदाह्यो नर इत्यद्य चैव ह्यश्च समारभते द्विरात्रस्याऽविस्रꣳसाय ॥ ३ ॥

त्वामिदाह्य इत्यस्मिन् तृचे इदाह्यश्चेति शब्दद्वयं श्रूयते । तयोरयमर्थः-इदानीं ह्यः पूर्वेद्युरिति एवं कालद्वयवाचिना तेन अद्य च अद्यतनञ्चैव द्वितीयमहः ह्यः पूर्वमहश्च समारभते । समित्येकीभावे एकीकृत्योभयं गृह्णातीति । किमर्थम् ? द्विरात्रस्याऽहर्द्वयस्य अविस्रंसनाय विस्रंसनाभावार्थं सन्धानार्थमित्यर्थः ॥ ३॥

अथाऽऽद्ये तृचे साम विधाय तस्य द्वितीयेनाऽह्ना सङ्गतिमाह—

बृहद्भवति वर्ष्म वै बृहद्वर्ष्म द्वितीयमहर्वर्ष्मण एव तद्वर्ष्माऽऽक्रमन्ते ॥ ४ ॥

तदेतद् बृहत्साम तद्वर्म वै ब्रह्मणः शरीरभूतं द्वितीयमहश्च यज्ञस्य वर्म शरीरं तत्तथा सति बृहतो द्वितीये ऽहनि सम्बन्धात् वर्मण एव सकाशात् वर्माऽऽक्रमन्ते ॥ ४ ॥

अथ द्वितीयस्मिंस्तृचे साम विधाय तस्य सन्तानहेतुतामाह—

**श्यैतं भवति साम्नोर्विवाहो यज्ञस्य सन्तत्यै ॥ ५ ॥**

अभिप्रवः सुराधसमित्यस्मिन् तृचे श्यैतं ब्रह्मसाम भवति । श्यैतं हि रथन्तरप्रभवं नौधसं बृहत्प्रभवम्, अतो राथन्तरेऽहनि श्यैतस्य बार्हतेऽहनि नौधसस्य प्रयोगे प्राप्ते इमौ वै लोकौ सहास्तामित्यादिनाऽनयोः साम्नोर्विवाहो विविधं प्रायणं विपर्यस्य प्रयोग उक्तः । स च यज्ञस्य पूर्वोत्तरयोरह्नोर्व्यासज्य वर्त्तमानस्य सन्तत्यै सन्तानाय भवति । राथन्तरं हि पूर्व्वमहः बार्हतमुत्तरं रथतन्तरपक्षीयस्य श्यैतस्याऽत्र प्रयोगात् सन्ततिरिति द्रष्टव्यम् ॥ ५ ॥

अथ तृतीये प्रगाथे साम विधाय ऋषिसम्बन्धप्रतीतेस्तत्साम चिरकालं स्वर्गावस्थितिहेतुरिति स्तौति ।

**माधुच्छन्दसं भवति सामार्षेयवत्स्वर्गाय युज्यते स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ ६ ॥**

सिद्धमेतत् ॥ ६ ॥

अस्मिन् साम्नि विद्यमानां ऊर्ध्वस्वरविशिष्टामिडामनूद्याऽस्मिन्नहनि तत्सङ्गतिमाह—

**ऊर्ध्वेडं तथा ह्येतस्याह्नो रूपꣳस्तोमः ॥ ७ ॥**

औ२३४५१डा इत्येवं रूपा इडा यस्य तदूर्ध्वेडं साम । तथा हि तथैव खल्वेतस्य द्वितीयस्याह्नो रूपमुपन्यस्तं द्रवदिडं प्रथमस्याह्नो रूपमित्यादिना अत्र त्रीणि पृष्ठस्तोत्राण्यनुक्रान्तानि । मैत्रावरुणपृष्ठस्तोत्रं तु चोदकत एव प्राप्तम् । तेनैतेषु चतुर्षु स्तोत्रेषु पञ्चदश एव स्तोमो भवति ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
एकादशाध्यायस्य नवमः खण्डः ॥

# अथ दशमः खण्डः ॥

अथाऽऽर्भवपवमानस्यैकं स्तोत्रीयं तृचं विदधाति--

**यस्ते मदो वरेण्य इति गायत्री भवति ॥ १ ॥**

गायत्रस्तृचो भवतीत्यर्थः ॥ १ ॥

अस्य तृचस्य मदशब्दयुक्तत्वेन तृतीयसवनस्याऽऽनुरूप्यं दर्शयति—

**मदवद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति ॥ २ ॥**

प्रसोमासो मदच्युत इति गायत्री भवतीत्यस्य वाक्यशेषवत् एत-दपि व्याख्येयम् ॥ २ ॥

अन्यां स्तोत्रीयां विधायाऽस्मिन्नहनि तस्याः सङ्गतिमन्नाद्यहेतुताञ्चाह-

**पवस्व मधुमत्तम इति पवन्त इव ह्येतेनाऽह्ना मधुमत्तम इत्यन्नं वै मध्वन्नाद्यमेव तद्यजमाने दधाति ॥ ३ ॥**

पवस्व मधुमत्तम इत्यस्मिन् पूञ् पवन इत्यस्माद्धातोर्निष्पन्नः पवस्वेति शब्दः श्रूयते। एतेन द्वितीयेनाऽह्ना पवन्त इव हि। इवेत्यत्रा-धारणे। पवन्ते शोधयन्त्येव खल्वनुष्ठातारः। अतोऽस्मिन्नहनि तत् पव-नप्रतिपादकं मन्त्रवाक्यं सङ्गतम्। तथा मधुमत्तम इति च पदं तत्र श्रूयते। लोके च अन्नं वै अन्नमेव मधु मधुरमिति प्रसिद्धम्। अतोऽन्न-वाचिमधुशब्दयुक्तेन तत्तेन मन्त्रवाक्येन यजमाने अन्नाद्यं अदनीय-मन्नमेव दधाति ॥ ३ ॥

अथाऽपरां स्तोत्रीयां विधाय तया वीर्यप्राप्तिमाह—

**इन्द्रमच्छ सुता इम इतीन्द्रियस्य वीर्यस्याऽऽवरुध्यै ॥४॥**

अस्यामृचीन्द्रशब्दः श्रूयते। तेन च इन्द्रसम्बान्धि वीर्यं प्रत्यभिज्ञायते अतः फलस्य इन्द्रियस्य इन्द्रेण सृष्टस्य तद्दत्तस्य वा वीर्यस्याऽपत्यका-रणस्य रेतोरूपस्याऽवरुध्यै अवरोधनाय प्राप्तये एषा भवति ॥ ४ ॥

अथाऽपरं स्तोत्रीयं तृचं विदधाति—

**अयं पूषा रयिर्भग इति ॥ ५ ॥**

अस्य तृचस्याऽऽनुष्टुभत्वात् त्रैष्टुभेऽहन्यसङ्गतिमाशङ्क्य त्रैष्टुभेन रूपेण योगात्सङ्गतिमाह—

**अनुष्टुभः सत्यस्त्रिष्टुभो रूपेण त्रैष्टुभं ह्येतदहः ॥६॥**

अनुष्टुभः सत्यः अनुष्टुप्छन्दस्का भवन्त्योऽप्येतास्त्रिष्टुभो रूपेण

रयिशब्दादिना युक्ताः। रयिशब्दप्रयोगश्च त्रिष्टुभो रूपमिति वृषवन्नृत्रह्वदित्यादिना प्रागुक्तम्। अतोऽस्मिन् त्रैष्टुभेऽहनि सङ्गता इत्यर्थः ॥६॥

अथाऽन्यं जागतं तृचं विधाय तस्याऽपि त्रैष्टुभरूपयोगात् त्रैष्टुभेऽहनि सङ्गतिरित्याह—

**वृषामतीनां पवते विचक्षण इति जगत्यः सत्यस्त्रिष्टुभो रूपेण त्रैष्टुभꣳह्येतदहः ॥ ७ ॥**

अत्र वृषशब्दस्त्रिष्टुभो रूपम्। अन्यत् पूर्ववद्योज्यम् ॥ ७ ॥

अथ प्रथमे तृचे एकं साम विधाय प्राकृतिकं तद्ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ८ ॥**

व्याख्यातमेतत् ॥ ८ ॥

अथ पुनरावृत्ते तस्मिन्नेव तृचे सामान्तरं विदधाति—

**हाविष्मतं भवति ॥ ९ ॥**

हविष्मता ऋषिणा दृष्टं साम हाविष्मतम् ॥ ९ ॥

इममेव सम्बन्धं प्रदर्शयन् समृद्धिहेतुरेतत्साम इत्याह—

**हविष्माꣳश्च वै हविष्कृच्चाऽङ्गिरसावास्तां द्वितीयेऽहनि हविष्मानराध्नोन्नवमेऽहनि हविष्कृत् ॥ १० ॥**

पुरा खलु हविष्मांश्च हविष्कृच्चेति द्वौ आङ्गिरसौ अङ्गिरोगोत्रावृषी आस्तामभवताम्। तयोर्मध्ये हविष्मान् द्वादशाहमनुतिष्ठन् द्वितीयेऽहनि अनेन साम्ना स्तुत्वा अराध्नोत् समृद्धोऽभवत्। हविष्कृच्च नवमेऽहनि आत्मना दृष्टेन हाविष्कृतेन साम्ना अराध्नोदित्येतत् प्रासङ्गिकम् ॥१०॥

अथैतत्प्रकारान्तरेण स्तौति—

**अयꣳ हविष्मानित्येव जातमहर्ज्जातꣳ सोमं प्राह देवेभ्यः साम्नैवास्मा आशिषमाशास्ते साम हि सत्याशीः ॥ ११ ॥**

अस्य साम्नोऽवसाने हविष्मतेति पदं श्रूयते । तद्विशिष्टं जातमुत्पन्नमेतदहः। अयं यजमानो हविष्मान् हविषा युक्त एवेति जातमुत्पन्नं अभिषवादिभिः संस्कृतं सोमं देवेभ्यो हविर्भागं प्राह प्रब्रूते। अपि चाऽस्मै यजमानायाऽनेनैव साम्नाऽऽशिषम्, अप्राप्तस्य फलस्य प्राप्तिराशीः, तामाशास्ते स्तोतेति शेषः। साम हि साम खलु सत्याशीः सत्या अवित-

था आशीः फलप्राप्तिर्यस्मिन् तत्तथोक्तं ऋग्यजुःसाम्नां मध्ये सामैव अ-वितथफलहेतुः। अतो हेतोः साम्नैवाऽऽशिषमाशास्त इति ॥ ११ ॥

अथ पवस्व मधुमत्तम इत्यस्यामृचि गातव्यं साम विधाय शङ्कु-सामान्येन तस्य धृतिहेतुतामाह—

**शङ्कु भवत्यह्नो धृत्यै यद्वा अधृतꣳ शङ्कुना तद्दाधार ॥ १२ ॥**

शङ्कु शङ्कुसंज्ञं साम पवस्व मधुमत्तम इत्यस्यां गातव्यं भवति। त-च्चाऽस्याऽह्नो धृत्यै धारणाय स्थैर्याय भवति। यत् खलु लोके अधृतं अधारितं चञ्चलं भवति तच्छङ्कुना दार्ढ्याय निखातव्येन कीलकेन दा-धार धारयति लौकिकः पुरुषः, तद्वदिदमपि साम शङ्कुशब्दवाच्यत्वाद् धृतिहेतुरित्यर्थः ॥ १२ ॥

अथाऽस्य साम्नो ब्रह्मवादिभिः कृतं संज्ञान्तरमनुवदन् तस्य निर्वच-नञ्च प्रदर्शयन् पृथिव्यादिलोकप्राप्तिहेतुरेतत्सामेति दर्शयति—

**तदु सीदन्तीयमित्याहुरेतेन वै प्रजापतिरूर्ध्व इमान् लोकानसीदद्यदसीदत्तत्सीदन्तीयस्य सीदन्तीयत्वमूर्द्ध्व इमान् लोकान् सीदति सीदन्तीयेन तुष्टुवानः ॥ १३ ॥**

तदु शङ्कुसाम सीदन्तीयशब्दवाच्यम्, एतदपि तस्य नामेति ब्रह्मवा-दिन आहुः। तस्यैतन्निर्वचनं एतेन खलु साम्ना साधनेन प्रजापति-र्विधाता ऊर्द्ध्व उत्थितः सन् इमान् लोकान् दृश्यमानान् लोकानसीदत अगच्छत् व्याप्नोत्, यद्यस्मात्कारणादनेन साम्नाऽऽसीदत् तत्तस्मादस्य सीदन्तीयस्य सीदन्तीयशब्दवाच्यस्य साम्नः सीदन्तीयत्वं सीदन्त्य-नेनेति व्युत्पत्त्या सीदन्तीयमिति नाम सम्पन्नम्। यश्च इदानीमपि सीद-न्तीयेनाऽनेन तुष्टुवानः स्तुतवान् भवति सोऽप्यूर्द्ध्वमुत्थितः सन् इमान् लोकान् सीदति व्याप्नोति ॥ १३ ॥

इन्द्रमच्छेत्यस्यां गातव्यं साम विदधाति—

**सुज्ञानं भवति ॥ १४ ॥**

सुज्ञानाख्यं साम कर्त्तव्यम् ॥ १४ ॥

राथन्तरबार्हतयोरेतयोरह्नोः सन्तानाय उभाभ्यां रूपाभ्यां भाव्य-मित्यभिप्रायेणाऽऽह—

**स्वर्वद्वै राथन्तरꣳ रूपꣳ स्वर्णिधनं बार्हतम् ॥ १५ ॥**

अस्मिन् सुज्ञाने सुवर्विद ए ३ उपा २३४५ इति समाप्तौ दृश्यते। स्व

वत् स्वश्शब्दयुक्तं हि राथन्तरं रूपम्। 'ईशानमस्य जगतः स्वर्दृशमि'ति तद्योन्यां दृष्टत्वात् स्वर्णिधनं स्वरिति सुज्ञानस्य निधनम्। असौ लोको बृहदि'ति श्रुतेः बार्हतं बृहत्सम्बन्धिरूपम्। अतो रूपद्वययुक्तमेतत्साम द्वि-रात्रस्य सन्तत्यै भवतीत्यभिप्रायः। नन्वस्मिन् ऊपा इति निधनं दृश्यते न स्वरिति, कथं स्वर्णिधनत्वम्? नैष दोषः; यतः सूत्रकारेण ऊपा-स्थानेष्वन्यानि निधनानीति प्रकृत्य स्वःकाशिते दैवोदाससुज्ञानयो-श्चेत्यूपा स्थाने स्वरिति निधनस्य विहितत्वात् ॥ १५ ॥

एतदेवाऽभिप्रेत्याह—

**स्वर्णिधनं भवति तथा ह्येतस्याऽह्नो रूपम् ॥ १६ ॥**

एतत्सुज्ञानं स्वरिति बहिर्णिधनयुक्तं भवति। तथा खल्वेतस्य द्विती-यस्याऽह्नो रूपं पूर्वमुक्तं पदनिधनं प्रथमस्याह्नो रूपम्, बहिर्णिधनं द्विती-यस्येति ॥ १६ ॥

अथ शङ्कुसुज्ञाने संयुज्य प्लवात्मना रूपयन् अञ्जसा स्वर्गप्राप्ति-साधने इत्याह—

**प्लवौ वा एतावुपोहन्ते स्वर्गस्य लोकस्य समष्ट्यै ॥ १७ ॥**

ये शङ्कुसुज्ञाने सामनी विहिते एतौ प्लवापेक्षया पुंलिङ्गता। एते प्रयु-ञ्जाना उद्गातारः प्लवौ दुस्तरस्य यज्ञात्मकसमुद्रस्य पारप्राप्त्यर्थं प्लवरू-पावेवोपोहन्ते प्रेरयन्ति। किमर्थम्? स्वर्गस्य लोकस्य समष्ट्यै यजमा-नस्य प्राप्त्यर्थम् ॥ १७ ॥

अयं पूषेत्यस्य तृचस्याऽऽद्यायामृचि गातव्यं विधाय पूर्वमाम्नातं तद्ब्राह्मणञ्चाऽतिशति—

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणम् ॥ १८ ॥**

गौरीवितिर्वा एतच्छाक्त्यो ब्रह्मणोऽतिरिक्तमपश्यदित्यादिकं गौरी-वितस्य प्रागाम्नातं ब्राह्मणं यत् तदेवास्याऽपि ब्राह्मणम् ॥ १८ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विदधाति—

**क्रौञ्चं भवति ॥ १९ ॥**

स्पष्टम् ॥ १९ ॥

तदेतत् स्तौति—

**वाग्वै क्रौञ्चं वाग्द्वादशाहो वाच्येव तद्वाचा स्तुवते यज्ञस्य प्रभूत्यै ॥ २० ॥**

वागात्मकं खलु क्रौञ्चं साम । द्वादशाहश्च वाग्रूपः (१)'तस्मादेकहायना मनुष्या वाचं वदन्ती'ति वाग्वदनसाधनत्वात् सम्वत्सरस्य तावद्वागात्मताऽवगम्यते, (२)'सम्वत्सरप्रतिमा वै द्वादशरात्रयः' इति श्रुतेः द्वादशाहस्य सम्वत्सरप्रतिरूपत्वात् वागात्मकत्वं द्रष्टव्यम् । तत्तथा सति उभयोर्वाग्रूपत्वात् वाच्येव वाक् संस्तुत एव द्वादशाहे वाचा वाग्रूपेण क्रौञ्चेण स्तुवत उद्गातारः । किमर्थम् ? यज्ञस्य प्रवृत्तस्य द्वादशाहात्मकस्य प्रभूत्यै प्रभूत्यर्थ(३)माधिक्यार्थं स्वत एव वाग्रूपे यज्ञे पुनर्वाचा स्तुवतः प्रभूतिः२०

अथ वृषामतीनां पवत इत्यन्त्ये तृचे गेयं साम विधत्ते—

**यामं भवति ॥ २१ ॥**

प्रो अयासीदित्यस्यामुत्पन्नं साम यामम् । तदस्मिंस्तृचे ऊहेन कार्य्यम् ॥ २१ ॥

इदं स्वर्गस्य लोकस्याऽऽधिपत्यहेतुरित्यभिप्रेत्याह—

**एतेन वै यमोऽनपजय्यममुष्य लोकस्याऽऽधिपत्यमाश्नुताऽनपजय्यममुष्य लोकस्याऽऽधिपत्यमश्नुते यामेन तुष्टुवानः ॥ २२ ॥**

एतेन खलु साम्ना साधनेन पुरा यमो वैवस्वत अनपजय्यं केनाप्यपजेतुमशक्यं अबाध्यममुष्य स्वर्गलोकस्याऽऽधिपत्यमधिपतित्वं आश्नुत प्राप्नोत् । अत इदानीन्तनोऽपि यामेन तुष्टुवानः स्तुतवान् अनपजय्यममुष्य लोकस्याऽऽधिपत्यमश्नुते प्राप्नोति ॥ २२ ॥

तथेदं साम स्वर्गलोकावगतिहेतुः तत्र चिरकालावस्थितिहेतुश्चेत्याह—

**एतेन वै यमी यमꣳ स्वर्गं लोकमगमयत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गात् लोकान्न च्यवते तुष्टुवानः स्तोमः ॥ २३ ॥**

एतेन खलु साम्ना पुरा यमी यमस्य पत्नी यमं स्वर्गं लोकमगमयत् । अत इदं साम स्वर्गस्य लोकस्याऽनुख्यात्यै अनुख्यानाय सन्दर्शनाय भवति । अपि च एतेन तुष्टुवानः तस्मात् स्वर्गलोकान्न च्यवते । उक्तप्रकारेण स्तोत्रीयाणां परिगणने सति पञ्चदशाख्यस्तोमो निष्पद्यते ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य दशमः खण्डः ॥

---

१. तै. सं. २. तै. सं. ३. आधिपत्यार्थमिति. क. ख. पु.

## अथैकादशः खण्डः ।

अथाऽस्याऽह्न उक्थसंस्थत्वादितः परं त्रीण्युक्थस्तोत्राणि कर्त्तव्यानि । तत्र मैत्रावरुणोक्थस्य स्तोत्रीयं तृचं विदधाति—

**एह्यूषु ब्रवाणि त इत्येहिवत्यो भवन्ति तृतीयस्याऽह्न उपह्वाय सन्तत्यै ॥ १ ॥**

एह्यूष्वित्याद्यास्तिस्र एहिवत्य एहीत्यनेन शब्देन युक्ताः प्रथमस्योक्थस्य स्तोत्रीया भवन्ति । ताश्च एहीत्यागमनप्रतिपादनात् तृतीयस्याऽऽगामिनोऽह्नः उपह्वाय उपह्वानाय भवन्ति । उपह्वः किमर्थ इति तत्राह—सन्तत्या इति । उभयोर्द्वितीयतृतीययोरह्नोः सन्तानार्थं भवति॥१॥

सा कस्मात्कारणादित्यत आह—

**अपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि यदेति सलोमत्वाय ॥ २ ॥**

उक्थान्युक्थस्तोत्राणीति यत् एतद्यज्ञकाण्डं यज्ञभागः अपच्छिदिव वै अपच्छिन्नमेव खलु, यज्ञायज्ञीयेनैव प्रकृतस्याऽऽह्नः परिसमाप्तत्वात् उत्तरस्य चाऽनारब्धत्वात् । अतोऽस्य सन्तानार्थं एह्यूषु ब्रवाणि त इत्यादीन्युक्थानि उकथस्तोत्राणि एति प्राप्नोति करोतीति यत् सलोमत्वाय सारूप्याय अपच्छेदाभावेनैकरूप्याय भवति । अथ वा एति आङिति आभिमुख्यवाची उपसर्गोऽस्मिस्तृचे दृश्यते । ईदृश आकार इति यत् विच्छिन्नयोः परस्पराभिमुख्यप्रतिपादनात् सलोमत्वाय सारूप्यायैव तद्भवति ॥ २ ॥

अथ द्वितीयस्योक्थस्य स्तोत्रीयं तृचं विदधाति—

**एवाह्यसि वीरयुरिति समानं वदन्तीदमित्थमसदिति ॥ ३ ॥**

एवाह्यसि इति तृचः स्तोत्रीयः कार्यः । तास्तिस्र ऋचः समानं सदृशमेवाऽर्थं वदन्ति प्रतिपादयन्ति, इदमहरित्थमनेन प्रकारेणाऽसत् अभूदिति । तत्र हि एवशब्दपर्य्यायः एवंशब्दो बहुकृत्वोऽभ्यस्यते तदभिप्रायेणेदमित्थमसदिति समानं वदन्तीति व्यपदेशः ॥ ३ ॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं विदधाति—

**इन्द्रं विश्वा अवीवृधन्नित्यवर्द्धन्त ह्येतर्हि यजमानमेवैतया वर्द्धयन्ति ॥ ४ ॥**

इन्द्रं विश्वा इति तृचः तृतीयस्योक्थस्य स्तोत्रीयः । तत्र च अवी· वृधन्नवर्द्धयन् इति वृधिधातोर्भूतकालसम्बन्धिता दृश्यते । एतर्हि एत· स्मिन् काले तृतीयस्योक्थस्य समये जेतव्यानसुराञ्जित्वा देवाः पुरा अवर्द्धन्त समृद्धा अभूवन् । हि यस्मादेवं तस्माद्भूतकालसम्बन्धिवृ· धिधातुयुक्तस्तृचः सन्नत इत्यर्थः । हि अपि चैतया वृधिधातुयुक्तया ऋचा यजमानमेव वर्द्धयन्ति ॥ ४ ॥

अथ प्रथमे मैत्रावरुणोक्थे साम विदधाति—

**साकमश्वं भवत्युक्थानामभिजित्या अभिक्रान्त्यै ॥५॥**

साकमश्वन्नाम साम एह्यूषुब्रवाति तृचे गातव्यम् । किमर्थम् ? उक्था· नामुक्थस्तोत्राणामभिजित्यै अभिजयार्थम् । अभिजित्य चाऽभिक्रान्त्यै अभिक्रान्तिराक्रान्तिः शत्रूणामभिभवस्तदर्थम् ॥ ५ ॥

कुतोऽस्य साम्नस्तदुभयहेतुतेत्यत आह—

**एतेन ह्यग्र उक्थान्यभ्यजयन्नेतेनाभ्यक्रामन् ॥ ६ ॥**

एतेन खलु साम्ना अग्रे पुरा देवा उक्थान्यभ्यजयन् एतेनैवाऽभ्य· क्रामञ्छत्रून् । 'देवा वा अग्निष्टोममभिजित्योक्थानि नाऽशक्नुवन्नभिजे· तुमि'त्यादि ब्राह्मणमनुसन्धेयम् ॥ ६ ॥

अथ ब्रह्मण उक्थस्तोत्रे साम विदधाति—

**आमहीयवं भवति क्लृप्तिश्चाऽन्नाद्यञ्च समानं वदन्तीषु क्रियत इदमित्थमसादिति ॥ ७ ॥**

एवाह्यसीति तृचे आमहीयवं साम कार्य्यमिदमहारित्थमनेन प्र· कारेणाऽसदित्यभवदिति शब्दसामान्येन वदन्तीषु प्रतिपादयन्तीषु क्लृप्तिः सामर्थ्यं चाऽन्नाद्यं अत्तुमर्हमन्नञ्च क्रियते तदुभयहेतुरेतत्सा· मेत्यर्थः ॥ ७ ॥

अथ स्तोमच्छन्दोभ्यां संहताभ्यां ब्रह्मक्षत्रयोः सङ्गतिर्भवतीत्याह—

**क्षत्रं वा एतदहरभिनिर्वदति यत्पञ्चदशं यद्गाय· त्रीषु ब्रह्मसाम भवति ब्रह्म चैव तत्क्षत्रञ्च सयुजी क· रोति ब्रह्मैव क्षत्रस्य पुरस्तान्निदधाति ब्रह्मणे क्षत्रञ्च विशञ्चाऽनुगे करोति ॥ ८ ॥**

यत्पञ्चदशं पञ्चदशस्तोमकं अहः एतदहः क्षत्रं क्षत्रियजातिमेवाऽ· भिलक्ष्य निर्वदति निर्वक्ति । गायत्रं छन्दो ब्राह्मणजातिः तेन सह प्रजा· पतिमुखादुत्पत्तेः । एवं सति गायत्रीष्वृक्षु पञ्चदशस्तोमकं ब्रह्मसाम

भवतीति यत् तत्तेन ब्रह्म ब्राह्मणजातिमेव च क्षत्रं क्षत्रियजातिमेव च सयुजी संयुक्ते करोति। अपि च गायत्रीणामृचां साम्न आधारतया प्रथमभावित्वात्, स्तोमस्य च स्तोत्रीयासङ्घात्मकस्य पञ्चदशस्य पश्चाद्भावित्वात्, क्षत्रस्य क्षत्रियजातेः पुरस्तात् पूर्वस्मिन् भागे ब्रह्मैव ब्राह्मणजातिमेव निदधाति, न तावत् पुरस्तान्निधानमात्रं ब्राह्मणजातेः, अपि तु ब्रह्मणे षष्ठ्यर्थे चतुर्थी ब्रह्मणः क्षत्रश्च विशश्च क्षत्रियजातिं वैश्यजातिश्च अनुगे अनुगन्त्र्यौ करोति ॥ ८ ॥

अथाऽस्मिन्नहनि गायत्रीषु ब्रह्मसामकरणं ब्राह्मणजातेरभिवृद्धिहेतुश्चेत्याह—

**ब्रह्म वै पूर्वमहः क्षत्रं द्वितीयं यद्गायत्रीषु ब्रह्मसाम भवति ब्रह्म तद्यशसार्द्धयति ब्रह्म हि गायत्री ॥९॥**

पूर्वं प्रायणीयमहर्ब्रह्म वै ब्राह्मणजातिरेव, गायत्रीरथन्तरसम्बन्धात्। तयोश्च ब्राह्मणजात्या सहोत्पन्नत्वात्। द्वितीयमहः क्षत्रं क्षत्रियजातिः। तया सहोत्पन्नानां त्रिष्टुबादीनामत्र सद्भावात्। अतः क्षत्रसंस्तुते द्वितीयेऽप्यहनि गायत्रीष्वृक्षु ब्रह्मसाम भवतीति यत् तत्तेन ब्रह्म ब्राह्मणजातिं यशसा कीर्त्या अर्द्धयति समृद्धं करोति। कुत एतत्? हि यस्माद्ब्राह्मणजातिरेव गायत्री,छन्दसां मध्ये गायत्र्याख्यं छन्दः ॥ ९ ॥

अथ तृचस्याऽर्थद्वारा समृद्धिहेतुतामाह—

**तदु समानं वदन्तीषु क्रियते समृद्ध्यै ॥ १० ॥**

तदु तद्ब्रह्मसाम समानं वदन्तीषु एकरूपमेवाऽर्थं प्रतिपादयन्तीषु 'एवाह्यसि,एवा शूर, एवा ते राधमि'त्यादिना एवशब्देनैवं शब्दपर्यायेण सदृशस्याऽर्थस्य तत्र प्रतिपादनात् तासु क्रियते। एकस्यैव शब्दस्य भूयोऽभ्यासात्तत्साम समृध्द्यै समृध्द्यर्थमेव भवति ॥ १० ॥

अथ तृतीये उक्थस्तोत्रे विकल्पेन सामनी विधत्ते—

**आष्टादंष्ट्रे भवतः ॥ ११ ॥**

अष्टादंष्ट्रेण ऋषिणा दृष्टे सामनी आष्टादंष्ट्रे। तयोरन्यतरत् इन्द्रं विश्वा इत्यस्मिंस्तृचे अच्छावाकसामत्वेन गातव्यम् ॥ ११ ॥

तयोः साम्नोराद्यौ स्तोभौ वृत्रहननसम्बन्धाविति प्रतिपादयन् वीर्यवत्त्वं प्रतिपादयति—

**ऐयाहा इति वा इन्द्रो वृत्रमहन्नैयादोहोवेति न्यगृह्णाद्वार्त्रघ्ने सामनी वीर्यवती ॥ १२ ॥**

ऐयाहा इति पूर्वमाष्टादंष्ट्र विद्यमानस्तोभः । शब्दानुकरणमेतत्। एवं शब्दं कुर्वन् खलु पुरा इन्द्रो वृत्रमसुरमहन् हतवान्। ऐयादो हो वेति द्वितीयस्य स्तोभः। एतदपि शब्दानुकरणम्। ऐयादो हो वेति शब्दायमानस्तमसुरं न्यगृह्णात् निगृहीतवान्। अत एते सामनी वार्त्रघ्ने वृत्रहननसाधने वीर्यवती वीर्य्योपेते ॥ १२ ॥

किं तत इत्याह—

**ओज एवैताभ्यां वीर्यमवरुन्धे ॥ १३ ॥**

यस्मादुक्तप्रकारेण वीर्योपेते तस्मादेताभ्यां सामभ्यां ओजो बलरूपं वीर्य्यं शत्रुहननसामर्थ्यमवरुन्धे लभते ॥ १३ ॥

अथैषामुक्थानां पूर्ववत् स्तोमं विधाय तत्साध्यफलमाह—

**पञ्चदश एव स्तोमो भवत्योजस्येव तद्वीर्ये प्रतितिष्ठत्योजो वीर्यं पञ्चदशः ॥ १४ ॥**

पूर्वोक्तः पञ्चदश एवैषां स्तोमो भवति। तत्तेन ओजस्येव ओजोरूपे बलात्मक एव वीर्य्ये प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति, यतः पञ्चदशः स्तोमः ओजो वीर्य्यं ओजोरूपवीर्य्यात्मकः वीर्यवतोऽङ्गात् बाहुलक्षणात् प्रजापतिना सृष्टत्वात्। अतः पञ्चदशस्तोमेन वीर्य्ये प्रतिष्ठायुक्तेतिभावः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे एकादशाध्यायस्य एकादशः खण्डः ॥

एकादशाध्यायः समाप्तिमगमत् ॥

# द्वादशोऽध्यायः ॥

## अथ प्रथमः खण्डः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम ॥

अथ तृतीये दाशरात्रिकेऽह्नि बहिष्पवमानस्य सप्तदशस्तोमस्य प्रथमं तृचं विदधाति—

**दविद्युतत्यारुचेति तृतीयस्याऽह्नः प्रतिपद्भवति ॥ १ ॥**

प्रतिपद्यते अनेनेति प्रातिपदाद्यस्तृचः । तृतीयस्य सप्तदशस्तोमस्योक्थसंस्थस्य पार्ष्टिकस्याऽह्नो बहिष्पवमानस्य दविद्युतत्येत्याद्यस्तृचः कार्य्यः ॥ १ ॥

अनुष्ठितयोरह्नोस्तृतीयस्य चाऽह्नः सन्धायकानि रूपाणि दविद्युतत्येत्यस्यां दर्शयन् त्रिरात्रसन्धानं दर्शयति—

**दविद्‌युतती वै गायत्री परिष्टोभन्ती त्रिष्टुब्गवाशीर्जगती त्रीणि रूपाणि समारभते त्रिरात्रस्याऽविस्रंसाय ॥ २ ॥**

गायत्रीत्रिष्टुब्जगतीत्येतानि त्रीणि छन्दांसि क्रमेणैतेषां त्रयाणामह्नां रूपाणि । अत्र च दविद्‌युततीति गायत्र्यभिधीयते । दविद्युततीत्यस्यं दीप्यमानेति हि शब्दार्थः । गायत्री च अग्निना सहोत्पन्नत्वस्तेजोरूपत्वात् दीप्यमाना भवति । अतः शब्दसामान्येन दविद्युततीशब्देन गायत्र्येवोपस्थाप्यते, परिष्टोभन्तीशब्देन त्रिष्टुब्त्र्यक्षराधिकेन गायत्रपादेन । स्तोभतीति त्रिष्टुप् परितः स्तोभतीति परिष्टोभन्ती । अतोऽनेन पादेन त्रिष्टुबेवोपस्थाप्यते । परिष्टोभन्त्या कृपेति ह्यत्र द्वितीयः पादः, सोमाः शुक्रागवाशिर इति तृतीयः । जगती च गवाशीः गोविकारेण पयसा आशिरा आश्रयतासाधनेन युक्ता । तृतीयसवनं हि जगत्या (१)अपात्तरसम् । तत्र चाशिरावनयनं रसवत्त्वाय क्रियते । अतो गवाशिर इति पदेन जगती सन्निधाप्यते । एतेषां त्रयाणां छन्दसामस्यामृचि प्रतिपादनात् तानि त्रीणि रूपाणि त्रयाणामह्नां रूपाणि समारभते स-

---

१. आयतनं.

मूर्द्धीकृत्य प्रयुङ्क्ते। किमर्थम्? त्रिरात्रस्य अनुष्ठितयोरनुष्ठीयमानस्य त्र्यणामह्नामविस्रंसाय स्रंसनाभावाय परसम्बन्धाय दार्ढ्यायेति यावत्॥ २॥

अथाऽनुरूपाख्यं तृचं विधत्ते—

**एते असृग्रमिन्दव इत्यनुरूपो भवति॥ ३॥**

अनुरूपाख्यो द्वितीयस्तृचो भवतीत्यर्थः॥ ३॥

एते असृग्रमिन्दव इति पदत्रयेण देवमनुष्यपितृसृष्टिरूपोऽर्थः पर्यवसाने वृत्त्या प्रतिपाद्यत इत्याह—

**एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄँस्तदेव तदभिवदति॥ ४॥**

एतत् ज्योतिष्टोमप्रकरण एव व्याख्यातम्। प्रजापतिस्सृष्टिसमये एतैः पदैर्यदेवाऽर्थरूपं ससर्ज तदेवार्थरूपं तत् पादत्रयमभिवदति॥ ४॥

अथाऽस्य तृचस्याऽनुरूपां संज्ञामभिब्रुवन् तद्वेदनफलमाह—

**पूर्वमुचैव तद्रूपमपरेण रूपेणाऽनुवदति यत्पूर्वँ रूपमपरेण रूपणोऽनुवदति तदनुरूपस्याऽनुरूपत्वमनुरूप एनं पुत्रो जायते य एवं वेद॥ ५॥**

एतत् पवस्व वाचो अग्रिय इति द्वितीयस्याऽह्नः प्रतिपद्भवतीति खण्डे व्याख्यातम्॥ ५॥

अथ विहितावेतौ तृचावनूद्य फलान्तरहेतुतामाह—

**स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुद्ध्यै॥ ६॥**

एतदपि तत्रैव व्याख्यातम्॥ ६॥

अथ तृचान्तरं विधत्ते—

**राजा मेधाभिरीयते पवमानो मनावध्यन्तरिक्षेण यातव इति॥ ७॥**

राजा मेधाभिरिति बहिष्पवमानस्य तृतीयस्तृचः॥ ७॥

तृतीयेऽह्न्यस्य तृचस्य सङ्गतिं वक्तुं अवशिष्टपादद्वयस्याऽनुवादः। तामेव सङ्गतिं दर्शयति—

**अन्तरिक्षदेवत्यस्तृचो भवत्यन्तरिक्षदेवत्यमेतदहर्यत्तृतीयं तदेव तदभिवदति॥ ८॥**

यत्तृतीयमहरन्तरिक्षदेवत्यं अन्तरिक्षदेवतार्थं अतो अन्तरिक्षेण यातव इति तन्मन्त्रवाक्यं तदेवाऽन्तरिक्षदेवत्यमभिवदति ॥ ८ ॥

अथ पञ्चर्चं साम बहिष्पवमानस्य विधत्ते—

**पञ्चर्चो भवति पञ्चपदा पङ्क्तिः पाङ्क्तमन्नमन्नाद्यस्याऽवरुद्ध्यै ॥ ९ ॥**

पञ्चानामृचां समुदायो भवति पञ्चपदा। पञ्चभिरष्टाक्षरैर्वोपेता पंक्तिः। अन्नञ्च लेह्यशोष्यादिभेदेन पांक्तं पंचसंख्यायुक्तम्। अतोऽसौ पञ्चर्चः तन्त्वा नृम्णानीत्यादिकः पञ्चर्चः अन्नाद्यस्यावरुद्ध्यै सम्पद्यते॥९॥

अथाऽन्यं तृचं विधत्ते—

**तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युपयन्ति ॥ १० ॥**

द्वितीयस्याऽह्नो बहिष्पवमानविधावेतदपि व्याख्यातम् ॥ १० ॥

अथाऽस्य स्तोत्रस्य विहिताभि ऋग्भिः सिद्धां स्तोमक्लृप्तिं ब्रुवन् विशिष्टफलहेतुतामाह—

**सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥११॥**

सप्तदशस्तोत्रीयात्मक एवाऽस्य स्तोत्रस्य स्तोमो भवति। किमर्थम्? प्रतिष्ठायै प्रतिष्ठार्थम्। द्वादशमासाः पञ्चर्त्तव इति संवत्सरात्मकः सप्तदशः संवत्सरेणैव च पुरुषस्य प्रतिष्ठानात्। सप्तदशस्य तद्धेतुत्वं तथा प्रजात्यै प्रजात्यर्थं प्रजापतिर्वै सप्तदश इति श्रुतेः। प्रजोत्पत्तिरपि सप्तदशस्तोमसाध्येत्यर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वादशाध्यायस्य प्रथमः खण्डः।

---

## अथ द्वितीयः खण्डः।

अथ होतुराज्यस्य स्तोत्रीयं तृचं दर्शयति—

**अग्निनाग्निः समिध्यत इत्याग्नेयमाज्यं भवति ॥१॥**

आग्नेयमग्निदेवत्यं होतुराज्यं स्तोत्रं अग्निनाऽग्निरित्यादिकस्तृचो भवतीत्यर्थः ॥ १ ॥

अस्मिंस्तृचे विद्यमानस्याऽग्निनाग्निरित्यग्निशब्दद्वयस्य पर्यवसितमर्थमाह—

**पूर्वे एव तदहनी समिद्धे तृतीयमहरभिसमिन्धे ॥२॥**

तत्तेनाऽग्निरिति शब्देन समिद्धे सम्यग्दीप्ते पूर्वे एवाऽहनी अभिलक्ष्य तृतीयमिदमहः समिन्धे सन्दीपयति । अयमर्थः—अग्निनेति तृतीयान्तेन पदेन 'अग्न आयाहि वीतये' 'अग्निं दूतं वृणीमहे' इत्याज्याभ्यां यदनुष्ठितं पूर्वमहर्द्वयं तदेवोपलक्ष्य तेन सह पुनरग्निशब्दाभिधेयमेतदहः समिन्द्ध इति ॥ २ ॥

अथ द्वितीयमाज्यस्य स्तोत्रीयं तृचं विधत्ते—

**मित्रꣳहुवे पूतदक्षमिति राथन्तरम्मैत्रावरुणम् ॥३॥**

मित्रं हुव इति तृचः राथन्तरं रथन्तरसम्बन्धि मैत्रावरुणेन यदाज्यस्तोत्रमनुशस्यते तद्भवतीत्यर्थः ॥ ३ ॥

कुतोऽस्य रथन्तरसम्बन्धितेत्यत आह—

**हुव इति वै राथन्तरꣳ रूपम् ॥ ४ ॥**

प्राकृतिके राथन्तरे प्रगाथे 'गव्यन्तस्त्वा हवामहे'इति ह्वयति धातुः श्रूयते । तस्य च रथन्तरसम्बन्धात्तद्रूपत्वम् । तथा अत्राऽपि हुव इति श्रूयते । तथा चोक्तप्रकारेण राथन्तरमेव रूपम् ॥ ४ ॥

नन्वस्मिन्नहनि वैरूपसामैव पृष्ठस्तोत्रम्, न रथन्तरम्; तत्कथमस्मिन्नहनि राथन्तरमाज्यं विधीयत इति तत्राऽऽह—

**रथन्तरमेतत्परोक्षं यद्वैरूपं राथन्तरमेव तद्रूपं निर्द्योतयति ॥ ५ ॥**

यद्वैरूपं साम एतत् परोक्षं परोक्षेण वर्त्तमानं राथन्तरमेव रथन्तरादस्योत्पत्तेः। तथा चैतरेयके 'बृहच्च वा इदमग्रे रथन्तरञ्चाऽऽस्तामि'त्युपक्रम्य 'तद्रथन्तरं गर्भमधत्त तद्वैरूपमसृजते'त्याम्नातम् । यद्यस्मात्परोक्षं रथन्तरमेव वैरूपं तत्तस्माद्राथन्तरमेव तद्रूपं निर्द्योतयति प्रकाशयति ॥ ५ ॥

अथ ब्रह्मण आज्यस्तोत्रं दर्शयति—

**इन्द्रेण सꣳहि दृक्षुस इत्यैन्द्रम् ॥ ६ ॥**

इन्द्रेणेति तृच ऐन्द्रमिन्द्रदेवत्यं तृतीयमाज्यस्तोत्रीयं कार्य्यमित्यर्थः॥

सं हि दृक्षुस इति शब्दार्थद्वारेण तृतीयेऽहन्येतस्य तृचस्य सङ्गतिमाह—

**समिव वा इमे लोका ददृशिरेऽन्तरिक्षदेवत्यमेतदहर्यत्तृतीयं तदेव तदभिवदति ॥ ७ ॥**

दृशिधातोः कर्मणि लण्मध्यमैकवचने व्यत्ययेन कसप्रत्यये दृक्षुस इति रूपं भवति । हि यस्मादतः संदृश्यते सम्यग्दर्शनेन विषयीक्रियत इति

तस्याऽर्थः । इमे पृथिव्यादयस्त्रयो लोकाः सन्दंशशिर इव वै संदृश्यन्त इव खलु । तदन्तर्वर्तित्वादन्तरिक्षमपि संदृश्यते । एतदेवाऽत्र संदंक्षुस इति पदेनोपस्थाप्यते । एतदहरान्तरिक्षदेवत्यं अन्तरिक्षदेवतार्थं यदेतत्तृतीयमहस्तदेवाऽस्याऽह्नो दैवतमन्तरिक्षं तत् संदंक्षुस इति पदमभिवदति ॥ ७ ॥

अथ चतुर्थमाज्यस्तोत्रं विधत्ते—

**ता हुवे ययोरिदमिति राथन्तरमैन्द्राग्नम् ॥ ८ ॥**

ता हुव इति तृचः राथन्तरं रथन्तरसम्बन्धि ऐन्द्राग्नं इन्द्राग्निदेवत्यं चतुर्थमाज्यस्तोत्रं कार्य्यमित्यर्थः ॥ ८ ॥

प्रथमाज्य(१)स्तोत्रवदत्राऽपि प्रथमतो राथन्तरं रूपं प्रदर्शयन् वैरूपस्य च राथन्तरात्मकत्वमभिधाय राथन्तरस्य वैरूपेऽहनि सङ्गतिमाह—

**हुव इति वै राथन्तरं रूपं रथन्तरमेतत्परोक्षं यद्वैरूपं राथन्तरमेव तद्रूपं निर्द्योतयति स्तोमः ॥ ९ ॥**

पूर्ववद्योज्यम् । अथैतेषु चतुर्ष्वाज्यस्तोत्रेषु स एव सप्तदशः स्तोमः कार्य्य इत्यभिप्रायेणोक्तं स्तोम इति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
द्वादशाध्यायस्य द्वितीयः खण्डः ॥

---

## अथ तृतीयः खण्डः ।

अथाऽस्मिन्नेव तृतीयेऽहनि माध्यन्दिनस्याऽऽद्यं पवमानस्तोत्रीयं तृचं दर्शयति ।

**उच्चा ते जातमन्धस इति गायत्री भवति ॥ १ ॥**

उच्चा त इत्येषा गायत्री गायत्रच्छन्दस्का प्रतिपद्भवति (२)इदमादिकः प्रथमतृच इत्यर्थः ॥ १ ॥

तृतीयेऽहन्यस्य तृचस्य सङ्गतिमाह—

**उद्वद्वा एतदहर्यत्तृतीयं तदेव तदभिवदति ॥ २ ॥**

यत्तृतीयमहः एतदुद्वद्वै उच्छब्दवदेव पूर्वाभ्यामहोभ्यामूर्ध्वमस्य वर्तमानत्वात् ऊर्ध्ववाचिन उच्छब्दस्य तद्रूपता युक्ता । अत एव पूर्व

---

१. स्तोत्रवदस्याऽपीति. ख. पु. । २. प्रतिपदादिकस्तृच इत्यर्थ इति. क. ख. पु. ।

उद्वद्भिर्वद्भिर्वदित्यादिना तृतीयेऽहनि रूपत्वेनोद्वत्त्वं परिगणितम् । तदुद्वत्त्वलक्षणं रूपमेव तदुच्चा त इति वाक्यं वदति । यद्यप्यस्मिन् उदिति पृथक्पदं न(१) श्रूयते तथाऽप्युच्चा त इत्यत्र प्रथमपदस्याऽवयवभूतो य उच्छब्दः तदपेक्षयैवेयं स्तुतिर्द्रष्टव्या ॥ २ ॥

अथैतस्मिन् तृचे पदान्तरस्य श्रवणात् पवमानस्याऽऽरम्भयोग्यस्तृच इति दर्शयति—

**अन्धस्वती भवत्यहर्वा अन्धोऽह्न आरम्भः ॥ ३ ॥**

अन्धस्वती अन्धश्शब्दयुक्ता उच्चा ते जातमन्धस इत्येषा भवति । अन्धः इति सकारान्तमन्ननाम । अत्र तु तत्साधनेऽहनि वर्त्तत इति व्याचष्टे—अहर्वा अन्ध इति । यदिदं दशरात्रस्य तृतीयमहः एतदेवाऽन्धश्शब्दसामान्येन स्तुतिः । तथा सत्यन्धश्शब्दप्रयोगादह्न एव आरम्भ उपक्रमः कृतो भवति ॥ ३ ॥

अथाऽन्यं प्रगाथं विधत्ते—

**अभि सोमास आयव इति ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

बृहद्रथन्तरयोः प्रत्येकं असाधारणमन्यत्र सिद्धं तद्रूपद्वयं तदस्मिन्नहनि प्रदर्शयन् तयोस्साम्नोरस्मिन्नहनि सम्बन्धमाह—

**अभीति रथन्तरस्य रूपं बृहदिति बृहत उभयोः सह रूपमुपैत्युभौ हि वर्णावेतदहः ॥ ५ ॥**

अभि सोमास इत्यत्र यो अभीति शब्दः एतद्रथन्तरस्य रूपम् , अभि त्वा शूरेति तद्योन्यां दृष्टत्वात् , तथाऽस्मिन् प्रगाथे प्रहिन्वान ऋतं बृहदिति बृहच्छब्दः श्रूयते । स च बृहत्साम्नो वाचकत्वात्तस्यैव बृहतो रूपम् । एवं सत्युभयोर्बृहद्रथन्तरयोः सह सहितं संहतं रूपमस्मिन् तृतीयेऽहन्युपैति । हि यस्मात् एतत्तृतीयमहरुभौ वर्णौ बृहद्रथन्तरयोरुभयोरपि यावाकारौ तादृगाकारद्वयात्मकमित्यर्थः । सृष्टिसमये बृहद्रथन्तरे मिथुनीभूय पश्चाद्रथन्तराद्वैरूपस्योत्पत्तेः तत्पृष्ठकस्य तृतीयस्याऽह्नः उभयवर्णात्मकत्वम् । अत्र चैतरेयकं सृष्टिप्रतिपादकं ब्राह्मणं पूर्वमेवोदाहृतम् ॥ ५ ॥

अथ तृचान्तरं विधत्ते—

**तिस्रो वाच ईरयति प्रवह्निरिति तृतीयस्याऽह्नो रूपं तेन तृतीयमहरारभन्ते ॥ ६ ॥**

---

१. गृह्यत इति. ख. पु. ।

तिस्रो वाच इत्ययमन्त्यस्तृचः कार्य्यः । तत्र तिस्र इति त्रिशब्दः श्रूयते । तच्च तृतीयस्याऽह्नो रूपं प्रत्यभिज्ञापकत्वात् । अत एव उद्वत्त्रिवद्दिग्वदित्यादिना पूर्वं त्रित्वयोगस्य तृतीयेऽहनि रूपत्वमुक्तम् । तेन कारणेन त्रित्वसंख्यावाचकेन तिस्र इत्यनेन तृतीयमेवाऽहरारभन्ते अवलम्बन्ते ॥ ६ ॥

ननु गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयमिति प्रसिद्धत्वात् कथमस्य त्रैष्टुभस्य तृचस्य जागतेऽहनि सङ्गतिरिति तत्राह--

त्रिष्टुभः सत्यो जगत्यो रूपेण जागतꣳ ह्येतदहः ॥७॥

तृतीयस्याऽह्न इव जागतस्य छन्दसोऽपि त्रित्वं रूपम्, छन्दसां मध्ये तस्य तृतीयत्वात् । यस्मादेतास्त्रैष्टुभः सत्योऽपि रूपेण जगत्याः सम्बन्धिना त्रित्वादिलक्षणेन युक्ताः तस्मादेता जगत्यः एतदहश्च जागतम् । अतोऽस्मिन्नहनि विनियोगार्हा इत्यर्थः ॥ ७ ॥

अथोत्था त इति प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय प्राकृतिकं तद्ब्राह्मणञ्चाऽतिदिशति--

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ८ ॥

सिद्धमेतत् ॥ ८ ॥

अथ पुनरावृत्तेऽस्मिन्नेव तृचे सामान्तरं विधत्ते--

वैष्टम्भं भवति ॥ ९ ॥

यत् क्षुल्लकवैष्टम्भमिति सम्प्रदायप्रसिद्धं तदस्मिन् तृचे कार्य्यमित्यर्थः ॥ ९ ॥

अथाऽस्यैतत्संज्ञानिर्वचनद्वारेण अहर्दार्ढ्यहेतुतामाह--

अहर्वा एतदव्लीयत तद्देवा वैष्टम्भैर्व्यष्टभ्नुवꣳस्तद्वैष्टम्भस्य वैष्टम्भत्वम् ॥ १० ॥

एतत्तृतीयमहः खलु पुरा अव्लीयत अहिंस्यत व्लीनातिर्हिंसाकर्म्मा शिथिलावयवं जातमित्यर्थः । तत्तदवस्थमहः देवाः वैष्टम्भैरस्य साम्नोऽवयवैर्व्यष्टभ्नुवन् विष्टब्धं विशेषेण स्थिरमकुर्वन् । तत्तस्मात् विष्टम्भनसाधनत्वादस्य वैष्टम्भस्य साम्नो वैष्टम्भत्वं वैष्टम्भमिति संज्ञा संजाता ॥ १० ॥

अथाऽस्य निधनं दिशां धृतिहेतुरित्याह—

दिश इति निधनमुपयन्ति दिशां धृत्यै ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

अभि सोमास आयव इति प्रगाथं तृचीकृत्य तत्राऽऽद्यायां पौरुमद्गा-ख्यं साम गातव्यमिति विधत्ते--

पौरुमद्गं भवति ॥ १२ ॥

स्पष्टोऽर्थः ॥ १२ ॥

तदेतत्साम पापक्षयहेतुरिति प्रतिपिपादयिषुराह—

अहर्वा एतदव्लीयमानं तद्रक्षाꣳस्यन्वसचन्त तस्माद्देवाः पौरुमद्गेन रक्षाꣳस्यपाघ्नन्नप पाप्मानꣳहते पौरुमद्गेन तुष्टुवानः ॥ १३ ॥

वैष्टम्भेन विष्टब्धत्वात् अव्लीयमानमहिंस्यमानमेतदहः रक्षांस्यन्वसचन्त समाप्नुवन्नित्यर्थः । षच समवाये इति धातुः । ततोऽनन्तरं देवाः पौरुमद्गेनाऽनेन साम्ना सङ्गतानि रक्षांसि तस्मादह्नोऽपाघ्नन् (१)अपगमय्य अबन्धिषुः । यस्मादेवं तस्मादिदानीमपि पौरुमद्गेनाऽनेन साम्ना तुष्टुवानः स्तुतवान् यजमानः पाप्मानमपहते विनाशयति॥१३॥

अथाऽस्य संज्ञानिर्वचनद्वारेण(२) पापनिवृत्तिपुरस्सरं शुद्धिहेतुतामाह—

देवाश्च वाऽसुराश्चाऽस्पर्द्धन्त ते देवा असुराणां पौरुमद्गेन पुरोऽमज्जयन्यत् पुरोऽमज्जयꣳस्तस्मात्पौरुमद्गं पाप्मानमेवैतेन भ्रातृव्यं मज्जयति ॥ १४ ॥

देवाश्चाऽसुराश्च पुरा अस्पर्द्धन्त स्पर्द्धाम(३)कुर्वन्। तत्र ते स्पर्द्धमाना देवाः पौरुमद्गेनाऽनेन साम्ना साधनेन असुराणां पुरः पुराणि निवासस्थानानि अमज्जयन् अशोधयन् असुरैर्व्ययोजयन्नित्यर्थः । यद्यस्मादनेन साम्ना पुरोऽमज्जयन् अशोधयन् तस्मात्पौरुमद्गं एतत्साम पौरुमद्गसंज्ञं जातमित्यर्थः । यत एवं ततो हेतोरिदानीमपि(४) एतेन साम्ना स्तुवन् पाप्मानं पापरूपमेव भ्रातृव्यं शत्रुं मज्जयति शोधयति अपगमयतीत्यर्थः । टुमस्जो शुद्धाविति धातुः ॥ १४ ॥

अथैतस्मिन्नेवाऽभि सोमास इति तृचे सामान्तरं गेयमिति विधत्ते-

गौतमं भवति ॥ १५ ॥

स्पष्टोऽर्थः ॥ १५ ॥

---

१. अपहिंसिषुः इति क. पु. २. पापनिवृत्तिं परपस्परमिति क. ख. पु. ।
३. कृतवन्त इति. क. ख. पु. । ४. तुष्टुवान एतेनेति क. ख. पु. ।

अस्य साम्नः पूर्वमाम्नातं ब्राह्मणमत्राऽप्यतिदिशति—

**यदेव गौतमस्य ब्राह्मणम् ॥ १६ ॥**

गौतमं भवति सामार्षेयवत् स्वर्गाय युज्यत इत्यादिकं तदेव चाऽत्रापि द्रष्टव्यमित्यर्थः ॥ १६ ॥

अथाऽस्मिन् साम्नि पादस्याऽऽद्यन्तयोः स्तोममाम्नायते हावभिसोमास आयवो हा ऊ इति । तदेतदस्मिन्नहनि सङ्गतिमाह—

**उभयतः स्तोत्रं तथा ह्येतस्याऽह्नो रूपम् ॥ १७ ॥**

उभयतः पादस्य आद्यन्तयोः स्तोभो यस्य तत्तथोक्तम् तथैव खल्वेतस्य तृतीयस्याऽह्नो रूपमुक्तं प्राक्-यदुभयतः स्तोभं तत्तृतीयस्येत्यादिना ॥ १७ ॥

अथाऽस्मिन्नेवाऽऽवृत्ते तृचे सामान्तरं विधत्ते—

**अन्तरिक्षं भवति ॥ १८ ॥**

पिबा सुतस्य रसिन इत्यस्यामुत्पन्नं सामाऽन्तरिक्षम्, तच्चास्मिन् तृचे गातव्यमित्यर्थः ॥ १८ ॥

साम्नोऽह्नश्च सङ्गतिं दर्शयति—

**अन्तरिक्षदेवत्यमेतदहर्यत्तृतीयमन्तरिक्ष एव तदन्तरिक्षेण स्तुवते प्रतिष्ठायै ॥ १९ ॥**

यदेतत्तृतीयमहः एतदन्तरिक्षदेवत्यं अन्तरिक्षदेवतार्थं अन्तरिक्षमस्य देवतेत्यर्थः । तथा सति अन्तरिक्षदेवत्यत्वात् अन्तरिक्षे अन्तरिक्षात्मक(१) एवैतस्मिन्नहनि अन्तरिक्षेण साम्ना स्तुवते स्तुवन्ति । निराधारेऽन्तरिक्षे स्तवनात् तच्च प्रतिष्ठायै प्रतिष्ठानाय(२)आस्पदाय भवति॥१९॥

नृभिर्येमाण इति द्विपदा अभि सोमास इत्यस्याऽवसान आम्नाता प्रहिन्वान इति पूर्वेण पादेनाऽभ्यस्तायां तस्यामेकं साम गेयमिति विधत्ते—

**आष्कारणिधनं काण्वं भवति ॥ २० ॥**

आष्कार आष् इति शब्दो निधनं यस्य तथाविधं काण्वं नृभिर्येमाण इत्यस्यां गातव्यम् । पूर्वयोरह्नोः प्रयुक्तयोर्बृहद्रथन्तरयोर्ये निधने तद्विलक्षणत्वमस्य निधनस्य प्रतीयते ॥ २० ॥

अतो निधनानां बहुत्वात्समृद्धिर्भवतीत्याह—

**असिति वै राथन्तरं रूपं हसिति बार्हतं तृतीयमेव तद्रूपमुपयन्ति समृद्ध्यै ॥ २१ ॥**

---

१. इत्येतस्मिन्निति क. ख. पु. । २ अभ्यादानायेति. क. ख. पु. ।

अस् इति राथन्तरं रथन्तरसम्बन्धिरूपम् , हासिति बार्हतं बृहतः सम्बन्धि। तयोर्हृते निधने। एतदाप् इति रूपं तृतीयमेव उभयविलक्षणमन्यदेव त्रिसंख्यापूरकमुपयन्ति उपगच्छन्ति प्रयुञ्जते। तथा सति निधनबहुत्वापादकमेतत्तृतीयस्य निधनस्योपायनं समृध्यै यजमानस्य पश्वादिभिः समर्द्धनाय अभिवृद्ध्यै सम्पद्यते॥ २१॥

अथ तिस्रो वाच इत्यस्मिन् त्रैष्टुभेऽन्तिमे तृचे एकं साम विदधाति—

आङ्गिरसाᳬ संक्रोशो भवति॥ २२॥

आङ्गिरसां संक्रोश इति साम्नः संज्ञा। तदस्मिन् तृचे गेयमित्यर्थः॥२२॥

एतत्संज्ञार्थं ब्रुवन् अस्य स्वर्गप्राप्तिसाधनतामाह—

एतेन वा आङ्गिरसः संक्रोशमानाः स्वर्गं लोकमायन् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः स्तोमः॥ २३॥

आङ्गिरसो नाम केचिदृषयः। ते पुरा एतेन खलु साम्ना साधनेन संक्रोशमानाः संहत्य शब्दं परस्पराह्वानरूपं प्रियवाक्यं वदन्तः स्वर्गं लोकमायन्। अतोऽस्य साम्नोऽङ्गिरसांसंक्रोश इति संज्ञेत्यभिप्रायः। अत एतत्साम स्वर्गस्य लोकस्याऽनुख्यात्यै अनुख्यानाय अनुक्रमेण सम्यगनुभवाय भवति। अपि च तुष्टुवानः स्तुतवानपि स्वर्गात् लोकान्न च्यवते न प्रच्युतो भवति। स्तोमश्च पूर्वोक्तः सप्तदश एव विहितेषु सामसु क्रियमाणेषु सम्पद्यत इत्यर्थः॥ २३॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
द्वादशाध्यायस्य तृतीयः खण्डः॥

---

## अथ चतुर्थः खण्डः॥

अथ होतुः पृष्ठस्य स्तोत्रीयं तृचं विधत्ते—

यद्याव इन्द्र ते शतमिति शतवत्यो भवन्ति॥ १॥

यद्यप्येष प्रगाथस्तथापि(१) प्रग्रथनेन त्रित्वात् शतवत्यः शतशब्दयुक्ता भवन्तीति बहुवचनम्॥ १॥

किं तत इत्याह—

शतवद्वै पशूनाᳬरूपᳬ सहस्रवत्पशूनामेवैताभी रूपमवरुन्धे॥ २॥

---

१. प्रगाथेनेति. क. ख. पु.।

पशूनां गवादीनां रूपं स्वरूपं शतवत् शतसंख्यायुक्तं तथा सहस्रवत् सहस्रसंख्यायुक्तञ्च भवति पशूनां नानारूपत्वात्। एताभिः शतवतीभिर्ऋग्भिः पशूनामेव तदपरिमितं रूपमवरुन्धे लभते ॥ २ ॥

अथ ब्रह्मणः पृष्ठस्य स्तोत्रीयं तृचं विदधाति—

**वयङ्घत्वा सुतावन्त इति सतोबृहत्यो वर्षीयश्छन्द आक्रमतेऽनपभ्रंशाय ॥ ३ ॥**

वयं घत्वेत्येतास्तिस्रः सतोबृहत्यः स्तोत्रीया भवन्ति। यद्यप्येतास्तिस्रो बृहत्यस्तृतीयपादस्य द्वादशाक्षरत्वात्, सतोबृहत्यास्तु प्रथमतृतीयौ द्वादशाक्षरौ, अयुजौ जागताविति हि तल्लक्षणम्, तथाऽप्येतासां सतोबृहतीत्वम्। तथा सति बृहत्याः सकाशात् वर्षीयो वृद्धतरं सतोबृहत्यात्मकं छन्द आक्रमते अवष्टभ्नोति। किमर्थम्? अनपभ्रंशाय। न्यूनस्य छन्दस आक्रमणं अपभ्रंशः। सामावयवस्य(१) भ्रंशोऽपगमः स्यात् तदभावार्थम् ॥ ३ ॥

अथाऽच्छावाकपृष्ठस्य स्तोत्रीयं तृचं दर्शयन् तस्य प्रतिष्ठाहेतुतामाह—

**तरणिरित्सिषासति वाजं पुरन्ध्या युजा। आव इन्द्रं पुरुहूतं न मे गिरेत्यावदक्षरमुद्धतामिव वै तृतीयमहर्यदेव तावदक्षरं भवत्यहरेवैतेन प्रतिष्ठापयति ॥ ४ ॥**

तरणिरित्सिषासतीति प्रगाथस्तृचीकृतोऽच्छावाकपृष्ठस्य स्तोत्रीयः तत्र च आव इन्द्रं पुरुहूतं न मे गिरेत्यस्नायते। यद्यपि आव इति उपसर्गो युष्मदादेशश्च पदद्वयम्, तथाऽपि सादृश्यात् आवदक्षरं अवति धातुनिष्पन्नं आव इत्येकं पदं बुद्धौ सन्निधीयते। तृतीयमहश्च उद्धतामिव उत्सादितमिवाऽप्रतिष्ठितं यदेतत् पूर्वोक्तमावदक्षरं भवति एतेनाऽहरेव प्रतिष्ठापयति। अवतेर्हि रक्षणमर्थः। तेन च तत्कार्य्यस्थापनं लक्ष्यते। अतोऽनेन प्रतिष्ठाप्रतिपादनमुपपन्नम् ॥ ४ ॥

अथ पृष्ठस्तोत्रस्य निर्वर्त्तकं साम दर्शयति—

**पञ्चनिधनं वैरूपं पृष्ठं भवति दिशां धृत्यै ॥ ५ ॥**

दिशं विशं हस् इत्यादीनि पञ्च निधनानि यस्य तत्पञ्च निधनं वैरूपं यद्याव इति तृचे क्रियमाणं प्रथमं पृष्ठस्तोत्रं भवति। दिशं विशं हस् अश्वाशिशुमतीति देवतावाचकं वाक्यद्वयं(२) स्वाध्यायपाठे वैरूपस्य यो-

१. भ्रेष इति. क. ख. पु.। २. स्वकीयपाठे इति ख. पु.।

ना उपरिष्टादाम्नातं प्रयोगसमये उत्तरार्द्धर्चस्य प्रथमपादात् पूर्वं दिशं विशमिति प्रयोक्तव्यम्। अथवा शिशुमतीति द्वितीयपादात् पूर्वं एतत्पाद द्वयं देवतावाक्यद्वयं च मिलित्वा चत्वारि निधनानि, इट् इडेति प. पञ्चमं निधनम्। तदुक्तं सूत्रकृता—देवतापदं देवतापदमिति वैरूपे नि. धनानि इति। तानि पञ्च निधनान्यस्मिन् साम्नि प्रयुज्यमानानि दिशां प्राच्यादीनां मध्यदिक्सहितानां पञ्चानां धृत्यै धारणा. य सम्पद्यते ॥ ५ ॥

अपि चाऽन्नाद्यहेतुश्चैतत्सामेत्याह—

पञ्चपदा पाङ्क्तिः पाङ्क्तमन्नमन्नाद्यस्याऽवरुद्ध्यै ॥ ६ ॥

अस्मिन् साम्नि पञ्च निधनानि दृश्यन्ते। पङ्क्तिश्च पञ्चपदा पञ्चभिः पादै रुपेता पाङ्क्तं अन्नं पङ्क्तिसम्बद्धं पञ्चसङ्ख्योपेतं आश्यं पेयं खाद्यं लेह्यं शो. ष्यमित्यादिभेदेन। एवं परम्परया पञ्चसंख्याद्वारेण एतत्साम अन्नाद्य. स्याऽवरुध्यै अवरोधनाय प्राप्तये भवति ॥ ६ ॥

प्रकारान्तरेणैतत्साम स्तौति—

दिशां वा एतत्साम यद्वैरूपं दिशो ह्येवैतेनाऽभिवदति॥७॥

दिशां सम्बन्धि ह्येतत् साम यद्वैरूपाख्यम्। तस्मादेतेन साम्ना दिश एवाऽभिवदति दिशं विशमिति तत्र श्रवणात् ॥ ७ ॥

एवं साम दिक्सम्बन्धेन प्रशस्य ऋतुसम्बन्धेनाऽपि प्रशंसति—

अथ यत्पञ्चनिधनं तेनर्तूनां पञ्च ह्यृतवः ॥ ८ ॥

अथशब्दः प्रकारान्तरद्योतनार्थः। यद्यस्मात्पञ्चनिधनं पञ्चभिर्निधनै. रुपेतं वैरूपम्, तेन कारणेन ऋतूनां सम्बन्धि तद्भवति। ननु वसन्ताद्याः षड्ऋतवः। कथं पञ्चसंख्यया ऋतुसम्बन्ध इति तत्राऽऽह-पञ्च ह्यृतव इति पञ्चसंख्याका अपि ऋतवो भवन्ति, हेमन्तशिशिरयोस्समासेनै. कत्वात् ॥ ८ ॥

अस्तु दिशां ऋतूनां सम्बन्ध्येतत्साम ततः किमित्यत आह—

ऋतुभिश्च वा इमे लोका दिग्भिश्चा ऽऽवृतास्तेष्वेवोभ. येषु यजमानं प्रतिष्ठापयति यजमानं वा अनुप्रतितिष्ठन्त. मुद्गाता प्रतितिष्ठति य एवं विद्वान् वैरूपेणोद्गायति॥९॥

ऋतुभिर्वसन्ताद्यैः कालविशेषैः दिग्भिः प्राच्यादिभिः इमे पृथिव्यादयो लोका आवृता आवेष्टिताः। अत ऋतवो दिशश्च प्राप्तव्याः। तेष्वेवोभयेषु ऋतुषु दिक्षु च यजमानं प्रतिष्ठापयति उद्गाताऽनेन साम्ना प्रतिष्ठितं

करोति, प्रतितिष्ठन्तं यजमानमनु पश्चादुद्‌गाता स्वयमपि प्रतितिष्ठति य उद्‌गाता एवं विद्वान् उक्तप्रकारं ब्राह्मणार्थञ्जानन् वैरूपेणोद्‌गायति उद्गानं करोति ॥ ९ ॥

दिक्छब्दवत्त्वमनूद्य स्तौति—

**दिग्वद्भवति भ्रातृव्यस्याऽपनुत्यै ॥ १० ॥**

दिग्वत् दिक्छब्दयुक्तमेतत्साम भवति भ्रातृव्यस्य शत्रोरपनुत्यै दिग्भ्यः सकाशादपनोदार्थम् ॥ १० ॥

अथाऽस्य प्रथमं निधनमनुवदन् प्राक्प्रदर्शितं दिग्धारणमनेन लभ्यमित्याह—

**दिशं विशमिति निधनमुपयन्ति दिशां धृत्यै ॥ ११ ॥**

दिशं विशमिति प्रथमं निधनमुपयन्ति ब्रुवन्त्युद्‌गातारः। दिक्छब्देन सन्निधापितानां सर्वासां दिशां धृत्यै धारणायैतन्निधनं सम्पद्यत इत्यर्थः ॥ ११ ॥

अथ निधनान्तरं दर्शयति--

**हसित्युपरिष्टाद्दिशां निधनमुपयन्ति तेन बार्हतम् ॥ १२ ॥**

दिशामुपरिष्टाद्दिशं विशमित्यस्मादूर्ध्वं हस् इति निधनमुपयन्ति। तेनैतत्साम बार्हतं बृहतः सम्बन्धि भवति। हसिति हि तस्य निधनं रथन्तरादुत्पत्तेर्वैरूपस्य प्राग्दर्शितत्वात् राथन्तरञ्च भवति ॥ १२ ॥

किमतस्तदाह—

**राथन्तरो वा अयं लोको बार्हतोऽसावुभे एव तद्‌बृहद्रथन्तरयो रूपेणाऽपराध्नोति ॥ १३ ॥**

अयं भूलोको राथन्तरो वै रथन्तरसम्बन्धी, असौ द्युलोको बार्हतो बृहतस्सम्बन्धी तत्तथा सति बृहद्रथन्तरयोः सम्बन्धिना रूपेणाऽस्मिन् साम्नि दृश्यमानेन उभे एव द्यावापृथिव्यौ अपराध्नोति अपेत्ययं वीत्यस्यार्थे व्यपराध्नोति लोकद्वयेऽप्यसान्दिग्धः समृद्धो भवति ॥ १३ ॥

रूपद्वयकरणस्य प्रयोजनान्तरमाह—

**अनड्वाहौ वा एतौ देवयानौ यजमानस्य यद्‌बृहद्रथन्तरे तावेव तद्युनक्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ १४ ॥**

अनड्वाहौ अनड्वाहाविव एतौ वाहनभूतौ यजमानस्य देवयानौ देवलोकप्राप्तिसाधनौ यत् ये बृहद्रथन्तरे तत्तथा सति बृहद्रथन्तरयोः

सम्बन्धिना रूपेण वैरूपगतेन तावेव देवयानौ वाहौ युनक्ति योजयति । किमर्थम् ? स्वर्गस्य लोकस्य समष्ट्यै सम्प्राप्त्यै ॥ १४ ॥

अथ निधनान्तरमनूद्य स्तौति—

अश्ववद्भवति प्रजात्यै ॥ १५ ॥

अश्वा शिशुमतीत्यश्वशब्दयुक्तं निधनं भवति प्रजात्यै प्रजातिरुत्पत्तिः पुत्रादीनामुत्पत्त्यर्थम् । अश्वा शिशुमतीति शिशुभिर्बालैरश्वैरुपेता बडवा प्रतीयते । अतः प्रजातिहेतुता युक्तेत्यर्थः ॥ १५ ॥

नन्वेतस्मिन् साम्नि बहूनां निधनानां प्रयोगे नीरसत्वं स्यादित्याशङ्क्याह—

यथा मण्डूक आट् करोत्येवं निधनमुपयन्त्ययातयामतायै ॥ १६ ॥

यथा खलु मण्डूको लोके वृष्ट्यनन्तरमाट् करोति आट् आट् इत्येवं शब्दं स्वरभेदेन विलक्षणमेव करोति एवं निधनमप्येते विभिन्नस्वरमेवोपयन्ति उपगच्छेयुः । किमर्थम् ? अयातयामतायै नीरसत्वाभावाय रासातिशयजननार्थमित्यर्थः ॥ १६ ॥

अथैतत्साम संवत्सरे प्रतिष्ठासाधनमित्याह—

द्वादश वैरूपाणि भवन्ति द्वादशमासाः संवत्सरः संवत्सर एव प्रतितिष्ठति ॥ १७ ॥

यद्याव इत्यस्यामृच्येव वैरूपमुत्पन्नम् । तत्तत्र च ऋगक्षरव्यतिरिक्तानि द्वादशसंख्यानि वैरूपाणि वैरूप्यापादकानि रूपाणि भवन्ति । तानि च तु वा हि है इत्यादीनि द्रष्टव्यानि । द्वादशसंख्याका मासाः संहताः संवत्सरो भवति द्वादशमासात्मकः संवत्सर इत्यर्थः । अतोऽस्मिन् साम्नि द्वादशसंख्यायोगात् द्वादशमासात्मके संवत्सर एव प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति ॥ १७ ॥

अथाऽनेन संवत्सरव्याप्तिद्वारेणाऽन्नाद्यहेतुरप्येतत्सामेत्याह—

विरूपः संवत्सरो विरूपमन्नमन्नाद्यस्याऽवरुद्ध्यै ॥ १८ ॥

उक्तप्रकारेण संवत्सरो विविधरूपः । अन्नमपि विरूपं व्रीहियवादिभेदेन विविधाकारम् । अतः संवत्सरान्नयोः सादृश्यात् संवत्सरे प्रतिष्ठानेनाऽन्नाद्यस्य अत्तुं योग्यस्याऽन्नस्याऽवरुद्ध्यै अवरोधाय लाभाय भवति ॥ १८ ॥

अथ वयं घत्वेति तृचे गातव्यं साम दर्शयति—

महावैष्टम्भं ब्रह्मसाम भवत्यन्नाद्यस्याऽवरुद्ध्यै ॥ १९ ॥

महावैष्टम्भाख्यं साम ब्रह्मणः पृष्ठस्तोत्रत्वेन कर्त्तव्यम् । तच्चाऽन्नाद्य-स्याऽवरोधार्थं भवति ॥ १९ ॥

तत्कथमनेनाऽन्नाद्यस्याऽवरोधस्तदाह--

**यदा वै पुरुषोऽन्नमत्त्यथाऽन्तरतो विष्टब्धः ॥ २० ॥**

यदा वै यस्मिन् काले हि पुरुषो देही अन्नमत्ति भक्षयति अथाऽन-न्तरमेव अन्तरतश्शरीरमध्ये विष्टब्धो विशेषेण स्तब्धो भवति । अतोऽ-न्नस्य विष्टम्भनहेतुत्वात् वैष्टम्भस्य साम्नो विष्टम्भहेतुभूतस्याऽन्नस्या-ऽवरोधकत्वम् ॥ २० ॥

अथाऽस्य निधनं प्रदर्शयन् तस्य प्रयोजनमाह—

**दिश इति निधनमुपयन्ति दिशां धृत्यै ॥ २१ ॥**

दिश इति निधनद्वारा दिशां वैष्टम्भसम्बन्धात्तासां धृति(१)र्द्धारणं नैश्चल्येनाऽवस्थानं वैष्टम्भेन कृतं भवतीत्यर्थः ॥ २१ ॥

अथाऽस्य साम्न आधारभूतानामृचां छन्दोद्वारेण स्तौति—

**सतो बृहतीषु स्तुवन्ति पूर्वयोरह्नोः प्रत्युद्यमाय ॥ २२ ॥**

सतोबृहतीषु ऋक्षु स्तुवन्ति यस्याः प्रथमतृतीयौ पादौ द्वादशा-क्षरौ द्वावष्टाक्षरौ सा सतोबृहती । एतत्सतोबृहतीषु स्तवनं पूर्वयोः प्रथमद्वितीययोरह्नोः प्रत्युद्यमाय प्रतिरूपत्वेनोद्यमनाय उच्छ्रयणाय भवति । तत्र हि बृहतीषु ब्रह्मसाम भवति अस्मिन्नहनि तु सतो बृहती-ष्विति अधिकाक्षरत्वात् ताभ्यामह्नोभ्यामेतदहरुच्छ्रितं भवति ॥ २२ ॥

अथ तरणिरित्सिषासतीति तृचे गातव्यं साम विधत्ते—

**रौरवमच्छावाकसाम भवति ॥ २३ ॥**

रौरवाख्यं साम अच्छावाकपृष्ठस्तोत्रत्वेन तरणिरित्सिषासतीति तृचे कार्य्यम् ॥ २३ ॥

अनेन साम्ना स्तवनस्य पश्वभिक्रमणहेतुत्वं विवक्षुस्तदर्थं रौरवे-णाऽग्नेः सम्बन्धमाह—

**अग्निर्वै रूरो रुद्रोग्निः ॥ २४ ॥**

एतेन खलु साम्ना पुरा रूरोऽस्त्यत्यर्थं शब्दायमानो रुद्रस्तीक्ष्णो रुद्रात्मको वा अग्निः पशुलक्षणं वीर्य्यं प्राप्नोत् । अत एवाऽस्य रौरवमि-ति संज्ञा अग्नेः पश्वाधिपत्यञ्च जातम् ॥ २४ ॥

एतच्च तद्देवा यशो व्यभजन्त तस्याग्नी रौरवं प्राबृहतेत्यादिना

---

१. रक्षणमिति क. ख. पु. ।

प्रागाम्नातम् । किमतो भवति ? तदाह—

**अग्निर्वा एतस्य पशूनपक्रमयति यस्य पशवोऽप-क्रामन्त्यग्निरेव तस्य पशूनभिक्रमयति यस्य पशवो-ऽभिक्रामन्ति ॥ २५ ॥**

यस्मादुक्तप्रकारेण रुद्रात्मकोऽग्निरनेन साम्ना पशून्(१)प्रापत् त-स्मादग्निरेव एतस्य पशूनपक्रमयत्यपगमयति यस्य यजमानस्य पशवो-ऽपक्रामन्त्यपगच्छन्ति । यस्य च पशवोऽभिक्रामन्ति अभिमुखमाप्नुवन्ति यस्य यजमानस्याऽग्निरेव तस्य पशूनभिक्रमयति प्रापयति अपक्रमणा-भिक्रमणयोरुभयोरग्निरेव कारयितेत्यर्थः ॥ २५ ॥

इत्थमग्नेः पशुस्वामित्वं जानतो रौरवेण स्तुवतः फलमाह—

**अभ्यभ्येवाऽस्य पशवः क्रामन्ति य एवं विद्वान् रौरवेण स्तुवते ॥ २६ ॥**

एवमुक्तमर्थं विद्वान् जानन् यो रौरवेण स्तुवते स्तौति अस्य पशवो-ऽभ्यभ्येव क्रामन्ति सर्वदाऽभिमुखा एव प्राप्नुवन्ति । न तु कदाचि-त्पराङ्मुखा गच्छन्तीत्यर्थः ॥ २६ ॥

अस्मिन् साम्नि विद्यमानमिडाविशेषं प्रदर्श्य तृतीयेऽहनि(२) तस्या-ऽऽनुरूप्यमाह—

**परिष्टुब्धेडं तथा ह्येतस्याऽह्नो रूपꣳ स्तोमः ॥ २७ ॥**

परिष्टुब्धा परितः स्तोभयुक्ता इडा औ २३ हो वा हो ५ इडा इत्येवं-रूपा यस्य तत्परिष्टुब्धेडं इदं रौरवम्, तथा खल्वेतस्य तृतीयस्याऽह्नो रूपं प्रागुक्तं 'परिष्टुब्धेडं तृतीयस्ये'ति । एतेषु पृष्ठस्तोत्रेषु स्तोमः पूर्वोक्त एव सप्तदशः कार्यः इत्यर्थः ॥ २७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
द्वादशाध्यायस्य चतुर्थः खण्डः ॥

---

## अथ पञ्चमः खण्डः ॥

अथाऽस्मिंस्तृतीयेऽहन्यार्भवपवमानस्याऽऽद्यं स्तोत्रीयं तृचं दर्श-यित्वा तस्य(२) तत्राऽऽनुपूर्व्यमाह—

**"तिस्रो वाच उदीरत" इति तृतीयस्याऽह्नो रूपं तेन**

---

१. आप्नोदिति. क. पु. २. तत्राऽऽनुगुण्यमाहेति. क. पु.

तृतीयमहरारभन्ते ॥ १ ॥

'तिस्रो वाच' इत्ययमाद्यस्तृच आर्भवपवमानस्य। एतच्च उच्छब्द-त्रिशब्दयोगात् तृतीयस्याऽह्नो रूपम्। तेन तार्तीयरूपयुक्तेन तृचेन तृतीयमहरारभन्ते गृह्णन्ति ॥ १ ॥

एतदेवोपपाद्यते--

उद्वद्वा एतत् त्रिवदहर्यत् तृतीयं तदेव तदभिवदति ॥ २ ॥

एतदहरुद्वद् उच्छब्दयुक्तमेव, तथा त्रिवत् त्रिशब्दयुक्तं च। उद्वत्त्रिवदित्यादिना तृतीयस्याऽह्नो रूपम्, तथा परिसङ्ख्यानात्। तदेवाह–तृतीयाह्स्सम्बद्धं रूपं तन्मन्त्रवाक्यमभिवदति प्रकाशयति ॥२॥

अथाऽपरां स्तोत्रीयामृचं विदधाति—

"आ सोता परिषिञ्चते"ति परिवत्यो भवन्ति ॥ ३ ॥

आ सोतेत्याद्यास्तिस्र ऋचः परिवत्यः परिशब्दयुक्ता भवन्ति। स्तोमातिरेकपरिहाराय(१) तास्वेकस्यामेव यथाभ्यस्यमानं वाचस्साम गातव्यम्, अन्ये तु विकल्पिता इत्यर्थः ॥ ३ ॥

(२)तदेव प्रशंसति—

अन्तो वै तृतीयमहस्तस्यैताः पर्याप्त्यै ॥ ४ ॥

इदं तृतीयमहरन्तो वै। अनेनैकस्य त्रिरात्रस्य परिसमापनात्तस्याऽह्न एताः परिवत्य ऋचः परिसमाप्तिसूचकत्वात् पर्याप्त्यै परिसमाप्त्यै भवन्ति ॥ ४ ॥

अथाऽपरां स्तोत्रीयां विदधाति—

'सखाय आनिषीदते'त्युद्धृतमिव वै तृतीयमहर्यदाह निषीदतेत्यहरेवैतेन प्रतिष्ठापयति ॥ ५ ॥

'सखाय आनिषीदते'त्येका स्तोत्रीया। सा च निषीदतेति निषदनलिङ्गात् अह्नः प्रतिष्ठाहेतुरित्याहोद्धृतमित्यादिना। उद्धृतमिव वा उत्खातमिव वै खल्वेतत् तृतीयमहर्निषीदत निषण्णा भवत यथास्थानमुपविशतेति तत्र वाक्यं यदाह, एतेन निषादनप्रतिपादकेनाऽहरेवेदं प्रतिष्ठापयति यथास्थानं प्रतिष्ठितं करोति ॥ ५ ॥

---

१. तिसृष्वेकस्यामेवार्चि विधास्यमानमिति. क. ख. पु.

२. तदेतत्प्रशंसतीति. क. पु.

(१)अथाऽपरां स्तोत्रीयां विधत्ते—

**'सुतासो मधुमत्तमा' इत्यनुष्टुभः सत्यो जगत्यो रूपेण जागतᳪ ह्येतदहः ॥ ६ ॥**

सुतासो मधुमत्तमा इति तिस्र ऋचः कार्याः । ताश्चाऽनुष्टुभः सत्यो रूपेण जगत्यो भवन्ति । तथा हि मधुमत्तमा(२) इत्यनेन अतिशयेन मधुरत्वं प्रतिपाद्यते । तच्च तृतीयसवनस्य रूपं आशिरावनयनेन मधुरत्वं रसातिशयस्य करणात् । तृतीयसवनञ्च जगत्याः स्थानम् । अतः परम्परया अतिशयेन माधुर्यं जगत्या रूपमिति तद्वाचको मधुमत्तमशब्दोऽपि जागतं रूपं भवति तद्युक्तत्वात् स्वभावतोऽनुष्टुभोऽपि जगत्यो भवन्ति । एतत्तृतीयमहश्च जागतम् । अत आसामस्मिन्नहनि सङ्गतिः ॥ ६ ॥

अथ तृचान्तरं विधत्ते—

**"पवित्रं ते विततं ब्रह्मणस्पत" इति ॥ ७ ॥**

स्पष्टोऽर्थः ॥ ७ ॥

विततशब्दसूचितां तृचस्य तृतीयेऽहनि सङ्गतिमाह—

**विततमिव वा इदमन्तरिक्षमन्तरेमे अन्तरिक्षदेवत्यमेतदहर्यत्तृतीयं तदेव तदभिवदति ॥ ८ ॥**

इमे द्यावापृथिव्यावन्तरा द्यावापृथिव्योर्मध्ये इदं दृश्यमानमन्तरिक्षं विततं विस्तृतमिव वै । अतोऽनेन विततशब्देनाऽन्तरिक्षमेव सूचितं भवति । शिष्टं स्पष्टम् ॥ ८ ॥

तिस्रो वाच इति प्रथमे तृचे गातव्यं साम विधाय प्राग्वदत्र ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ९ ॥**

सिद्धमेतत् ॥ ९ ॥

अथ तस्मिन्नेव तृचे पुनरावृत्ते सामन्तरं विधत्ते—

**पाष्ठौहं भवति ॥ १० ॥**

पष्ठौहा ऋषिणा दृष्टं पाष्ठौहम् । "(३)दृष्टं साम"त्यण्प्रत्यये भसंज्ञायां "(४)वाह ऊठ्" इत्यूठ्भावे(५) "एत्येधत्यूठ्स्वि"ति वृद्धिः ॥ १० ॥

अथैतत्साम निधनद्वारेण चतुर्थस्याऽह्नः सम्बन्धहेतुरिति दर्शयं-

---

१. अथाऽपरं स्तोत्रीयं तृचमिति. क. ख. पु. । २. इत्यनेनेति. नास्ति ख. ख. पु. ।
३. पा. सू. ४.२.७. ४. पा. सू. ६. ४. १३२. ५. पा. सू. ६. १. ८९.

एतस्योक्तमेव निर्वचनमभिप्रेत्य पष्ठवाहसम्बन्धमाह—

पष्ठवाड्वा एतेनाऽङ्गिरसश्चतुर्थस्याऽह्नो वाचं वदन्तीमुपाशृणोत्स होवागिति निधनमुपैत्तदस्याऽभ्युदितं तदहरवसत् ॥ ११ ॥

पष्ठवाण्णामाऽङ्गिरसः पुरा एतेन (१)साम्नो निधनेन चतुर्थस्य वक्ष्यामाणस्याऽह्नः सम्बन्धिनीं वाचं स्तुतशस्त्रात्मिकां वदन्तीं शब्दायमानां तृतीयेऽहनि स्थित्वा उपाशृणोत् श्रुतवान । तदनन्तरं स ऋषिः होवागिति तां वाचं सम्बोध्य तदेव शब्दरूपमस्य साम्नो निधनमुपैत् उपागच्छत् । अस्य च पाष्ठौहस्य ह्यवसाने पुरा पष्ठवाक् होपेतन्निधनमेव हाऊ वा औ वा २३४५ इति व्यासेन अन्त्यवर्णलोपेन चाऽधीयते, तन्निधनं अस्य तृतीयस्याऽह्नस्सम्बन्धि अभ्युदितं चतुर्थस्याऽह्नो वाचमभिलक्ष्योदितं उच्चारितं तच्चतुर्थमहरवसत् अवासयत् ॥ ११ ॥

आ सोता परीत्यस्यां गातव्यं साम विधत्ते—

वाचः साम भवति ॥ १२ ॥

वाचो वाग्देवतायास्सम्बन्धितया दृष्टं साम वाचस्साम । तदस्यां गेयं भवति ॥ १२ ॥

यज्ञसमृद्धिहेतुतामाह—

वाग्वै द्वादशाहो वाच्येव तद्वाचा स्तुवते यज्ञस्य प्रभूत्यै ॥ १३ ॥

द्वादशाहस्य वागात्मकत्वं प्रागुक्तम् । तत्तथा सति वाचि वागात्मक एव द्वादशाहे वाचा दृष्टत्वात् सामाऽपि वाक् । वागात्मकेन साम्ना स्तुवते स्तुवन्ति । किमर्थम् ? यज्ञस्याऽस्य प्रभूत्यै प्रभूतिः समृद्धिः तदर्थाय ॥ १३ ॥

वाचस्साम्नश्चोक्तमेव सम्बन्धं प्रदर्शयन् आख्यायिकामुखेनाऽस्य साम्नो दर्शनहेतुतामाह—

निष्किरीयाः सत्रमासत ते तृतीयमहर्न प्राजानꣳस्तानेतस्साम गायमानान् वागुपाप्लवत् तेन तृतीयमहः प्राजानꣳस्तेऽब्रुवन्निदं वाव नस्तृतीयमहरदीदृशादिति तृतीयस्यैवैषाऽह्नो दृष्टिः ॥ १४ ॥

१. साम्ना साधनेनेति. क. पु. ।

निष्किरीयाः निष्किरो नाम शाखाविशेषो गोत्रविशेषो वा । तत्सम्बन्धिनो यजमानाः पुरा सत्रं द्वादशाहाख्यं आसताऽन्वतिष्ठन् । ते तत्रत्यं तृतीयमिदमहर्न प्राजानन् । तान् तथाविधान् यजमानानेतत्साम गायमानान् गानं कुर्व्वतः वाक् उपाप्लवत् उपागच्छत् । प्लु गतौ भौवादिकः तेन वाचा गीयमानेनाऽनेन साम्ना तृतीयमिदमहस्ते प्राजानन् प्रकर्षेणाऽनुष्ठानक्रममबुध्यन्त । ज्ञात्वा च ते पुनरब्रुवन् इयं खलु वाक् नोऽस्मान् तृतीयमहरदीदृशत् दर्शितवती । दृशेर्ण्यन्तात् लुङि चङिति ऋकारादेशस्य विकल्पे प्राप्ते "नित्यं छन्दसी"ति नित्यमृकारादेशे कृते च द्विवचनादिके कार्य्ये रूपमेतददीदृशदिति । यस्मादेवमब्रुवन् तस्मात्तृतीयस्याऽह्न एषा दृष्टिः दर्शनसाधनं चक्षुरिन्द्रियस्थानम् ॥ १४ ॥

अथ 'सखाय आनिषीदते'त्यस्यां गातव्यं साम विधत्ते—

**शौक्तं भवति ॥ १५ ॥**

शुक्तिना दृष्टं साम शौक्तम् ॥ १५ ॥

इममेव सम्बन्धं प्रदर्शयन् अस्य साम्न आर्जवेन स्वर्गप्राप्तिहेतुत्वं दर्शयति—

**शुक्तिर्वा एतेनाऽऽङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ १६ ॥**

शुक्तिर्नामाऽऽङ्गिरस ऋषिरेतेन साम्ना अञ्जसा ऋजुगामिना मार्गेण स्वर्गं लोकमपश्यत् अजानात् । दृष्ट्वा च तं लोकं प्राप्य चिरकालमतिष्ठदित्यर्थः । शिष्टं स्पष्टम् ॥ १६ ॥

'सुतासो मधुमत्तमा' इति तृच एकं साम विधाय पूर्वमाम्नातं तत्स्तावकं ब्राह्मणञ्चाऽतिदिशति—

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणम् ॥ १७ ॥**

एतदपि सिद्धं प्राक् ॥ १७ ॥

अथाऽस्मिन्नेवाऽऽवृत्ते तृचे सामान्तरं (१)विदधाति—

**त्वाष्ट्रीसाम भवति ॥ १८ ॥**

त्वष्टुर्दुहितरस्त्वाष्ट्र्यः । ताभिर्दृष्टं साम त्वाष्ट्रीसाम । तत् 'सुतासो मधुमत्तमा' इति तृचे गातव्यम् ॥ १८ ॥

अस्य साम्नस्त्वाष्ट्रीसम्बन्धं प्रतिपादयन् कामप्राप्तिहेतुतां विव-

---

१. विधीयत इति ग. पु. ।

क्षुराह—

इन्द्रं वा अक्ष्यामयिणं भूतानि नाऽस्वापयꣳस्तमेतेन त्वाष्ट्र्योऽस्वापयꣳस्तद्वाव तास्तदकामयन्त ॥ १९ ॥

अक्ष्यामयिणं अक्ष्णोरामयो व्याधिरस्याऽस्तीत्यक्ष्यामयी, तथाविधमिन्द्रं खलु पुरा अन्यानि भूतजातानि नाऽस्वापयन् स्वापयितुं नाऽशक्नुवन्। एवं स्थिते त्वाष्ट्र्यः त्वष्टुर्दुहितर एतेन साम्ना अस्वापयन्। यथा खलु लोके गानविशेषैः अक्षिरोगादिनिमित्तं स्वापरहितान्बालान् स्वापयन्ति, एवमेव श्राव्येणैव सामगानेन (१)अक्ष्यामयं विस्मार्य्य स्वापमकारयन्नित्यर्थः। तस्मिन् काले तद्वाव तदेव खलु स्वापनं तास्त्वाष्ट्र्यः अकामयन्त। कामितश्च तत् एवेन साम्ना निष्पन्नम् ॥ १९ ॥

किं तत इत्याह—

कामसनि साम त्वाष्ट्रीसाम काममेवैतेनाऽवरुन्धे ॥ २० ॥

यदिदं त्वाष्ट्रीसाम एतत्कामसनि यद्यत्कामयते तस्य सर्वस्य सनि दातृ सकलकाम्यमानफलप्रदं साम। तस्मादेतेन साम्ना कामं काम्यमानमभिलाषितं सर्व्वमेव फलजातं अवरुन्धे लभते ॥ २० ॥

तथेदं सामोत्कृष्टवस्तुजन्महेतुरिति विवक्षयाऽऽह—

इन्द्रो वृत्राद्बिभ्यद्गां प्राविशत्तं त्वाष्ट्र्योऽब्रुवञ्जनयामेति तमेतैः सामभिरजनयञ्जायामहा इति वै सत्रमासते जायन्त एव ॥ २१ ॥

इन्द्रः खलु पुरा वृत्रादसुराद्बिभ्यत् भीतः सन् गां प्रविष्टवान्। तस्मिन् समये त्वाष्ट्र्यः त्वष्टुर्दुहितरोऽब्रुवन् तमिन्द्रं जनयाम प्रादुर्भूतं वृत्रस्य पुरस्तात् अवस्थाय योद्धुं शक्तं करवामेति। तामिन्द्रमेतैस्त्वाष्ट्रीसामभिरजनयन्। इदमेकं त्वाष्ट्रीसाम। अन्यान्यपि विद्यन्त इत्यभिप्रायेण बहुवचनम्। जायामहे उत्कृष्टरूपेण जाताः प्रादुर्भूताः प्रशस्ता भवाम इति खल्वभिप्रायेण सत्रमासते सत्रयागं कुर्व्वन्ति। अतोऽनेन साम्ना प्रयुक्तेन जायन्त एव उक्तप्रकारविशिष्टरूपा भवन्त्येव ॥ २१ ॥

अथ पवित्रन्त इत्यन्त्ये तृचे गातव्यं साम विधत्ते—

अरिष्टं भवति ॥ २२ ॥

स्पष्टम् ॥ २२ ॥

एतस्य साम्नः करणमहिंसाहेतुरिति प्रतिपिपादयिषुस्तदर्थं ताव-

---

१. अक्ष्यामयाविनं स्वापयितुमकामयन्निति. क. ख. पु.।

दरिष्टसञ्ज्ञां (१)विवक्षुराह--

देवाश्च वा असुराश्चाऽस्पर्द्धन्त यं देवानामघ्नन्न स समभवद्यमसुराणाᳩसᳩसोऽभवत्ते देवास्तपोऽतप्यन्त त एतदरिष्टमपश्यᳩस्ततोयं देवानामघ्नत् सᳩसोऽभवद्यमसुराणां न स समभवदनेनाऽरिषामेति तदरिष्टस्यारिष्टत्वमरिष्टया एवाऽरिष्टमन्ततः क्रियते ॥ २३ ॥

देवाश्च वा असुराश्च पुरा अस्पर्धन्त स्पर्द्धमाना अयुध्यन्त। तत्र देवानां मध्ये यमसुरा अघ्नन् आयुधैः प्राहरन् स हतः न समभवत् संभूतः पुनरुत्थितो नाऽभूत् । तथा असुराणां मध्ये यं देवा अघ्नन् स पुनः समभवत् प्रहारं तिरस्कृत्य पुनरुत्थितोऽभूत्। एवं स्थिते देवास्तपोऽतप्यन्त अहिंसासाधनं किमिति तत्पर्य्यालोचने तदत्र तपःशब्दवाच्यं तदकुर्व्वन्नित्यर्थः। एवं तपस्तप्यमानास्ते देवा एतदरिष्टं साम अहिंसासाधनमपश्यन्त अपश्यन्। तत एतद्दर्शनानन्तरं देवानां मध्ये यमसुरा अघ्नन् स पुनः समभवत्तथा असुराणां मध्ये यं अघ्नन् देवाः स पुनर्न समभवत् पुनरुत्पन्नो नाऽभूत्। एतस्मिन्नन्तरे अनेन खलु दृष्टेन साम्ना वयं नारिषाम अरिष्टा असुरैर्हिंसिता नाऽभवामेत्यमन्यन्त। तत्तस्मात् अरेषणसाधनत्वात् अरिष्टस्य साम्नो अरिष्टमिति नाम सम्पन्नम्। रिष हिंसायामिति धातुः। एवञ्चारिष्ट्या एव अरिष्टिः अहिंसा । तदर्थमेवारिष्टं साम अन्ततः पवमानस्याऽन्ते क्रियते ॥ २३ ॥

अपि चेदं साम निष्पद्यमानस्य प्रथमस्य त्रिरात्रस्य धृतिहेतुरित्याह—

त्रीडं भवति त्रिरात्रस्य धृत्यै ॥ २४ ॥

तिस्रः इडा यस्मिन् तत्त्रीडम्, तादृशमेतत्साम भवति। अस्य ह्यवसाने हो इडा हो इडा हो २३४५ इडा इति इडाशब्दः त्रिरभ्यस्यते। तस्य त्रिरात्रस्य पूर्व्वे द्वे अहनी, इदमेकमिति त्रयाणामह्नां धृत्यै धारणाय भवति ॥ २४ ॥

तत्रोत्तमायामिडायां विद्यमानं किञ्चिद्धर्म्मविशेषमनूद्य तस्योत्तरेणाऽह्ना सन्तानहेतुतामाह—

द्रवन्तीमिडामुत्तमामुपयन्ति चतुर्थस्याऽह्नः सन्तत्यै स्तोमः ॥ २५ ॥

---

१. निर्विवक्षुरिति. क. ख. पु.।

तासूत्तमामन्त्यामिडां द्रवन्तीं द्रुतमुच्चार्यमाणामुपयन्ति उपगच्छन्त्युद्गातारः। किमर्थम्? चतुर्थस्य वक्ष्यमाणस्याऽह्नस्सन्तत्यै सन्धानायसम्बन्धार्थम्। स्तोमः पूर्वोक्तस्सप्तदश एव। एवं सामसु क्रियमाणेषु निष्पद्यत इत्यर्थः॥ २५॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
द्वादशाध्यायस्य पञ्चमः खण्डः॥

## अथ षष्ठः खण्डः॥

अथ प्राकृतमेवाऽग्निष्टोमसाम तत्र न किञ्चिद्वक्तव्यमस्तीत्यभिप्रायेण त्रयाणामुक्थ्यानां स्तोत्रीयास्तृचः प्रदर्श्यन्ते। तत्र प्रथमस्योक्थस्तोत्रस्य स्तोत्रीयं तृचमाह—

**प्रमंहिष्ठाय गायतेति॥ १॥**

स्पष्टोऽर्थः॥ १॥

तदेतद्रूपं प्रशंसति—

**यद्गायतेति महस एव तद्रूपं क्रियते॥ २॥**

यद्गायतेति गातॄणां बहुत्वं तन्महसस्तेजस एव रूपं तेन क्रियते। लोके हि तेजस्विनामेव राज्ञां बहवो गायका भवन्तीति॥ २॥

अथ द्वितीयस्योक्थ्यस्य स्तोत्रीयं तृचं प्रदर्श्य तृतीयसवनयोग्यतां दर्शयति—

**'तं ते मदङ्गृणीमसी'ति मद्वद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति॥ ३॥**

व्याख्यातमेतत् 'प्रसोमासो मदच्युत' इत्यत्र॥ ३॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति—

**'श्रुधीहवं तिरश्च्या' इति श्रुत्या एव॥ ४॥**

श्रु श्रवण इत्यस्मान्निष्पन्नस्य श्रुधीशब्दस्य कीर्त्तनात् अयं तृचः श्रुत्यै श्रवणायैव बाधिर्य्याभावाय सम्पद्यते॥ ४॥

अथ प्रथमे उक्थ्ये यो विहितस्तृचस्तस्मिन् गेयं साम दर्शयति—

**प्रमंहिष्ठीयं भवति॥ ५॥**

प्र मंहिष्ठाय गायतेति योनावुत्पन्नं साम प्रमंहिष्ठाशब्दयोगात् प्रमंहिष्ठीयम्। तदत्र प्रमंहिष्ठेति तृचे कर्त्तव्यम्॥ ५॥

तदेतत्स्तौति—

प्रमंहिष्ठीयेन वा इन्द्रो वृत्राय वज्रं प्रावर्त्तयत्तम-स्तृणुत भ्रातृव्यवान् प्रमंहिष्ठीयेनोक्थानि प्रणयेत स्तृ-णुते भ्रातृव्यं वसीयाꣳ आत्मना भवति ॥ ६ ॥

प्रमंहिष्ठीयेनाऽनेन साम्ना खलु पुरा इन्द्रो वृत्राय वृत्रं हन्तुं वज्रं प्रावर्त्तयत् प्राक्षिपत् । तदनन्तरं तं अस्तृणुत अहिंसीत् । स्तृ हिंसाया-मिति धातुः । अत इदानीमपि भ्रातृव्यवान् विद्यमानशत्रुर्यजमानः प्रमंहिष्ठीयेनाऽनेन साम्ना उक्थानि प्रणयेत । सामान्याभिप्रायं बहुवच-नम् । प्रथममुक्थस्तोत्रं स्तुवीत । ततो भ्रातृव्यं शत्रुं प्रति प्रयुक्तेनाऽनेन साम्ना स्तृणुते हिनस्ति । अपि च वसीयान् वसुमत्तमः श्रेष्ठश्चाऽऽ-त्मना स्वयमेव भवति ॥ ६ ॥

अथ 'तं ते मदं गृणीमसी'ति विहिते तृचे गातव्यं साम दर्शयति—

हारिवर्णं भवति ॥ ७ ॥

हरिवर्णेन ऋषिणा दृष्टं साम हारिवर्णम् ॥ ७ ॥

अथाऽस्य साम्नो निधनं शोकापहतिहेतुरिति विवक्षुस्तदर्थमा-ख्यायिकमाह—

इन्द्रश्च वै नमुचिश्चाऽसुरः समदधातां न नो नक्तन्न दिवाऽहनन्नाऽऽर्द्रेण न शुष्केणेति तस्य व्युष्टायामनुदित आदित्येऽपां फेनेन शिरोऽछिनदेतद्वै न नक्तं न दिवा यत् व्युष्टायामनुदित आदित्य एतन्नाऽऽर्द्रन्न शुष्कं यदपां फेनस्तदेनं पापीयां वाचं वदन्नन्ववर्त्तत वीरहन्न हुहो हुह इति तन्नर्चा न साम्नाऽपहन्तुमशक्नोत ॥ ८ ॥

इन्द्रश्च नमुचिर्नामाऽसुरश्च पुरा समदधातां सन्धानमकुर्वाताम् । नावावयोरन्यतरोऽपि नक्तं रात्रौ न हनन् न हन्तव्यः, दिवा अहन्यपि तथा न हन्तु, तथाऽऽर्द्रेण च न हन्तु, नाऽपि शुष्केण नीरसेन वज्रादिनेति । एतत् उक्तं भवति—इन्द्रः सर्वानसुराञ्जित्वा सर्व्वेभ्योऽसुरेभ्योऽधिकं नमुच्याख्यमसुरं बलात् जग्राह । स चाऽसुरः इन्द्रादधिकबलः सन् त-मेव जग्राह । गृहीत्वा च त्वां विसृजामि, यदि त्वं मां अहोरात्रयोः आ-र्द्रेण शुष्केण मा हन्या इति । एवमात्मकं सन्धायकं वाक्यमिन्द्रं प्रत्यु-क्तवानिति ।

तस्याऽयमभिप्रायः—अहोरात्रव्यतिरिक्तकालोऽपि नाऽस्ति आर्द्रशुष्कविलक्षणं साधनमपि नाऽस्ति, यस्मिन् काले तेन साधनेन मां हन्यादिति । एतच्च तैत्तिरीयकेऽतिस्पष्टमाम्नातम्-'इन्द्रो वृत्रं हत्वा । असुरान् पराभाव्य । नमुचिमासुरं नाऽलभत । तं शच्या गृह्णात् । तौ समलभेतां सोऽस्मादभिसृततरोऽभवत् । सोऽब्रवीत् सन्धां सन्दधावहै । यत् वाचः स्रक्ष्यामि । न मा शुष्केण नार्द्रेण हनः । न दिवा न नक्तमि'त्यादिना । एवं सन्धानानन्तरमिन्द्रः व्युष्टायामुषसि जातायां आदित्ये चाऽनुदिते उदयमप्राप्ते योऽन्तरालः कालः तस्मिन् तस्य नमुचेः शिर अपां विकारेण फेनेन वज्रीकृतेनाऽच्छिनत् द्वैधीकृतवान् अत्रधीदित्यर्थः । एवं कृते पूर्वकृतस्य सन्धानस्याऽविहतिरुच्यते-एतद्वा इत्यादिना । एतद्वै एतत् खलु न नक्तं न रात्रिः न दिवा यद्व्युष्टायामुषसि जातायामादित्ये चाऽनुदिते । एतच्च नाऽऽर्द्रो न शुष्कः यदपां फेनः । एवं पूर्वकृतसन्धानाविरोधेन नमुचौ हते एतमिन्द्रमनु पश्चात् तन्नमुचिहननं पापीयां निकृष्टां वाचं वदत् अकथयत् अवर्त्तयत् । काऽसौ पापी वाक् उच्यते? हे वीरहन् वीरस्य शत्रुभूतस्य नमुचेर्हन्तः, अद्रुहो द्रुह इति वीप्सायां द्विर्वचनम्, द्रोहं कृतवानसि इति । एवमाक्रुश्यमाण इन्द्रः तद्वचनं ऋचा ऋगात्मकेन मन्त्रेण हन्तुं नाऽशक्नोत् । तथा साम्ना गानविशिष्टेन मन्त्रेण अपहन्तुं विनाशयितुं नाऽशक्नोत् ॥ ८ ॥

तर्हि केनाऽपहतवानिति तदाह—

**हारिवर्णस्यैव निधनेनाऽपाहत ॥ ९ ॥**

हरिश्रियां इत्येवं रूपेण हारिवर्णस्य निधनेनैव तत्पापीयां वाचं प्रकटयन्नमुचिहननं अपाहत अपहतवान् । ततः तेजस्वी श्रीमांश्चाभूत् ॥ १० ॥

(१)अतोऽद्याप्यनेन निधनेन एतत् फलं भवतीत्याह—

**अपशुचꣳहते हारिवर्णस्य निधनेन श्रियञ्च हरश्चोपैति तुष्टुवानः ॥ १० ॥**

अद्यतनोऽपि तुष्टुवानः स्तुवन् हारिवर्णस्य निधनेन हरिश्रियामित्यनेन प्रयुज्यमानेन शुचं शोकमपहते हरिश्रियामिति पदद्वयेनोपस्थापितं श्रियं सम्पदञ्च हरस्तेजश्चेत्येतत् द्वयं उपैति उपगच्छति प्राप्नोति ॥ १० ॥

---

१. अतोऽद्यत्वेपीति. क. पु. ।

अथ तृतीये तृचे गेयं साम दर्शयति—

**तैरश्च्यं भवति ॥ ११ ॥**

स्पष्टोऽर्थः ॥ ११ ॥

आख्यायिकया ऽस्य साम्नस्संज्ञां (१)निर्ब्रुवन् पापापहतिहेतुतामाह—

**आङ्गिरसः स्वर्गं लोकं यन्तो रक्षाᳬस्यन्वसचन्त तान्येतेन तिरश्चाऽऽङ्गिरसस्तिर्यङ् पर्य्यवैद्यात्तिर्य्यङ्पर्यवै-त्तस्मात्तैरश्च्यं पाप्मा वाव स तानसचत तं तैरश्च्येना-ऽपाघ्नताऽपपाप्मानᳬहते तैरश्च्येन तुष्टुवानः ॥ १२ ॥**

पुरा कृतयागानुष्ठानात् स्वर्गं लोकं यन्तो गच्छन्तोऽङ्गिरसो रक्षांसि राक्षसा अन्वसचन्त अन्वगच्छन् समवेताः संसृष्टा अभूवन् । षच सम-वाय इति धातुः । तानि रक्षांसि अङ्गिरसस्तिर्य्यङ् तिरोऽञ्चन् एतत्संज्ञ ऋषिः तिरसा तिरोऽञ्चता तिर्य्यक् वर्त्तमानेनैतेन साम्ना पर्य्यवैत्(२) परितोऽगच्छत् । यत् यस्मादनेन साम्नाऽङ्गिरसस्तिर्यङ् पर्यवैत् परितोऽ गच्छत् , तस्मात्तैरश्च्यं तिरश्चसम्बन्धादस्य साम्नः तैरश्च्यमिति नाम सम्पन्नम् । अस्तु प्रकृते किमायातम् ? उच्यते–पाप्मा वाव सः पापमे-व सः पूर्वोक्तरक्षोरूपेण वर्त्तमानः तानङ्गिरसोऽसचत समवेतस्सङ्ग-तोऽभूत् । तं पाप्मानं तैरश्च्येन साम्ना अपाघ्नत अपहतवन्तः । तस्मा-दद्यतनोऽपि तैरश्च्येन तुष्टुवानः पाप्मानमपहते ॥ १२ ॥

अथैतेषु त्रिषूक्थेषु स्तोमक्लृप्तिं प्रदर्श्य विशेषफलहेतुतामाह—

**सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥ १३ ॥**

गतार्थमेतत् ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
द्वादशाध्यायस्य षष्ठः खण्डः ॥

---

## अथ सप्तमः खण्डः ॥

अथ दशरात्रस्य चतुर्थेऽहनि सर्व्वेष्वपि स्तोत्रेषु एकविंश एव स्तोमः । तत्र बहिष्पवमानस्य एकविंशतिसंख्या स्तोत्रीया ऋचः । तस्याऽऽद्यं स्तोत्रीयं तृचं दर्शयति—

---

१. निर्वचन्निति. क. पु. । २. परितो वाऽगच्छत् अजानादिति क. पु. ।

'प्र त आश्विनीः पवमानधेनव' इति चतुर्थस्याऽऽह्नः प्रतिपद्भवति ॥ १ ॥

प्र त आश्विनीरिति तृचः चतुर्थस्य दाशरात्रिकस्याऽह्नः प्रतिपद्भवति प्रथमस्तृचो भवति । बहिष्पवमानस्याद्यस्तृचः इत्यर्थः ॥ १ ॥

अस्मिन् चतुर्थेऽहनि तस्य तृचस्य सङ्गतिमाह—

आप्ते त्रिरात्रे रूपेण गायत्र्यो द्वितीयं प्रयन्ति प्रेति वै गायत्र्या रूपम् ॥ २ ॥

दशरात्रे दशममहर्विहाय त्रयस्त्रिरात्राः पूर्वं विभज्य स्तुताः । तत्र प्रथमे त्रिरात्रे गायत्रमहः प्रथमम्, त्रैष्टुभं द्वितीयम्, जागतं तृतीयम् । यस्मिन् त्रिरात्रे आप्ते समाप्ते सति गायत्रीत्रिष्टुब्जगतीनां गतैस्तृभिरहोभिः समाप्तत्वात् पुनरपि द्वितीये त्रिरात्रे गायत्रीत्रिष्टुब्जगतीभिरेव पूर्ववत् क्रमेणाऽह्नां कल्पयितव्यत्वात् विहितस्य तृचस्य जागतत्वात् तत्र मुख्यगायत्र्यसम्भवात्तत्सद्भावो भाक्त इत्यभिप्रायेणाऽऽह गायत्र्या रूपेण गायत्रीछन्दसो रूपेण द्वितीयं त्रिरात्रं प्रयन्ति प्रक्रमन्ते । किं तद्गायत्र्या रूपम्; यत्सद्भावादस्य तृचस्य गायत्रत्वं स्यादिति । तदुच्यते प्रेति प्र इत्ययमुपसर्गः खलु गायत्र्याऽनुरूपं एति प्रेत्याशुमदित्यादिना गायत्र्यादिस्तद्रूपस्याऽभिहितत्वात् ॥२॥

नन्वेवं मुख्यो गायत्र एव तृचः प्रथमं विधेयः । किमनया बकबन्धप्रयासकल्पनयेत्यत आह—

जगती प्रतिपद्भवति जागतमेतदहर्यत्तृतीयञ्जगत्या एव तज्जगतीमभिसंक्रामन्ति ॥ ३ ॥

उक्ता जगतीछन्दस्कैव प्रतिपद्भवति । किमर्थं जागतं जगतीछन्दस्कमेतदहर्यत्तृतीयमनुष्ठितम्, तत्तथा सति जगत्या एव पूर्वास्मिन्नहनि प्रयुक्तत्वात्जगत छन्दस एव जगतीं जागतमेव छन्दोभिः संक्रामन्ति । यथा वृक्षमारूढः पुरुषः कस्याञ्चिच्छाखायामवस्थितः (१)उन्नतत्वेन सदृशीं शाखां अभिक्रामति नाऽधस्तनीं नोपरितनीं एवमेव जगत्याः सकाशाज्जगतीमेवाऽभिसंक्रामन्ति ॥ ३ ॥

एतदेव व्यतिरेकमुखेन द्रढयति—

यदतोऽन्या प्रतिपत्स्यात् प्रतिकूलं वाऽनुकूलं वा स्यात् ।४।

---

१. औन्नत्येन सदृशीमेवाऽन्यां शाखामतिक्रमितीति. क. ख. पु.

अतोऽस्या जगत्या अन्या अन्यच्छन्दस्का गायत्र्यादिका यत् यदि प्रतिप-त्स्यात् तर्हि प्रतिकूलं वाऽनुकूलं वा स्यात्। छन्दोन्तरसंक्रमणपक्षे प्राति-कूल्यं भवेत्, आनुकूल्यमपि पाक्षिकम्। यथोन्नतायां वृक्षस्याऽग्रशाखाया-मवस्थितः पुमान् अधस्तादूदूरदेशे वर्त्तमानां शाखां पादेनाऽवष्टभ्नुवन् पादविश्लेषात्कदाचिदधः पतति कदाचित्तत्रैव तिष्ठति, तद्वत्। तस्मा-ज्जगत्यैवाऽस्याऽह्नः प्रतिपदा भवितव्यमित्यर्थः ॥ ४ ॥

अथाऽनुरूपाख्यं बहिष्पवमानस्य द्वितीयं तृचं दर्शयति—

**पवमानो अजीजनदित्यनुरूपो भवति ॥ ५ ॥**

अयं तृचोऽनुरूपाख्यो द्वितीय इत्यर्थः। नन्वयं गायत्रस्तृचः स्तो-त्रीयस्तु जागतः। कथं तेनाऽस्याऽऽनुरूप्यम्? देवताद्वारेति ब्रूमः। अत एवोत्तरत्राऽऽम्नास्यते-पूर्वमुचैव तद्रूपमिति। ननु पूर्वयोरह्नोः स्तो-त्रीयानुरूपाणां छन्दसामपि सारूप्यं दृष्टम्, तद्वदत्राऽपि भवितव्यम्। सत्यं भवितव्यम्, यदि समूढद्वादशाहोऽभिहितः स्यात्। अस्मिंस्तु ब्रा-ह्मणे व्यूढ एव द्वादशाहो विहितः। अतस्तदीयस्यैव दशरात्रस्य स्तो-मक्लृप्तिरत्र विधीयते। तत्र च द्वितीये त्रिरात्रे जागतं प्रातस्सवनम्, गा-यत्रं माध्यन्दिनम्, त्रैष्टुभं तृतीयसवनं 'गायत्रमध्यो द्वितीय' इति हि प्रा-गाम्नातम्। तस्मादवश्यं जगत्या भाव्यमित्यभिप्रायेण पूर्वं जागतस्तृचो विहितः। एवं च द्वितीयस्य तृचस्य प्रथमेन छन्दसा सारूप्यसम्भवात् देवताद्वारैवाऽऽनुरूप्यमित्यभिप्रायः ॥ ५ ॥

अजीजनदिति जनिधातुयोगादयं तृचश्चतुर्थेऽहनि सङ्गत इत्याह—

**जनद्वद्वा एतदहर्यच्चतुर्थमन्नाद्यञ्जनयति विराजञ्ज-नयत्येकविंशꣳ स्तोमञ्जनयति ॥ ६ ॥**

यच्चतुर्थमहरेतत् जनद्वद्वै जनिधातुनिष्पन्नशब्दयुक्तमेव खलु, रा-जन्वज्जनद्वत्सूर्य्यवद्विराडनुतोदवदित्यादिना चतुर्थस्याऽह्नो रूपत्वेन तस्य परिगणितत्वात्। यद्यपि 'इक्श्तिपौ धातुनिर्देश' इति स्मरणात् जनिमदित्येव वक्तव्यम्, तथाऽपि 'पवमानो अजीजन'दिति मन्त्र दर्शनात्तदनुकरणेन जनद्वदिति निर्देशः। तस्मादस्मिंश्चतुर्थेऽहनि तल्लिङ्ग युक्तस्तृचस्सङ्गत इत्यर्थः। किञ्च जननेन जनिधातुयुक्तेन तृचेन अन्ना-द्यमन्नयोग्यं चरुपुरोडाशादिकं यागपर्याप्तं जनयति, तथा विराजं विराट्छन्दस्कं अस्मिन्नहनि पृष्ठस्तोत्रे चिकीर्षितं जनयति। तथा एक-विंशं एकविंशतिस्तोत्रीयात्मकं स्तोमं जनयति। अयमर्थः-पवमानः पू-यमानस्सोमो अजीजनत् अजनयदिति दृश्यते। तच्च जननमपेक्षित-

मन्नाद्यादीनामेवेति (१)अर्थादध्यवसीयत इति ॥ ६ ॥

यत्प्रागवादिष्म देवतासारूप्यादस्य तृचस्य स्तोत्रीयेणाऽऽनुरूप्य-मिति तत्प्रदर्शयन् अस्याऽनुरूपसंज्ञां निर्व्वक्ति—

**पूर्वमु चैव तद्रूपमपरेण रूपेणाऽनुवदाति तदनुरूप-स्याऽनुरूपत्वम् ॥ ७ ॥**

व्याख्यातमेतत् ॥ ७ ॥

एतद्वेदनफलमाह—

**अनुरूप एनं पुत्रो जायते य एवं वेद ॥ ८ ॥**

एतदपि सिद्धम् ॥ ८ ॥

(२)अन्तिमौ तृचौ संयुज्य स्तौति—

**स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुध्यै ॥९॥**

गतमेतत् ॥ ९ ॥

अथ 'प्रयद्गाव आशुरवे'ति षडृचद्वयं विदधाति—

**षडृचौ भवत ऋतूनां धृत्यै ॥ १० ॥**

पूर्वोक्ततृचद्वयानन्तरमेतौ द्वौ षडृचौ भवतः। षडृचो यस्मिन् स तथोक्तः (३)'ऋक्पूरब्धूः पथामानक्षे' इत्यसमासान्तः। तत इतरेतर-सम्बन्धयोगे द्वन्द्वः। एतच्च द्वितयं षट् संख्यायोगात् ऋतूनां वसन्ता-दीनां षण्णां धृत्यै धारणाय कल्पते। एवं बहिष्पवमानस्याऽष्टादशस्तो-त्रीया गताः ॥ १० ॥

अथाऽन्त्यं तृचं विधत्ते—

**तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्यु-द्यन्ति ॥ ११ ॥**

'हिन्वन्ति सूर'मिति तृचः तिस्र ऋचो यस्मिन् स तथोक्तः ऋचि त्रेरुत्तरपदादिलोपश्छन्दसीति त्रिशब्दस्य सम्प्रसारणम्। उत्तरपदे ऋकारस्य लोपः। स उत्तमः बहिष्पवमानस्याऽन्तिमो भवति। शिष्टं स्पष्टम् ॥ ११ ॥

एवं स्तोत्रीयासु कृतासु यस्स्तोमस्सम्पद्यते तं स्तोमं विदधानः प्रतिष्ठाफलताञ्चाऽऽह—

**एकविंश एव स्तोमो भवति प्रतिष्ठायै प्रतितिष्ठति ॥१२॥**

---

१. अर्थादध्यवसाय इति. क. पु. २. अथेमौ तृचाविति. क. ख. पु.

३. पा. सू. ५. ४. ७४.

एकविंशतिसंख्याक एव स्तोत्रीयाणां समूह एकविंशस्तोमो विधिः। पञ्चदशाध्यर्द्धमिति एकविंशतिशब्दार्द्धे प्रत्ययेति विंशते- र्डितीति त्रिशब्दलोपः। स एवाऽस्य बहिष्पवमानस्य स्तोमो भवति। किमर्थम्? प्रतिष्ठायै प्रतिष्ठार्थम्। अतो यजमानः प्रतितिष्ठति। प्रतिष्ठा आस्पदं तद्वान् भवति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये सायणाचार्यविरचिते वेदार्थ- प्रकाशे द्वादशाध्यायस्य सप्तमः खण्डः ॥

## अथाऽष्टमः खण्डः ॥

अथ तस्मिन्नेव चतुर्थेऽहनि चत्वार्याज्यस्तोत्राणि। तत्र प्रथम- स्याऽऽज्यस्य स्तोत्रीयं तृचं विदधाति—

**'जनस्य गोपा अजनिष्ट जागृविरि'त्याग्नेयमाज्यं भ- वति ॥ १ ॥**

'जनस्य गोपा' इति तृचमाग्नेयमग्निदैवत्यं आज्यं प्रथमाज्यस्तोत्रं भवति ॥ १ ॥

अजनिष्टेति जनिधातुयोगात्पूर्ववच्चतुर्थेऽहनि(१) जनद्वल्लिङ्गात् अयं तृचस्सङ्गत इति प्रतिपादयंस्तस्य विशिष्टफलजननहेतुतामाह—

**जनद्वद्वा एतदहर्यच्चतुर्थमन्नाद्यञ्जनयति विराजञ्ज- नयत्येकविंꣳशꣳ स्तोमञ्जनयति ॥ २ ॥**

पूर्ववद्व्याख्येयम् ॥ २ ॥

अथ द्वितीयमाज्यस्तोत्रं दर्शयति—

**'अयं वां मित्रावरुणे'ति बार्हतं मैत्रावरुणम् ॥ ३ ॥**

अयं वां मित्रावरुणेति तृचे(२) बार्हतं बृहत्सामसम्बन्धि मैत्रावरुणं मित्रावरुणदेवताकं हि तृतीयमाज्यस्तोत्रं भवति। यदा ज्योतिष्टोमे पृष्ठ- स्तोत्रे बृहत्साम क्रियते, तदेवाऽस्य तृचस्य प्रातस्सवने प्रयोगात् बार्ह- तत्वम् ॥ ३ ॥

नन्वेवमत्र वैराजं साम पृष्ठस्तोत्रं कथमस्य तृचस्य तेन सङ्गतिरि-

१. जनद्वल्लिङ्गमेवाऽयं तृचस्स्यादिति. क. ख. पु.

२. मित्रश्च वरुणश्च देवता अस्येति मैत्रावरुणं बार्हतमपि भवति यदेति. ख. पु.।

ति तत्राऽऽह—

**बृहदेतत्परोक्षं यद्वैराजं बार्हतमेव तद्रूपं निर्योतयति ॥४॥**

यद्वैराजं साम एतत्परोक्षं(१) परोक्षेण रूपान्तरेण स्थितं बृहत्सामैव। तथा च तैत्तिरीयके 'बृहच्च वा इदमग्रे रथन्तरञ्चाऽऽस्तामि'ति प्रक्रम्य 'ते द्वे भूत्वा रथन्तरञ्च वैरूपञ्च बृहदित्यमन्येतां तद्गर्भमधत्त तद्वैराजम-तिसृजते'ति बृहतस्सकाशाद्वैराजस्योत्पत्तिः श्रूयते । तस्माद्वैराजस्य बार्हतत्वाद्बार्हतं बृहत्सम्बन्ध्येव रूपं निर्योतयति निष्कृत्य प्रकाशयति॥

अथ तृतीयस्याऽऽज्यस्तोत्रीयं तृचं विधत्ते—

**'इन्द्रो दधीचो अस्थभिरि'ति दाधीचस्तृचो भवति ॥५॥**

'इन्द्रो दधीच' इति दाधीचो दधीचसम्बन्धी तृचः ऐन्द्रः तृतीये आज्यस्तोत्रीयः कार्य्यः। दध्यङ् शब्दात्तस्येदमित्यर्थे अणि भसंज्ञायां 'अच' इत्यकारलोपे चाविति दीर्घत्वम् ॥ ५ ॥

अत्रेन्द्रो दधीच इति(२) शब्दसूचकं साध्यं फलमाह—

**दध्यङ्वा आङ्गिरसो देवानां पुरोधानीय आसीदन्नं वै ब्रह्मणः पुरोधा अन्नाद्यस्याऽवरुध्यै ॥ ६ ॥**

दध्यङ्नाम आङ्गिरसोऽङ्गिरोगोत्र ऋषिर्देवानामग्न्यादीनां पुरोधानीयः पुरस्ताद्धारणीय आसीत् अभवत्। स चाऽत्र दधीच इति षष्ठ्यन्तेन पदेन मन्त्रैः प्रकाशितः ब्रह्मणो ब्राह्मणजातेः अन्नं वै अन्नमेव पुरोधाः पुरोधारणीयः। तस्माद्दधीच इत्यनेन पुरोधानस्मरणात् ब्राह्मणानां पुरस्ताद्धारणीयस्य अन्नाद्यस्याऽत्तुं योग्यस्याऽन्नस्याऽवरुध्यै अवरोधनाय प्राप्त्यर्थं एतत्तृचकरणं भवति ॥ ६ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति—

**'इयं वामस्य मन्मन' इत्यैन्द्राग्नम् ॥ ७ ॥**

'इयं वामस्येति' तृचः ऐन्द्राग्नं इन्द्रदेवताकं चतुर्थमाज्यस्तोत्रं भवति ॥ ७ ॥

तत्रत्यं किञ्चिल्लिङ्गमनूद्य चतुर्थेऽहनि सङ्गतिं प्रदर्शयन् अन्नाद्यफलमेतदिति स्तौति—

**'इन्द्राग्नी पूर्व्यस्तुतिरभ्रादृष्टिरिवाऽजनी'त्यानुष्टुभी**

---

१. पारोक्ष्येण रूपान्तरेणाऽवस्थितमिति. क. ख. पु.

२. शब्दसूचितमिति. क. ख. पु.

वै वृष्टिरानुष्टुभमेतदहर्यच्चतुर्थं समीच्यौ विराजौ दधात्यन्नाद्याय स्तोमः ॥ ८ ॥

अस्मिन् तृचे अभ्रादुवृष्टिरिवाऽजनीति वृष्टिशब्दः श्रूयते । सा च वृष्टिरानुष्टुभी वागनुष्टुबिति श्रुतेरनुष्टुब्वाग्रूपा मध्यमिकाया वाचस्सम्बन्धित्वात् वृष्टेरानुष्टुभत्वव्यपदेशः । एतदहरानुष्टुभमनुष्टुप्छन्दस्कं यच्चतुर्थं चतुस्सङ्ख्यापूरकं दाशरात्रिकं तृतीयमहः। अतो वृष्टिद्वारा तृचस्याऽनुष्टुप्सम्बन्धात्तत्र सङ्गत इत्यर्थः । अभ्रादुवृष्टिरित्यस्योपलक्षणार्थे- वेन्द्राग्नी पूर्व्यस्तुतिरित्यादेरनुवादः । गायत्रीत्रिष्टुब्जगतीत्येतानि त्रीण्येव छन्दांसि पुरा आसन् । तानि षट्सङ्ख्यानि पृष्ठान्यहानि प्राप्तुमसमर्थान्यभवन्, ततो व्याप्त्युपायमालोच्य पुनरन्यानि त्रीणि छन्दांसि अजनयन्, गायत्र्यास्सकाशादनुष्टुप्, त्रिष्टुभः पङ्क्तिः, जगत्या अतिछन्दः । एवं गायत्र्याद्याः षट्संख्या भूत्वा पृष्ठानि षडहानि क्रमेण व्याप्नुवन् । अतश्चतुर्थस्याऽह्न आनुष्टुभत्वम् । ब्राह्मणञ्च भवति–'गायत्रं वै प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयमानुष्टुभं चतुर्थमि'ति । छन्दसामुत्पत्तिश्चैतरेयके समाम्नायते—'सा गायत्री गर्भमधत्त । साऽनुष्टुभमसृजत । त्रिष्टुब्गर्भमधत्त । सा पङ्क्तिमसृजत । जगती गर्भमधत्त । साऽतिछन्दसमसृजते'ति । अत एव चतुर्थस्याऽह्न आनुष्टुभत्वम् । अत्र वृष्टिसम्बन्धितया अहस्सम्बन्धितया च अनुष्टुब्द्वयं प्रतीयते। अनुष्टुप्च द्वात्रिंशदक्षरा । तत्राऽन्तिमे पादे द्वे अक्षरे अहोरात्रस्थानीये । तत्र त्रिंशदक्षराण्येव शिष्यन्ते विराट् च त्रिंशदक्षरा। तथा सत्यनुष्टुप्द्वयसंयोजनेन द्वौ विराजावेव समीचौ सङ्गते दधाति विदधाति अन्नाद्यार्थम् । यद्यप्यत्र अनुष्टुभो विभागेन विराट्त्वं नोक्तम्, तथाऽप्यन्यत्र शाखान्तरे(१)"द्वात्रिंशद्वै ता स्तोत्रीयास्त्रिंशात्रिंशदक्षरा विराडि"त्यादौ विभागः श्रूयते । तत्सामान्यादत्राप्येवं विभज्य विराट्त्वं द्रष्टव्यम् । एवमुक्तेषु चतुर्ष्वाज्यस्तोत्रेषु प्रागुक्त एकविंश एव(२) स्तोमो भवति । साम तु प्राकृतमेव गायत्रं नान्यत् ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे माधवीये सायणाचार्यविरचिते वेदार्थप्रकाशे द्वादशाध्यायस्याऽष्टमः खण्डः ॥

---

१. द्वात्रिंशदेतास्तासां यास्त्रिंशदिति. क. ख. पु.

२. स्तोमः कार्य इति. क. ख. पु.

## अथ नवमः खण्डः ॥

अथाऽस्मिन्नेवाऽहनि माध्यन्दिनपवमानस्य प्रथमं तृचं प्रदर्शयति—

**"पवस्व दक्षसाधन" इति गायत्री भवति सिध्यै॥१॥**

गायत्रछन्दस्का प्रतिपद्भवति गायत्रस्तृचो भवतीत्यर्थः । स च दक्षसाधन इति सिधि धातुनिष्पन्न इति श्रवणात् सिध्यै फलप्राप्त्यै सम्पद्यते ॥ १ ॥

अस्त्वेवम् । काऽसावस्याऽह्नस्सङ्गतिरिति तत्राऽऽह—

**यत् पवस्वेति तद्बृहतो रूपं बार्हतंᳬ ह्येतदहः ॥२॥**

'पवस्व वाचो अग्रिय' इति द्वितीयस्याऽह्नः प्रतिपद्भवतीति बार्हतेऽहनि दृष्टत्वात् 'पवस्व दक्षसाधन' इत्यत्र यत् पवस्वेति पदं तद्बृहतो रूपम् । एतच्चतुर्थमहश्च बार्हतं बृहत एव, वैराजात्मनावस्थानात् । अतोऽस्मिन्नहनि तृचस्य सङ्गतिः ॥ २ ॥

अथाऽन्यत्तृचं विधत्ते—

**"तवाऽहंᳬ सोमरारण सख्य इन्दो दिवे दिवे । पुरूणि बभ्रो निचरन्ति मामव परिधींरतिताँᳬ इही"-ति ॥ ३ ॥**

तवाऽहमित्यादिकस्तृचोऽन्यस्तोत्रीयः । अतितां इहीति लिङ्गप्रदर्शनार्थं सर्वानुवादः ॥ ३ ॥

तस्य च लिङ्गस्य तात्पर्यं लिङ्गान्तरञ्च प्रदर्शयन् प्रयोजनञ्चाऽऽह—

**अति ह्यायञ्छकुना इव पप्तिमेत्याति ह्यपतत् ॥४॥**

हि यस्मादस्मिन् चतुर्थेऽहनि त्रिरात्रमत्यायन् अत्यक्रामन् तस्मादतिहीति अति पूर्वो गत्यर्थ इति धातुः यस्मिंस्तृचे स्तोत्रसङ्गत इत्यर्थः । तस्मिन्स्तृचे शकुना इव पप्तिमेति दृश्यते । शकुनाः पक्षिण इव पप्तिमवयमुत्पतनं कृतवन्तः स्म इति तस्यार्थः । अस्मिंश्चाहनि वर्त्तमानो यजमानः अत्यपतद्धि त्रिरात्रमतिक्रम्य इदमहरगच्छत् तस्मादप्यनेनाऽह्ना तृचस्सङ्गत इत्यर्थः ।

तृचान्तरं विधत्ते—

**पुनानो अक्रमीदभीति ॥ ५ ॥**

स्पष्टोऽर्थः ॥ ५ ॥

ननु प्रकृतौ माध्यन्दिनपवमानस्याऽन्त्यस्तृचस्त्रैष्टुभस्तस्य स्थाने

कथमसौ गायत्रस्तृचस्सङ्गत इति तत्राऽऽह—

**गायत्र्यः सत्यास्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥ ६ ॥**

'पुनानो अक्रमीदि'त्याद्याः गायत्र्यस्सत्योऽपि त्रैष्टुभेन रूपेण योगात् त्रिष्टुभो भवन्ति । किञ्च त्रैष्टुभं रूपं विश्वामृधा विचर्षणिरिति विश्वशब्दः, गमदिन्द्रो वृषासुत इति वृषशब्दश्च वृषवद्वृत्रहवद्रयिमद्विश्ववदिति हि विराट् त्रिष्टुभो रूपे परिगणितम् । तस्मात्त्रिष्टुभामृचां लोके स्थाने क्रियन्ते ॥ ६ ॥

अथ प्रथमविहिते तृचे पूर्ववद्गायत्रं साम विधाय तदितिकर्त्तव्यताबोधकं ब्राह्मणञ्चातिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ७ ॥**

सिद्धमेतत् ॥ ७ ॥

अथ पुनरावृत्ते(१) तस्मिंस्तृचे सामान्तरं विधत्ते—

**चतुर्णिधनमाथर्वणं भवति चतूरात्रस्य धृत्यै ॥ ८ ॥**

चत्वारि निधनानि आवत् सुवः ज्योतिः ई २३४५ इत्येवमात्मकानि यस्य तच्चतुर्णिधनमाथर्वणमाथर्वणा दृष्टं साम पवस्व दक्षसाधन इत्यस्मिन्नेव तृचे गेयम् । तच्चतुस्संख्यायोगाच्चतूरात्रस्याऽनेनाऽह्ना सहितस्य प्रायणीयादीनामह्नां चतुष्कस्य धृत्यै धारणाय भवति ॥ ८ ॥

अथ चतुस्संख्यायोगादेव चतुर्थेऽहनि सङ्गतमेतदित्याह—

**चतुष्पदानुष्टुभाऽऽनुष्टुभमेतदहर्यच्चतुर्थम् ॥ ९ ॥**

निधनगतचतुष्के चतुष्पदा पादचतुष्टयोपेता अनुष्टुप् स्मर्यते । एतच्चतुर्थमहश्चानुष्टुभं अनुष्टुप्छन्दस्कमिति प्रागुपपादितम् । अतोऽस्मिन्नहनि चतुर्णिधनं योग्यम् ॥ ९ ॥

एवं छन्दोद्वारेण प्रशस्य ऋषिद्वाराऽपि प्रशंसति—

**भेषजं वाऽऽथर्वणानि भेषजमेव तत्करोति ॥ १० ॥**

आथर्वणान्यथर्वसम्बन्धीनि कर्माणि मन्त्रजातानि च भेषजं वै भैषज्यसाधनानि खलु । तत्तस्मादथर्वसम्बन्धिना साम्ना भेषजं रोगाद्युपशमनं भैषज्यमेव करोति ॥ १० ॥

अथाऽस्मिन्नेव तृचे आवृत्ते सामान्तरं विधत्ते—

**निधनकामं भवति ॥ ११ ॥**

---

१. अस्मिन्नेवेति. क. पु.

स्पष्टोऽर्थः ॥ ११ ॥

एतत्सर्वकामावाप्तिहेतुरिति स्तौति--

**एकं वा अन्येन निरुक्तेन निधनेन काम सनोत्य-थैतन्निधनकाम सर्वेषां कामानामवरुद्ध्यै ॥ १२ ॥**

निरुक्तेन निश्शेषेण स्पष्टमुक्तेनाऽन्येन निधनेन वागिडेत्यादिना एक-मेव कामं सनोति सम्भजते। अथशब्दस्तुशब्दार्थः। एतत्साम निधन-कामं काम्यमाननिधनवत्। अत एवाऽस्यैषा संज्ञा। तस्मात्काम्यमान-निधनत्वात् पुरुषोऽयं कामं कामयते। सर्वेषां कामानां काम्यमानानां फलानामवरुद्ध्यै प्राप्त्यै भवति ॥ १२ ॥

'तवाऽहं सोमे'ति विहिते तृचे गातव्यं साम दर्शयति--

**आष्टादंष्ट्रं भवति ॥ १३ ॥**

अष्टादंष्ट्रेण ऋषिणा दृष्टं साम आष्टादंष्ट्रम्। तच्च द्वयमस्ति। तत्रोत्तरं साम तवाहं सोममित्यस्मिंस्तृचे गातव्यम् ॥ १३ ॥

अस्य साम्नस्तावकं यद्ब्राह्मणमाम्नातं स्तुत्यर्थं तदत्राऽत्यतिदिशति—

**यदेवाष्टादंष्ट्रस्य ब्राह्मणम् ॥ १४ ॥**

'इन्द्रो वृत्रमहन्नयादाहोवेति न्यगृह्णादि'त्यादिकं यद्ब्राह्मणमाम्नातं व्याख्यातञ्च तदत्राऽपि द्रष्टव्यमित्यर्थः ॥ १४ ॥

अथाऽऽवृत्तेऽस्मिंस्तृचे सामान्तरं विधत्ते—

**आभीशवं भवत्यह्नो धृत्यै ॥ १५ ॥**

द्वयोराभीशवयोर्मध्ये यदुत्तरमाभीशवं तदस्मिन् तृचे गेयम्। त-च्चाऽह्नो धृत्यै धारणाय भवति ॥ १५ ॥

एतदेव (१)लोकप्रदर्शनेनोपपादयति—

**यद्वा अधृतमभीशुना तद्दाधार ॥ १६ ॥**

यत् खलु लोके अधृतं अधृष्टं शिथिलं भवति तदभीशुना शङ्कुना दाधार पुरुषो धारयति। एवमत्राऽपि अभीशुना शङ्कुना साम्ना अहस्स-म्बन्धि यदधृतमधारितं शिथिलं तद्धारयति ॥ १६ ॥

अथाऽस्मिन् साम्नि दृश्यमानं गीतिविशेषमनुवदन्नस्मिन्नहनि स-ङ्गतिमाह—

**अनुतुन्नं गायति तथा ह्येतस्याऽह्नो रूपम् ॥ १७ ॥**

---

१. लोकप्रसिद्धेन निदर्शनेनेति. क. ख. पु.

अनुतुन्नमनुतोदयुक्तम् । अनुतोदो नामाऽभ्यासः । सकृत्प्रयुक्तस्यैव ऋगवयवस्य (१)पुनः पुनरुत्पादनं सत्य इन्द्रो ३ दा इवे १ दिवा इत्यादि तद्युक्तं गायति । तथा खल्वेतस्याऽह्नो रूपं विराडनुतोदवादिति हि चतुर्थस्याऽह्नो रूपं (२)प्रागदर्शितम् ॥ १७ ॥

अथाऽस्मिन्नेव तृचे पुनरावृत्ते स्वःपृष्ठाख्यं साम विधत्ते—

**चतुर्णिधनमाङ्गिरसं भवति चतूरात्रस्य धृत्यै ॥१८॥**

आ २ वा २ ३ ४ और हो वा ऊ २ ३ ४ पा ऊ २ ३ ४ पा ई २३४ ही इति चत्वारि निधनानि यस्य तच्चतुर्णिधनमाङ्गिरसं अङ्गिरसा दृष्टं साम स्वःपृष्ठाख्यं तवाहमित्यस्मिंस्तृचे गातव्यम् । तच्च चतुस्संख्यायोगात् चतूरात्रस्य एतदन्तस्याऽहश्चतुष्टयस्य धृत्यै धारणाय भवति ॥

अस्मिन्सान्नि विद्यमानं किञ्चिल्लिङ्गमनूद्याऽह्ना सङ्गतिमाह—

**स्वः पृष्ठं तथा ह्येतस्याऽह्नो रूपम् ॥ १९ ॥**

अस्मिन् साम्नि उपाद्वयं दृश्यते । तयोः स्थाने उपास्थानेष्वन्यानि निधनानीति प्रकृत्य स्वः पृष्ठे च पूर्वं उत्तरं इति गौतमधानञ्ज्याविरयन्तरस्योपास्थाने स्वरित्ययमादेशो भवति । अन्यतरस्य स्थाने त्विडेति सूत्रकारेणोक्तम् । तत्र हि इडानादेशे स्वः काशीत इति उभयमनुवर्त्तते । तस्मादेतत्साम स्वःपृष्ठम् । पृष्ठशब्दो मध्यवचनः स्वरिति पृष्ठे मध्ये यस्य तत् स्वःपृष्ठम् । स्वश्शब्दश्च ज्योतिर्मयः स्वर्गवाची । इदमहश्च विराडात्मकेन छन्दसा ज्योतिषा सम्बद्धम् । तस्मादत्रैतत्सङ्गतम् । एतदेवाऽऽह—तथा ह्येतस्याऽह्नो रूपमिति ॥ १९ ॥

'अथ पुनानो अक्रमीदि'त्यन्तिमे तृचे गेयं साम विधत्ते—

**सत्रासाहीयं भवति ॥ २० ॥**

स्पष्टोऽर्थः ॥ २० ॥

अस्य साम्नो भ्रातृव्याभिभवसाधनत्वं विवक्षुस्तदर्थमाख्यायिकया सत्रासाहीयसंज्ञां निर्वक्ति—

**यद्वा असुराणामसोढमासीत्तद्देवाः सत्रासाहीयेनाऽसहन्त सत्रैनानसक्ष्महीति तत्सत्रासाहीयस्य सत्रासाहीयत्वम् ॥ २१ ॥**

---

१. पुनः पुनर्गानमिति. क. ख. पु. २. प्रदर्शितामेति. क. ख. पु.

यद्वै यत् खलु असुराणां सम्बन्धि असोढं(१) परैरनभिभूतं आसीत् पुरा तद्देवाः सत्रासाहीयेन साम्ना साधनेनाऽसहन्त अभ्यभवन्। षह अभिभवे इत्यस्मादेव धातोर्निष्ठायां(२)'तीषसहलुभे'त्यादिनाऽस्य विकल्पेनेट्त्वात्(३)'यस्य विभाषे' तीट्प्रतिषेधे(४)'सहिवहोरोदवर्णस्ये'त्यकारस्य स्थाने ओकारः। तदनन्तरं देवा एतानसुरान् सत्रा सह युगपदेव सर्वान् असक्ष्महि अभ्यभूमेत्येमन्यन्त। तत्तस्मात् सत्रासाहीयस्याऽस्य साम्नः सत्रासाहीयत्वं सत्रासाहीयमिति संज्ञा सञ्जाता ॥ २१ ॥

यस्मादेवं तस्मादद्यतनोऽपि स्तोता अनेन भ्रातृव्यमभिभवतीत्याह—

**सत्रा भ्रातृव्यं सहते सत्रासाहीयेन तुष्टुवानः ॥ २२ ॥**

सत्रासाहीयेन तुष्टुवानः स्तुतवान् यजमानः सत्रा साकम्, साकं सत्रा समं सहेति निखण्टुः। सह युगपदेव यत्तेनैव भ्रातृव्यं शत्रुं सहते अभिभवति ॥ २२ ॥

अथाऽधारभूतानामृचां छन्दोद्वारेण स्तौति--

**गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ २३ ॥**

'पुनानो अक्रमीदि'त्याद्यासु गायत्रीषु सत्रासाहीयेन स्तुवन्त्युद्गातारः। त्रिपदाश्च गायत्र्यः।लोके च त्रिपदाः पृष्ठ्यादयः प्रतिष्ठिता दृष्टाः। अतस्तत्स्तवनं प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय सम्पद्यते ब्रह्मवर्चसाय च। तेजोविशेषो हि ब्रह्मवर्चसं गायत्री तु तेजोरूपेणाऽग्निना सह प्रजापतिमुखादुत्पन्ना। तस्मात्तेजोरूपेति ब्रह्मवर्चसहेतुरित्यर्थः। अपि च प्राणापानव्यानरूपेण वृत्तित्रयरूपः। प्राणापानवायुरेव त्रिपदा गायत्री। अत्र चाऽऽद्यन्तयोस्तृचयोर्गायत्रत्वात् येनैव प्राणेन गायत्रीरूपेण प्रयन्ति स्तोत्रं प्रारभन्ते तमेवाऽभिलक्ष्योद्यन्ति समापयन्ति। एवं सत्युपक्रमोपसंहारयोरैकरूप्यं जायत इत्यर्थः ॥ २३ ॥

यदुक्तं प्राक् स्तोत्रीयाविधानसमये गायत्र्यः सत्यस्त्रिष्टुभो रूपेण तस्माल्लोके क्रियन्त इति, तदत्र विवृणोति—

**वृषण्वत्यो गायत्र्यो भवन्ति तदु त्रैष्टुभाद्रूपान्नयन्ति स्तोमः ॥ २४ ॥**

'गमदिन्द्रो वृषा सुतमि'ति वृषण्वत्यो वृषण्वच्छब्दयुक्ता गायत्र्यो भ-

---

१. परैरभूतमिति. क. पु.  २. पा. सू. ७. २. ४८.
३. पा. सू. ७. २. १५.  ४. पा. सू. ६. ३. ११२.

चन्ति। तदु तस्मादेव कारणात्त्रैष्टुभाद्रूपान्नयन्ति नाऽपगच्छन्ति 'पव-स्व दक्षसाधनः' 'तवाहं सोमे'ऽत्यनयोस्त्रिरावृत्तयोः प्रत्येकं सामत्रयं विहितम् । तत्रैकैकस्य साम्नस्तिस्रस्तिस्रः स्तोत्रीया इत्यष्टादश सम्पद्यन्ते । अन्तिमस्य सत्रासाहीयस्य तिस्र इत्येकविंश एव स्तोमो भवति ॥२४॥

इति ताण्ड्यमहाब्राह्मणे माधवीये सायणाचार्यविरचिते
वेदार्थप्रकाशे द्वादशाध्यायस्य नवमः खण्डः ॥

## अथ दशमः खण्डः ॥

अथ पृष्ठाना(१)माद्यस्य स्तोत्रस्य स्तोत्रीयं तृचं दर्शयति—

**'पिबा सोममिन्द्र मन्दतु त्वा यन्ते सुषाव हर्यश्वाद्रिः। सोतुर्बाहुभ्याᳲ सुयतो नार्वे"त्ययतमिव वै चतुर्थमहस्तस्यैव यत्यै ॥ १ ॥**

प्रथमस्य पृष्ठस्तोत्रस्य 'पिबा सोममिन्द्रे'ति वैराजस्तृचः स्तोत्रीयः। तत्र च सुयतो नार्वेति सुष्ठु यमनं प्रतीयते। चतुर्थमहश्चायतमिव वै अनियतमसम्बद्धमिव खलु । प्रथमस्य त्रिरात्रस्य समाप्तत्वात् । तेन सह सम्बन्धानुपपत्तेः । आगामिनश्चाह्नोऽननुष्ठितत्वादेवाऽभावात् । अतो नियमनसापेक्षस्य तस्यैवाऽह्नो यत्यै नियमनाय भवति ॥ १ ॥

प्राकृतमेव द्वितीयं पृष्ठमिति मन्वानो ब्रह्मणः पृष्ठस्य स्तोत्रीयं तृचं दर्शयति—

**विश्वाः पृतना अभिभूतरन्नर इत्यतिजगती वर्षीयश्छन्द आक्रमतेऽनपभ्रᳲशाय ॥ २ ॥**

विश्वाः पृतना इत्यतिजगती द्वापञ्चाशदक्षरा आतिजागतस्तृचो (२)ब्रह्मसामाधारतया कार्य्य इत्यर्थः। एवं वर्षीयो वृद्धतरं छन्दश्चतुर्थमहश्चाऽऽक्रमते अवलम्बते । किमर्थम् ? अनपभ्रंशाय अपभ्रंश अधःपतनं भृशुभ्रंशु अधःपतन इति धातुः अनधःपाताय॥ २ ॥

एतदेव विवृणोति—

**अपभ्रᳲश इव वा एष यज्ज्यायसश्छन्दसः कनीयश्छन्द उपैति यदेषा चतुर्थेऽहन्यतिजगती क्रियतेऽनपभ्रᳲशाय ॥ ३ ॥**

---

१. माद्यस्तोत्रीयमिति. क. ख. पु. २. ब्रह्मसाम्न आधारेति. ख. पु.

तृतीयमहर्जागतम् । इदं चतुर्थमहरानुष्टुभम्। जगती चाऽष्टाचत्वारिंश दक्षरत्वात् ज्यायसी। तथा सति ज्यायसो वृद्धतराच्छन्दसः तृतीयेऽहनि प्रयुक्तत्वात् कनीयोऽल्पीयो न्यूनतरमानुष्टुभं छन्दश्चतुर्थेऽहन्युपैत्युपगच्छति एषोऽपभ्रंश इव वै अधःपात इव खलु। यथा खलून्नतात्(१) ध्वजाग्रात् अधोदेशे पतति तद्वत् । एवं सति चतुर्थेऽहनि अतिजगती जगत्या अपि चतुर्भिरक्षरैरधिकं छन्दः क्रियत इति यत् तदनपभ्रंशाय अपभ्रंशाभावार्थम् ॥ ३ ॥

अथ चतुर्थस्य पृष्ठस्तोत्रस्य स्तोत्रीयं तृचं दर्शयति—

**यो राजा चर्षणीनामिति ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

अत्र राजशब्देन सूचितं फलमाह—

**राज्ये ह्येतर्हि वाचोऽगच्छन् राज्यमेवैतया यजमानं गमयन्ति ॥ ५ ॥**

एतर्हि एतस्मिंश्चतुर्थस्याह्नोऽनुष्ठानसमये राज्ये जनपदे खलु वाचः एतैर्ह्येवशाहोऽनुष्ठीयत इति । एवं रूपाणि वाक्यान्यगच्छन् । एतया राजशब्दयुक्तया स्तोत्रीयया तद्राज्यमेव यजमानं गमयन्ति स्तोतारः॥५॥

अथ वैराजं विधित्सुस्तस्य निधनं द्युलोके सूर्यस्य दृढावस्थितिहेतुरिति स्तौति—

**छन्दोभिर्वै देवा आदित्यꣳ स्वर्गं लोकमहरन् स नाऽऽध्रियत तं वैराजस्य निधनेनादृꣳहꣳस्तस्मात् पराङ् चार्वाङ् चादित्यस्तपाति पराङ् चार्वाङ्चेकारः ॥ ६ ॥**

छन्दोभिर्गायत्र्यादिभिः खलु पुरा देवाः आदित्यं सूर्यं स्वर्गं लोकमहरन् प्रापयन् । आप्नुवन् स आदित्यस्तत्र नाऽऽध्रियत नावातिष्ठत धृङ् अवस्थान इति धातुः। एवमधृतं तमादित्यं वैराजस्य साम्नो निधनेन ईइत्येवं अदृंहन् दृढीकृतवन्तः दृढं स्थापितवन्त इत्यर्थः । हि यस्मादयमीकारः पराङ् च चार्वाङ् भवति । अकारवत् कण्ठस्थानोऽपि न भवति उकारवन्नोष्ठ्योऽपि भवति । उभयोरन्तयोर्लब्धत्वादुभयोरन्तरालवृत्ती सन् उभयनिर्देशमलभत इति पराङ्त्वमर्वाङ्त्वं चेकारस्य । तस्मादेव कारणादादित्योऽपि पराङ्च पराङ्मुखः स्वर्गादुपरितनानपि लोकान्

---

१ वृक्षाग्रादिति क. ख. पु.

अर्वाङ्च अवाङ्मुखश्च सन् अधस्तनानपि लोकान् तपति प्रकाशयति

अथ तस्मिन् साम्नि प्रस्तावानन्तरं मत्स्वा हाऊ(१) इत्यादिका ये दश विष्टम्भास्ताननूद्य स्तौति—

प्रस्तावं प्रस्तुत्य विष्टम्भान्विष्टभ्नोति मुखत एव तदन्नाद्यं धत्ते मुखꣳ हि साम्नः प्रस्तावः ॥ ७ ॥

होइ या होइ या ३४३ पिब इति प्रस्तावभागः । तं प्रस्तुत्य उच्चार्य्य मत्स्वाहाऊ इत्यादिकान् विष्टभ्नोति विष्टम्भसंज्ञकानेतान् ब्रूयात् तत्‌तथा सति मुखतो मुखप्रदेशे आस्य एव अन्नाद्यं धत्ते धारयति । प्रस्तावभागः खलु साम्नो मुखं तत्र विष्टम्भानां धारणात् ॥ ७ ॥

एतदेव विवृणोति—

दशकृत्वो विष्टभ्नोति दशाक्षरा विराड् वैराजमन्नमन्नाद्यस्याऽवरुद्ध्यै ॥ ८ ॥

मत्स्वा हाऊ ओजो हाऊ सहो हाऊ बलं हाऊ इत्यादिभिर्दशकृत्वो दशवारं विष्टभ्नोति एतदादिकान् दशसंख्याकान् विष्टम्भान् कुर्य्यात् विराड्दशाक्षरा दशेन्द्रियवता किं तेन दशविधत्वादन्नञ्च वैराजं विराट्सम्बन्धि। एवं संख्याद्वारेण दशकृत्वो विष्टम्भनमन्नाद्यस्याऽवरुद्ध्यै अवरोधनाय भवति ॥ ८ ॥

एवमुत्तरयोरपि पादयोः प्रारम्भे एते विष्टम्भाः कार्य्याः इत्यभिप्रायेणाऽऽह—

त्रिꣳशत्कृत्वो विष्टभ्नोति भूयसोऽन्नाद्यस्याऽवरुद्ध्यै ॥ ९ ॥

विराजो हि दशाक्षरास्त्रयः पादाः । तत्र प्रतिपादं दशकृत्वो विष्टम्भने सति त्रिंशत्कृत्वः त्रिंशद्वारं विष्टभ्नोति(२) विष्टम्भं कृतवान् भवति तच्च भूयसो बहुतरस्याऽन्नाद्यस्याऽवरुद्ध्यै भवति ॥ ९ ॥

अत एवंगुणविशिष्टं साम पिबा सोमामिति तृचे विधाय समुच्चित्य स्तौति—

वैराजꣳ साम भवति विराट्सु स्तुवन्ति वैराजा विष्टम्भाः समीचीर्विराजो दधात्यन्नाद्याय ॥ १० ॥

वैराजाख्यं साम 'पिबा सोम'मित्यस्मिन् तृचे पृष्ठस्तोत्रतया कार्य्यम् ।

---

१. इत्यादिकान्दश विष्टम्भानाद्याननूद्येति. क. ख. पु. ।

२. विष्टम्भः कृतो भवतीति. क. ख. पु.

मतस्सामैव विराट् तथा विराट्सु विराट्छन्दस्कास्वृक्षु स्तुवन्ति विष्टम्भाश्च वैराजाः दशसंख्यायोगादयमप्यन्या विराट्। अत एव विराजः समीचीः समन्तात्समूहीकृताः दधाति अन्नाद्यार्थम् ॥ १० ॥

अथाऽस्मिन् साम्नि दृश्यमानं गानाविशेषं प्रदर्श्य स्तौति—

अनुतुन्नं गायति रेतोधेयायाऽनुतुन्नाद्धि रेतो धीयते ॥ ११ ॥

अनुत्वा अनुत्वेत्यादिकोऽभ्यासोऽनुतोदस्तद्युक्तं गायति। किमर्थम्? रेतोधेयाय रेतसः अपत्यहेतोर्वीर्य्यस्य आधानाय निषेकार्थम्। कथमनुतोदाद्रेतस आधानमित्याशङ्क्य लोकप्रसिद्धिमेव तत्र प्रमाणयति-अनुतुन्नाद्धीति। अनुतुन्नात् योन्यां(१) शेफसः प्रक्षेपणप्रतिक्षेपणरूपादनुतोदनात् पुनः पुनरभ्यासात् खलु लोके रेतो धीयते आधीयते निषिच्यते अतोऽत्रापि क्रियमाणोऽनुतोदो रेतोधेयाय भवतीति ॥ ११ ॥

अथ वैराजस्तोत्राङ्गमग्निमन्थनं विधत्ते—

दक्षिण ऊरावुद्गातुरग्निं मन्थन्ति दक्षिणतो हि रेतः सिच्यते ॥ १२ ॥

उद्गातुर्दक्षिणे ऊरौ अधरारणिं तिरश्चीं स्थापयित्वा तत उत्तरारण्या अग्निं मन्थन्ति दक्षिणतश्शरीरस्य दक्षिणाङ्गाद्धि रेतः सिच्यते तस्माद्वीर्य्यवति दक्षिणे ऊरुदेशे अग्निर्मन्थनीयः ॥ १२ ॥

तस्य कालं विधत्ते—

उपाकृतेऽहिङ्कृते मन्थन्ति जातमभिहिङ्करोति ॥ १३ ॥

उपाकृते अध्वर्य्युणा स्तोत्रोपाकरणे कृते, अहिङ्कृते हिङ्कारे चाऽकृते मन्थन्ति। जातमग्निमभिलक्ष्य हिङ्करोति जातस्याऽग्नेरुपरि हिङ्कारं कुर्य्यात्(२) 'वैराजस्य स्तोत्र उपाकृते उपर्यनूरु शकलन्निधाय तृणे च तस्योपरि तिरश्चीमरणिं निधायाऽभ्यात्मं प्रजननं कृत्वा त्रिः प्रदक्षिणमभिमन्थेदि'त्यादिकं सूत्रमत्राऽनुसन्धेयम् ॥ १३ ॥

अस्तु जातस्य तस्योपरि हिङ्कारः, किं तत इत्याह—

तस्माज्जातं पुत्रं पशवोऽभिहिङ्कुर्वन्ति ॥ १४ ॥

यस्मादेवमुद्गाता जातमभिहिङ्कृतवान् तस्मादेव जातमुत्पन्नं पुत्रमभिहिङ्कुर्वन्ति पशवः ॥ १४ ॥

---

१. रेतस इति. क. ख. पु.    २. लाट्या. श्रौ. १. ३. ५.

जातस्याऽग्नेः कस्मिन्नग्नौ प्रहरणमिति ब्रह्मवादिभिः कृतां मीमांसामाह—

**तस्मै जातायाऽमीमाꣳसन्त गार्हपत्ये प्रहरामा३ आग्नीध्रा ३ आहवनीया ३ इति ॥ १५ ॥**

तस्मै जातायाऽग्नये तदर्थं ब्रह्मवादिनोऽमीमांसन्त पूजितविचारवचनो मीमांसाशब्दः विचारितवन्त इत्यर्थः। कथमिति किमेतमग्निं गार्हपत्ये प्रहराम? स हि सर्वेषामग्नीनां योनिः, किंवा आग्नीध्रे? आग्नीध्रीयधिष्ण्यगतेऽग्नौ प्रहराम प्रक्षिपाम। सोमे ह्याग्नीध्रीयो मुख्यः आहवनीयोद्धाने तत एवोद्धारात्। श्रूयते हि "यदाहवनीये उद्वायेदाग्नीध्रादुद्धरे"दिति। अथवा आहवनीये प्रहराम? स हि सर्वासामाहुतीनामाधारतया प्रधानभूत इत्येवं ब्रह्मवादिनः संशयापन्ना आसन्। त्रिष्वपि वाक्येषु विचार्य्यमाणानामिति प्लुतिः ॥ १५ ॥

एवं विदुषां संशयं दर्शयित्वा तत्र कर्त्तव्यं पक्षमाह—

**आहवनीये प्रहरन्त्येतदायतनो वै यजमानो यदाहवनीये स्वमेव तदायतनं ज्योतिष्मत्करोति ॥ १६ ॥**

तमग्निमाहवनीये प्रहरन्ति प्रक्षिपेयुः आहवनीयोऽग्निरिति यत् एतदायतनो वै एतदायतनं स्थानं यस्य तथाविधः खलु यजमानः। तत्तथा सति स्वं स्वकीयमेवाऽऽयतनं प्राह्रियमाणेनाऽग्निना ज्योतिष्मत्करोति अतिशयेन ज्योतिर्युक्तं विदधाति ॥ १६ ॥

एतद्वेदनं फलवदित्याह—

**ज्योतिष्मान् ब्रह्मवर्चसी भवति य एवं वेद ॥१७॥**

स्पष्टोऽर्थः ॥ १७ ॥

जातेनाऽग्निना होमं विधत्ते—

**अभिजुहोति शान्त्यै ॥ १८ ॥**

यजमानस्य देहशान्त्यै अभिजुहोति ॥ १८ ॥

प्रहृतस्याऽग्नेरुपरि आज्येन होमं विधत्ते—

**आज्येनाऽभिजुहोति तेजो वा आज्यं तेज एव तदात्मन्धत्ते ॥ १९ ॥**

प्रहृतमग्निमभि आज्येन जुहोति(१)"तृतीया च होश्छन्दसी"ति जुहोतेः

---

१. पा. सू. २. ३. ३.

कर्म्मणि तृतीया । आज्यं जुहुयादित्यर्थः। अग्नेस्तेजसो वृद्धिहेतुत्वादाज्यं तेज एव । तथा च(१) यदाज्येन जुहोति तत्तेन तेज एवात्मन्धत्ते ॥१९॥

तस्मिन् होमे मन्त्रं विधाय तस्य विशिष्टफलहेतुतां दर्शयति—

**"प्रेद्धो अग्ने दीदिहि पुरो न" इति विराजाऽभिजुहोत्यन्नं विराडन्नाद्यस्याऽवरुद्ध्यै ॥ २० ॥**

'प्रेद्धो अग्ने' इति विराजा विराट्छन्दसा ऋचा अभिजुहोति । गतमन्यत् ॥ २० ॥

अथ तृतीयस्य पृष्ठस्तोत्रस्य 'विश्वाः पृतना' इति यस्तृचो विहितस्तत्र गातव्यं साम विधत्ते—

**त्रैशोकं ब्रह्मसाम भवति ॥ २१ ॥**

त्रिशोकेन दृष्टं साम त्रैशोकम् । तद्ब्रह्मसाम ब्रह्मणः स्तोत्रे पृष्ठत्वेन कार्य्यम् ॥ २१ ॥

अथाऽस्याऽऽधारभूतानामृचां छन्दोद्वारेण स्तौति—

**अतिजगतीषु स्तुवन्त्यह्न उत्क्रान्त्या उह्वा एतेनाऽह्ना क्रामन्ति ॥ २२ ॥**

अतिजगतीषु द्वापञ्चाशक्षरासु जगतीमतीत्य वर्त्तमानासु ऋक्षु 'विश्वाः पृतना' इत्यादिषु स्तुवन्ति । किमर्थम्? अह्नोऽस्य चतुर्थस्य उत्क्रान्त्यै उत्क्रान्तिरूर्ध्वगतिः । स्वर्गस्य प्राप्तिरिति यावत् । उत्क्रान्तिसाधनताया इत्यर्थः । जगत्या अप्यूर्द्ध्वगतेन छन्दसा योगादेतेन चतुर्थेनाऽह्ना उत्क्रामन्ति वै ऊर्ध्वं गच्छन्ति स्वर्गप्राप्त्यर्थम् ॥ २२ ॥

अथैतन्निधनद्वारा पापक्षयहेतुरिति स्तौति—

**दिवेति निधनमुपयन्ति पाप्मनोऽपहत्या अप पाप्मानꣳ हते त्रैशोकेन तुष्टुवानः ॥ २३ ॥**

'ओ इदी २३४ वा' इति ह्यस्य निधनमुपयन्ति उपगच्छन्त्युद्गातारः पाप्मनः पापस्याऽपहत्यै अपक्षयार्थम् । द्युशब्दस्य दीप्तिवचनत्वात्तमोविदारकत्वम् । पापं तेन विनाश्यत इत्यर्थः । यस्मादेवं तस्मादनेन त्रैशोकेन साम्ना तुष्टुवानः स्तुवन् पाप्मानमपहते अपहन्ति विनाशयति ॥ २३ ॥

अथ चतुर्थस्य पृष्ठस्तोत्रस्य साम विधत्ते—

**भारद्वाजस्य पृश्न्यच्छावाकसाम भवति ॥ २४ ॥**

१. यदाज्यं जुहोति तत्तेनेति. क. ख. पु. ।

भारद्वाजस्य पृश्नीति पदद्वयसमुदायात्मिका साम्नः संज्ञा । तत्सज्ञं साम अच्छावाकसाम(१) अच्छावाकस्य पृष्ठस्तोत्रं 'यो राजा चर्षणीना'मिति तृचे कार्य्यम् ॥ २४ ॥

अथैतत्स्तौति—

**अन्नं वै देवाः पृश्नीति वदन्त्यन्नाद्यस्याऽवरुध्यै ॥ २५ ॥**

नानावर्णमन्नमेव देवाः पृश्नीति प्राप्तवर्णत्वात् पृश्निशब्दाभिधेयमिति वदन्ति । अत एतत् पृश्नि क्रियमाणं साम अन्नाद्यस्य प्राप्त्यै भवति ॥२५॥

अथाऽस्य साम्नोऽह्ना सङ्गतिमाह—

**इडाभिरैडं तथा ह्येतस्या[illegible]ह्नो रूपꣳस्तोमः ॥ २६ ॥**

इडा २३ भा ३४३ औ २३४५ [illegible] त्यनेन युक्तमिडाभिरैडम् । तथा हि तादृशमेव खल्वेतस्य चतुर्थस्याऽह्नो रूपमिडाभिरैडश्चतुर्थस्येति एतेषु पृष्ठस्तोत्रेषु पूर्वोक्त एव एकविंशः स्तोमः कार्य्यः ॥ २६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
द्वादशाध्यायस्य दशमः खण्डः ॥

---

## एकादशः खण्डः ॥

अथाऽऽभिवपवमानस्य प्रथमं तृचं दर्शयति—

**'परिप्रिया दिवः कविरि'ति परिवत्यो भवन्त्यन्तो वै चतुर्थमहस्तस्यैताः पर्याप्त्यै ॥ १ ॥**

'परिप्रिया दिवः कवि'रित्याद्यास्तिस्रस्स्तोत्रीयाः परिवत्यः परिशब्दयुक्ता भवन्ति । चतुर्थमहश्चान्तो वै चतूरात्रापेक्षयाऽन्त एव । अतस्तस्याऽन्त्यस्याऽह्नः पर्य्याप्त्यै परिसमाप्त्यै एताः परिवत्यो भवन्त्यनुगुणा इत्यर्थः ॥ १ ॥

अथ द्वितीयं तृचं दर्शयन् अनेनाऽह्ना सङ्गतिमप्याह—

**त्वꣳह्यङ्ग दैव्येति त्वामिति बृहतो रूपं बार्हतꣳ ह्येतदहः**

त्वं ह्यङ्गेत्ययमाभवस्य द्वितीयस्तृचः । कथमस्याऽह्ना सङ्गतिरिति ? उच्यते—तत्र त्वमिति युष्मच्छब्दो दृश्यते तद्बृहतो बृहत्साम्नो रूपम्,

---

१. अच्छावाकपृष्ठस्तोत्रत्वेनेति. क. पु. ।

तद्योन्यां'त्वामिद्धि हवामहे'इति युष्मच्छब्ददर्शनेन तद्रूपत्वावगतेः। एतच्चतुर्थ महरपि बार्हतं बृहत्प्रभवेन वैराजेन साम्ना युक्तत्वात्। अतस्त्वमिति बृहतो रूपेण युक्तस्तृचश्चतुर्थेऽहनि सङ्गत इत्यर्थः ॥ २ ॥

अथ तृचान्तरं विधत्ते—

**सोमः पुनान ऊर्मिणा व्यंवारं विधावाति। अग्रे वाचः पवमानः कनिक्रददिति ॥ ३ ॥**

सोमः पुनान ऊर्मिणेत्ययमार्भवस्य तृतीयस्तृचः ॥ ३ ॥

अग्रे वाच इति पदद्वयसूचितमर्थमुपादाय स्तौति—

**अग्रꣳ ह्येतर्हि वाचोऽगच्छन्नग्रमेवैतया यजमानं गमयन्ति ॥ ४ ॥**

एतर्हि एतस्मिन् काले चतुर्थस्याऽह्नोऽनुष्ठानसमये (१)अग्रे प्रशस्तं वाचोऽगच्छन्। अत एतया स्तोत्रीयया यजमानमेवाऽग्रं श्रैष्ठ्यं गमयन्ति प्रापयन्ति ॥ ४ ॥

अथाऽन्यं तृचं विधत्ते—

**"पुरो जितीवो अन्धस"ति विराजौ वैराजꣳ ह्येतदहः॥५॥**

'पुरोजितीवो अन्धस' इत्यार्भवस्य चतुर्थस्तृचः। तस्मिन् तृचे द्वे विराजौ भवतः—पद्या चाऽक्षर्या चेति उत्तरत्र प्रदर्शयिष्यते। एतदहश्च वैराजं विराट्सम्बद्धम्। अतोऽस्मिन्नहनि अयं तृचः सङ्गत इत्यर्थः ॥५॥

(२)अथाऽपरं तृचं विधत्ते—

**'सोमः पवते जनिता मतीना'मिति प्रातस्सवने षोडशिनं गृहीतं तं तृतीयसवने प्रजनयन्ति ॥ ६ ॥**

'सोमः पवते जनिते'ति जनिधातुयुक्तस्तृचः पञ्चमः। प्रातस्सवने धाराग्रहाणामुत्तमः षोडशी ग्रहो गृह्यते। तं गृहीतं षोडशिनं तृतीयसवने प्रजनयन्ति होमयोग्यं जनिधातुयुक्तेनाऽनेन तृचेनोत्पादयन्ति। स हि षोडशी तृतीयसवने हूयते। तस्माद्धोमायोत्पादयन्तीत्यर्थः ॥ ६ ॥

ननु जागतं तृतीयसवनम्; अयञ्च त्रैष्टुभस्तृचः कथमसौ तत्र सङ्गच्छत इत्यत आह—

**त्रिष्टुभः सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ ७ ॥**

---

१. अग्रं पुरस्तादिति. क. ख. पु. २. अथाऽनन्तरमिति. क. पु.।

सोमः पवत इत्याद्यास्त्रिष्टुभः सत्योऽपि जागतेन रूपेण योगाज्जगत्यः। तस्माज्जगतीनां स्थाने प्रयुज्यन्ते। किंतज्जागतं रूपम्? उच्यते 'आतिष्ठति वृषभो गोषु जान'न्निति गोशब्दवत्त्वम्। तथाहि पूर्वं परिगणितं त्रिवृद्वैमहष्वभवत्तृतीयस्याऽह्नो रूपमित्यादिना ॥ ७ ॥

अथ परिप्रियेति प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय तत्स्तावकं ब्राह्मणमभ्यतिदिशति—

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ८ ॥

सिद्धमेतत् ॥ ८ ॥

अथाऽऽवृत्ते(१) तस्मिंस्तृचे सामान्तरं विधत्ते—

और्णायवं भवति ॥ ९ ॥

ऊर्णायुना दृष्टं साम और्णायवम्। तदस्मिन् परिप्रियेति तृचे गातव्यम् ॥ ९ ॥

इदं(२) स्वर्गप्राप्तिसाधनमिति प्रतिपिपादयिषुस्तदर्थमाख्यायिकामाह—

अङ्गिरसो वै सत्रमासत तेषामाप्तः स्पृतः स्वर्गो लोक आसीत्पन्थानं तु देवयानं न प्राजानꣳस्तेषाङ्कल्याण आङ्गिरसो ध्यायमुदव्रजत् स ऊर्णायुं गन्धर्वमप्सरसां मध्ये प्रेङ्खयमाणमुपैत्स इयामिति यां यामभ्यदिशत्सैनमकामयत तमभ्यवदत्कल्याणा ३ इत्याप्तो वै वः स्पृतः स्वर्गो लोकः पन्थानं तु देवयानं न प्रजानीथेदꣳ साम स्वर्गं तेन स्तुत्वा स्वर्गं लोकमेष्यथ मा तु वोचोहमदर्शमिति ॥ १० ॥

अङ्गिरसः खलु पुरा ऋषयः सत्रयागमन्वतिष्ठन्। तेषामाङ्गिरसां तद्यागफलभूतः स्वर्गाख्यो लोक आप्तः पर्याप्तः स्पृतः प्रियहेतुश्चासीत्। स्पृ प्रीतिचलनयोरिति धातुः। (३)देवयानं देवा यान्त्यनेनेति देवयानः तं देवयानं तु पन्थानं स्वर्गस्य मार्गं न प्राजानन् (४)नाऽवबुध्यन्त। एवमजानतां मध्ये कल्याणनामाऽऽङ्गिरसः ध्यायं, ध्यैचिन्तायामित्यस्मात् ण

१. तस्मिन्नेवेति क. पु.।  २. प्रतिपादयितुमिति. क. ख. पु.।

३. देवयानः देवान् प्रतिपद्यतेऽनेनेति देवयान इति. क. ख. पु.

४. नाऽबुध्यन्तेति. क. पु.।

मुल् प्रत्ययः। ध्यात्वा ध्यात्वा कोऽसौ देवयानः पन्था इति विचार्य्य विचार्य्य उदव्रजदुद्भ्रमगच्छत्। स कल्याण आङ्गिरसः कियन्तं देशं गत्वा अन्तरिक्षलोके ऊर्णायुं(१) एतत्संज्ञं गन्धर्व्वं अप्सरसां मध्ये प्रेङ्खयमाणं (२)दोलया विहरन्तं उपैत् उपागच्छत्। स गन्धर्व्वं इयां प्राप्नुयामिति यां यां स्त्रियमभ्यदिशत् अभ्यध्यायत् सा सा एनं गन्धर्व्वमकामयत। एवमप्सरोभिः सह क्रीडन् गन्धर्व्वस्तं कल्याणमाङ्गिरसमभिलक्ष्य अवदत्प्रब्रवीत्–कल्याणा ३ इति हे कल्याण इति सम्बोध्य '(३)दूराद्धूते चे'ति प्लुतः। एवं सम्बोध्येदमब्रवीत्–वो युष्माकं यज्ञफलभूतः स्वर्गो लोक आप्तो वै प्राप्तः स्पृतः प्रीतिकरश्चाऽभूत्। देवयानं तु पन्थानं यूयं न प्रजानीथ। तत्रेदं साम स्वर्ग्यं स्वर्गाय हितं स्वर्गप्राप्तिसाधनम्। तेन साम्ना स्तुत्वा स्वर्गं लोकमेष्यथ प्राप्स्यथ। यदि त्वां कश्चित्प्राक्षीत् तस्मै अहमेवाऽदर्शमिति अदर्शं अज्ञासिषमिति मा वोचः, अपि तु ऊर्णायुः गन्धर्व्वः प्रावोचदिति ब्रूहीति ॥ १० ॥

एवं गन्धर्व्वेणोक्तः किं कृतवानिति तदाह—

**स ऐत्कल्याणः सोऽब्रवीदाप्तो वै नः स्पृतः स्वर्गो लोकः पन्थानं तु देवयानं प्रजानीम इदꣳ साम स्वर्ग्यं तेन स्तुत्वा स्वर्गं लोकमेष्याम इति कस्तेऽवोचदित्यहमेवाऽदर्शमिति तेन स्तुत्वा स्वर्गं लोकमायन्नहीयत कल्याणोऽनृतꣳ हि सोऽवदत्स एषः श्वित्रः ॥ ११ ॥**

एवं गन्धर्वेणोक्तः स कल्याणः ऐत् पुनराङ्गिरसां समीपमागच्छत् आगत्य च सोऽब्रवीत् नः अस्माकं स्वर्गो लोक आप्तः स्पृतश्च किल। देवयानं तु पन्थानं न प्रजानीमो वयम्। इदमौर्णायवं साम स्वर्ग्यं स्वर्गसाधनं देवयानस्य पथो लम्भकम्, तेन स्तुत्वा वयं स्वर्गं लोकमेष्यामो गमिष्याम इति। एवं कल्याणेनोक्ते आङ्गिरसः अपृच्छन् ते तव कः पुरुषोऽवोचदुक्तवानिति। न कश्चिदवोचत् अहमेवैतत् साम स्वर्गसाधनत्वेनादर्शम ज्ञासिषमिति कल्याणः प्रत्यब्रवीत्। ततस्तेनौर्णायवेन स्तुत्वा स्वर्गं-

---

१. एतन्नामकमप्सरसमिति. ख. पु.।

२. शब्दायमानं गन्धर्वं इयामित्यस्य साम्नो निधनेनैनमुपैत्। उपेत्य च यामप्सरसमभ्यादिशत्। सा एवमकामयत। तदनन्तरं ऊर्णायुनामा सः कल्याणमाङ्गिरसमभिलक्ष्येति. ख पु.।

लोकमायन्नाङ्गिरसोऽगच्छन्। कल्याणस्त्वाङ्गिरसोऽहीयत हीनो भूमावेव परित्यक्तोऽभूत्। हि यस्मात् सोऽनृतं वितथमवदत्। तस्मादहीयत। स एषोऽसत्यवादी श्वित्रः श्वेतकुष्ठी दृश्यते ॥ ११ ॥

तस्मादेतेन साम्ना स्तवनं स्वर्गसाधनमित्युपसंहरति—

**स्वर्ग्यं वा एतत्साम स्वर्गलोकः पुण्यलोको भवत्यौर्णायवेन तुष्टुवानः ॥ १२ ॥**

स्वर्गलोकः स्वर्गो लोको यस्य स तथोक्तः पुण्यः पुण्यात्मक उत्तमः स्वर्गादन्योऽपि लोको यस्य स पुण्यलोकः औणायवेन तुष्टुवानः स्तुवन्नुभयविधो भवति। गतमन्यत् ॥ १२ ॥

'त्वं ह्यङ्ग दैव्ये'ति पूर्वविहिते तृचे गातव्यं साम विधत्ते—

**बृहत्कं भवति ॥ १३ ॥**

बृहत्को नाम ऋषिः तत्सम्बन्धि साम बृहत्कम। तदस्मिंस्तृचे गातव्यम् ॥ १३ ॥

तदेतत् स्तौति—

**सामाऽऽर्षेयेण प्रशस्तं त्वꣳ हीत्यन्नाद्यस्याऽवरुद्ध्यै हीति वा अन्नं प्रदीयते षोडशिनमु चैवैतेनोद्यच्छति ॥ १४ ॥**

आर्षेयेण ऋषिसम्बन्धेन युक्तं साम प्रशस्तमुत्कृष्टम्। अस्य च स्तोत्रीयासु त्वं हीति शब्दः श्रूयमाणः अन्नाद्यस्याऽवरुद्ध्यै अवरोधनाय भवति। कथम्? लोके हि हीत्यनेन शब्देन खलु अन्नं प्रदीयते बालानां भोजयितारः मुखस्य विदारणार्थं हीति शब्दमुच्चारयित्वा अन्नमादयन्ति। तत्सामान्यादत्रापि हिशब्देनाऽन्नाद्यस्याऽवरोधो भवति। अपि च षोडशिनमेव ग्रहमेतेनोद्यच्छति होमार्थमुद्गमयति। त्वं ह्यङ्ग दैव्येत्याभिमुख्यकरणात् पूर्वयोः सवनयोः शयानं अत्र होमायोद्बोधयतीत्यर्थः ॥ १४ ॥

अथ 'सोमः पुनान ऊर्म्मिणे'ति तृचे गातव्यं साम विधत्ते—

**आतीषादीयं भवति ॥ १५ ॥**

आतीषादीयाख्यं सामाऽस्मिंस्तृचे गेयम् ॥ १५ ॥

अथैतदायुर्हेतुरिति स्तौति—

**आयुर्वा आतीषादीयमायुषोऽवरुद्ध्यै ॥ १६ ॥**

यदेतदातीषादीयाख्यं साम तदायुर्वै आयुषोऽभिवृद्धिहेतुत्वादायुरेव। अत एतत्साम आयुषोऽवरोधनार्थमत्र कार्यम् ॥ १६ ॥

यावति काले श्वासनिरोधः कर्त्तुं शक्यते तावन्तं कालमस्य साम्नो निधनमावर्त्तनीयमिति विधाय स्तौति—

आतमितोर्निधनमुपयन्त्यायुरेव सर्वमाप्नुवन्ति ॥ १७ ॥

आतमितोः आतमनात् श्वासे निरुध्यमाने यावता कालेन ग्लानिर्भवति । तमु ग्लान इति धातुः, तावत्कालपर्य्यन्तं आतीषादीयस्य निधनं ऋग्वेद२३४५ इत्येव रूपं पुनः पुनः उपयन्त्युपगच्छन्ति । तथा च सर्वं सम्पूर्णमेवायुः प्राप्नुवन्ति ॥ १७ ॥

अथ 'पुरोजिती' इति तृचे गातव्यं साम विधत्ते—

नानदं भवति ॥ १८ ॥

नानदाख्यं सामाऽस्मिस्तृचे कार्यम् ॥ १८ ॥

अथैतदहः सन्ततिहेतुरित्याह—

ज्यायोऽभ्यारम्भमतिहाय पञ्चममहः षष्ठस्याऽह्न आरम्भस्तेन षष्ठमहरारभन्ते सन्तत्यै ॥ १९ ॥

अस्य साम्न आधारभूते तृचे प्रथमाऽनुष्टुबुत्तरे गायत्र्यौ च । गानसमये पूर्वमानुष्टुभं पादमारभ्य अनुष्टुभौ कार्य्ये । एवमेव षष्ठेऽहनि पादमात्रस्याऽऽरम्भः । पञ्चमेऽहनि जगत्या बृहत्तरं पादात्मकं शक्कर्याख्यं छन्दोऽभ्यारभ्यते । एतदभिप्रेत्याऽत्र स्तुतिः क्रियते । ज्यायोऽभ्यारम्भं चतुर्थेऽह्नि प्रयुज्यमाना विराट् छन्दसो ज्यायः अधिकतरं शक्कर्याख्यं छन्दोऽभ्यारभ्यते गानार्थमुपादीयते । यस्मिस्तादृशं पञ्चममहः परिहाय अतिक्रम्य षष्ठस्याऽह्नः पादमात्राभ्यासयुक्तस्य आरम्भ उपक्रमो भवति तेनाऽऽनुष्टुभप्रगाथकरणेन षष्ठमहरेवाऽऽरभन्ते सन्तत्यै सन्तानार्थम् अविच्छेदार्थम् ॥ १९ ॥

अथाऽस्य साम्नः प्रस्तावभागस्य परिमाणविशेषं विधाय स्तौति—

षोडशाक्षरेण प्रस्तौति षोडशिनमु चैवैतेनोद्यच्छति ॥२०॥

प्रथमतः षोडशभिरक्षरैः प्रस्तोता प्रस्तावभागं ब्रूयात् । तेन प्रस्तावेन षोडशिनमेव ग्रहं होमायोद्यच्छति ॥ २० ॥

अथास्मिस्तृचे सामान्तरं विधत्ते—

आन्धीगवं भवति ॥ २१ ॥

स्पष्टोऽर्थः ॥ २१ ॥

अस्मिस्तृचे (१)विराड्द्वयं सम्पादयन् अन्नाद्यहेतुरेतत्सामेति स्तौति—

यद्वा वा अन्या विराडक्षर्ग्योऽन्याऽस्माल्लोकात्पद्यया

---

१. विराड्द्वयं सम्पाद्याऽन्नाद्यहेतुरिति. क.पु. ।

विराजाऽन्नाद्यमवरुन्धेऽमुष्माद्क्षय्योभयोरनयोर्लो-
कयोरन्नाद्यमवरुन्ध आन्धीगवेन तुष्टुवानः ॥ २२ ॥

अत्र हि 'पुरोजिती' इत्याद्यानुष्टुबुत्तरे गायत्र्यौ। अतो दशपादा भवन्तीति तैर्निष्पद्यमाना पद्या अन्या विराट्। एतासु विद्यमानाक्षरपरिगणनायामशीतिसंख्यान्यक्षराणि भवन्ति। तत्र दशसंख्यया विभागे अन्ततो दशा (२)क्षराण्येव तिष्ठन्ति। तैरक्षरैर्निष्पद्यमाना अन्या विराट्। (३)ततः पद्यया विराजा अस्माद्भूलोकादेव अन्नाद्यमवरुन्धे लभते। अमुष्मात् स्वर्गाल्लोकादक्षय्यया विराजा अन्नाद्यमवरुन्धे यस्मादान्धीगवेन तुष्टुवानः स्तुतवान् अनयोरुभयोर्द्यावापृथिव्योर्लोकयोरन्नाद्यं अदनीयं प्रशस्तमन्नमवरुन्धे लभते ॥ २२ ॥

अथ 'सोमः पवते' इति तृचे गेयं साम दर्शयति—

वात्सप्रं भवति ॥ २३ ॥

वत्सप्रिणा दृष्टं साम वात्सप्रम्। तत् 'सोमः पवत' इति तृचे कार्यम्॥२३॥

वैराजस्य साम्न इव (४)अस्याऽप्यनुतोदवत्वात् साम्येनाऽस्मिन् वैराजं प्रतिष्ठितमित्यभिप्रेत्य स्तौति—

एतस्मिन्वै वैराजं प्रतिष्ठितं प्रतितिष्ठति वात्सप्रेण तुष्टुवानः ॥ २४ ॥

अयमभिप्रायः—अनुतोदो नामाऽभ्यासः। स च त्रित्वविशिष्टो वैराजस्य त्रिषु पादान्तेष्वधीयते वात्सप्रेऽपि तथाऽधीयते। उभयत्र चतुष्कृत्वोऽभ्यासः सूत्रकृता विकल्पेनोक्तः—'तस्य पदान्तांश्चतुरभ्यस्येयुस्तथा चातुर्थिकस्य वात्सप्रस्ये'ति। तस्येति प्राकृतं वैराजं परामृश्यते। तत्र च निदानकारेण व्यवस्था दर्शिता—'तेन वात्सप्रं सामाऽऽदृत्यात् यदि वैराजं त्र्यनुतोदं वात्सप्रमपि त्र्यनुतोदम्। यदि चतुरनुतोदं वात्सप्रमपि चतुरनुतोदमि'ति। सूत्रकृताऽप्युक्तम्—'समाधिं त्वि'ति। वैराजवात्सप्रयोः समाधिं साम्यं कुर्य्यादिति तस्याऽर्थः। एतदेवाभिप्रेत्य एतस्मिन् खलु वात्सप्रे वैराजं साम प्रतिष्ठितमिति कथनम्। यस्मादेवं तस्माद्वात्सप्रेणानेन तुष्टुवानः स्तुवन् प्रतितिष्ठति ॥ २४ ॥

अथाऽस्य साम्नः ऋषिसम्बन्धप्रदर्शनपुरस्सरं श्रद्धाफलतया स्तौति—

वत्सप्रीर्भालन्दनः श्रद्धां नाऽविन्दत स तपोऽतप्यत

---

२. अक्षराण्यवशिष्यन्त इति. क. पु. ३. तयोरिति. क. ख. पु.
४. अस्याऽप्यनुनोदादिति. क. ख. पु.।

**स एतद्वात्सप्रमपश्यत्स श्रद्धामविन्दत श्रद्धां विन्दामहा इति वै सत्रमासते विन्दते श्रद्धाम् ॥ २५ ॥**

(१)ऋषिः श्रद्धां सर्ववस्तुविषयामभिरुचिं नाऽविन्दत नाऽलभत। तल्लाभार्थं स ऋषिः तपस्तप्तवान्। तेन च तपसा स ऋषिरेतद्वात्सप्रं सामाऽपश्यत्। तेन साम्ना साधनेन श्रद्धामप्यविन्दत श्रद्धां विन्दामहै लभामहा इति खलु सत्रमासते द्वादशाहाख्यं यज्ञं कुर्वन्ति। तेनैतद्वात्सप्रं प्रयुञ्जानाः श्रद्धामभिरुचिं सर्ववस्तुगोचरां विन्दते लभते ॥ २५ ॥

अथैतदीयस्य निधनस्य अह्ना सङ्गतिं दर्शयन् प्रशंसति—

**ईनिधनं तथा ह्येतस्याऽह्नो रूपं निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥ २६ ॥**

ई इति निधनं यस्य तत्तथोक्तं वात्सप्रमपि ईकारान्निधनम्। तथाहि तथैव खल्वेतस्याऽह्नो रूपं पुरा विहितम् द्विनिधनं तृतीयस्य निधनं चतुर्थस्येति। किञ्च पवमानाः पवमानस्तोत्राणि निधनान्ताः निधनं ऋगक्षरव्यतिरिक्तं ई सा वाक् ई इत्यादिकं येषां ते निधनान्ताः तादृशानि भवन्त्यह्नो धृत्यै पवमानस्तोत्रस्यैतस्याऽह्नो धारणार्थम्। स्तोत्रं हि पुरस्तात् क्रियमाणेन हिङ्कारेण ऋगक्षरव्यतिरिक्तेनाऽवसानप्रयुक्तेन निधनेन उभयतः परिगृहीतत्वादृढं भवति। तद्वारा अहरपि अन्यथाऽभिधानस्थानेन निधनेन वियोगात् कृतमपि स्तोत्रं प्रशिथिलं स्यादित्यह्नोऽपि शैथिल्यं भवेत्। एवं सप्तसु सामसु तृचेषु क्रियमाणेषु एकविंशतिस्तोत्रीया निष्पद्यन्ते। तथा च एकविंश एवाऽस्य स्तोत्रस्य स्तोमो भवति ॥ २६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे
द्वादशाध्यायस्यैकादशः खण्डः ॥

## अथ द्वादशः खण्डः ॥

अथोक्थानां प्रथमस्य स्तोत्रीयं तृचं दर्शयति—

**'अग्निं वो वृधन्त'मिति ॥ १ ॥**

अयं तृचः प्रथमस्य मैत्रावरुणस्योक्थस्य स्तोत्रीय इत्यर्थः ॥ १ ॥

अस्मिंस्तृचे वृधन्तमिति वृधि धातुः श्रूयते। तत्सूचितमर्थमाह—

**अवर्द्धन्त ह्येतर्हि यजमानमेव तया वर्द्धयन्ति ॥ २ ॥**

---

१. भालन्दनः भलन्दनस्य पुत्रः वत्सप्रीर्नाम।

एतर्हि एतस्मिन् काले तृतीयसवनावसाने अवर्द्धन्त। हि यस्माद्वाक्यरुपुरोडाशादिभिर्वृद्धाः समृद्धाः अभूवन्, तस्माद्देतया वृधिधातुयुक्तयर्चा यजमानमेव वर्द्धयन्त्युद्गातारः ॥ २ ॥

अथ द्वितीयस्य ब्रह्मण उक्थस्य स्तोत्रीयं तृचं दर्शयति—

"वयमु त्वामपूर्व्य" इत्यपूर्व्वाᳬ ह्येतर्हि प्रजापतेस्तनूमगच्छन्नपूर्व्वमेवैतया यजमानं गमयन्ति ॥ ३ ॥

'वयमु त्वा'मिति तृचो द्वितीयस्योक्थस्य स्तोत्रीयः कार्य्यः। तत्सम्बन्धिना(१) अपूर्वशब्देन सूचितोऽर्थः प्रतिपाद्यते। एतर्ह्येतस्मिन् काले अपूर्व्वाः अदृष्टपूर्व्वाः खलु प्रजापतेस्सर्वकारणभूतस्य विधातुस्तनुं शरीरं हि अगच्छन् आप्नुवन् देवाः। तस्मादपूर्वशब्दयुक्तयैतया स्तोत्रियया अपूर्वं अभूतं दिव्यं फलमेव यजमानं गमयन्ति प्रापयन्ति ॥ ३ ॥

अथ तृतीयमच्छावाकोक्थस्य स्तोत्रीयं तृचं विधत्ते—

"इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदमि" ति ज्यैष्ठ्यᳬ ह्येतर्हि वाचोऽगच्छन् ज्यैष्ठ्यमेवैतया यजमानं गमयन्ति ॥४॥

'इममिन्द्र सुतं पिबे'ति तृतीयस्योक्थस्य स्तोत्रीयस्तृचः कार्य्यः। एतर्ह्येतस्मिन्नन्तरे ज्यैष्ठ्यमतिशयितं प्राशस्त्यं वाचोऽगच्छन् स्तुतशस्त्ररूपाणां सर्वासां वाचां प्रयुक्तत्वात्। अतो ज्यैष्ठ्यलिङ्गयुक्तया स्तोत्रियया यजमानं ज्यैष्ठ्यमतिशयितं प्राशस्त्यमेव गमयन्ति ॥ ४ ॥

अथ 'अग्नि व' इति प्रथमस्योक्थस्य विहिते तृचे गेयं साम दर्शयति—

सैन्धुक्षितं भवति ॥ ५ ॥

सिन्धुक्षिता दृष्टं सैन्धुक्षितम्। तत्साम तस्मिंस्तृचे कार्यम् ॥ ५ ॥

अथोक्तमृषिसम्बन्धं दर्शयन् विशिष्टफलहेतुतयैतत् स्तौति—

सिन्धुक्षिद्वै राजन्यर्षिर्ज्योगपरुद्धश्चरन् स एतत् सैन्धुक्षितमपश्यत् सोऽवागच्छत् प्रत्यातिष्ठदवगच्छति प्रतितिष्ठति सैन्धुक्षितेन तुष्टुवानः ॥ ६ ॥

सिन्धुक्षिन्नाम राजन्यो राजपुत्रः ऋषिः ज्योक् चिरकालं अपरुद्ध अज्ञानेनाऽऽवृतश्चरन् सञ्चरणशीलश्चाऽऽसीत्। स ऋषिरेतत् सैन्धुक्षितं नाम सामाऽपश्यत् तपसो बलात् दृष्टवान्। तदनन्तमनेन साम्ना साधनेन अवागच्छत् सर्वमजानात्, तथा प्रत्यातिष्ठत्(२) प्रतिष्ठातत्परोऽभव-

१. अपूर्वसम्बन्धेनेति. ग. पु. २. प्रतिष्ठितश्चेति. क. ख. पु.

द्राज्ये । अतोऽद्यतनोऽपि सैन्धुक्षितेन स्तुवन्नवगच्छति प्रतितिष्ठति च ॥

'वयमु त्वामपूर्व्ये'ति द्वितीयस्योक्थस्य विहिते तृचे गेयं साम दर्शयति—

**सौभरं भवति बृहतस्तेजः ॥ ७ ॥**

'बृहतो वा इन्द्रो वृत्राय वज्रं प्राहरत्तस्य तेजः परापतत् तत् सौभरमभवदि'ति ब्राह्मणात् सौभरं साम बृहत्साम्नस्तेजः । एतदस्मिन् 'वयमुत्वामि'ति तृचे कार्य्यम् ॥ ७ ॥

अथैतत् स्तौति—

**पन्नमिव वै चतुर्थमहस्तदेतेन बृहतस्तेजसोत्तभ्नोति सौभरेण ॥ ८ ॥**

पन्नं अधस्तात् पतितमिव खल्वेतत् चतुर्थमहरतीतेष्वहःसु(१) बृहतीष्वेतत्पृष्ठस्तोत्रं क्रियते । बृहती च षट्त्रिंशदक्षरा । अस्मिन्नहनि ततोन्यूनासु विराट्सु प्रथमं पृष्ठस्तोत्रं विहितम् । तस्मादधः पतितमिव वै तदहः । एतेन सौभरेण बृहतस्तेजसा तच्चतुर्थमहरुत्तभ्नोति उत्तभ्नं उपर्य्यवस्थापितं करोत्युद्गाता ॥ ८ ॥

अथ तृतीयस्योक्थस्य विहिते 'इममिन्द्रसुतमि'ति तृचे गेयं साम दर्शयति—

**वासिष्ठस्य प्रिय भवति ॥ ९ ॥**

वासिष्ठस्य प्रियमिति समुदायः साम्नस्संज्ञा । तत्तस्मिंस्तृचे गातव्यम् ॥ ९

(२)अथैतां संज्ञां निर्ब्रुवन् स्तुवतः फलमाह—

**एतेन वै वसिष्ठ इन्द्रस्य प्रेमाणमगच्छत् प्रेमाणं देवतानां गच्छति वासिष्ठेन तुष्टुवानः स्तोमः ॥ १० ॥**

एतेन खलु साम्ना पुरा वसिष्ठ ऋषिः इन्द्रस्य प्रेमाणं प्रियत्वमगच्छत् प्राप्नोत् । प्रियशब्दादिमनिचि(३) प्रियस्थिरस्फिरोरुबहुले'त्यादिना प्रादेशः । तस्मादस्य साम्नो वसिष्ठस्य प्रियमिति नाम सम्पन्नम् । तस्मादद्यतनोऽपि वासिष्ठेनाऽनेन स्तुवन् यजमानो देवानां प्रेमाणं प्रियत्वं गच्छति । एषु च त्रिषु स्तोत्रेषु पूर्वोक्त एवैकविंशस्तोमः कार्य्यः ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे सायणीये वेदार्थप्रकाशे द्वादशाध्यायस्य द्वादशः खण्डः ॥

---

१. बृहतीष्वेव पृष्ठस्तोत्रमिति. क. ख. पु.

२. तथैतत्संज्ञामर्थान्निब्रुवन्निति. क. ख. पु. ३. पा. सू. ६. ४. १५७.

## अथ त्रयोदशः खण्डः ॥

इत्थं पञ्चदशस्तोत्राणि गतानि । अथैतस्य चतुर्थस्याऽह्नः षोडशिमत्वात् तत्र षोडशिस्तोत्रे बृहत्साम द्विपदासु स्तोतव्यमिति विधित्सुराह—

**इन्द्रश्च बृहच्च समभवतां तमिन्द्रं बृहदेकया तन्वाऽत्यरिच्यत तस्या अबिभेदनया माऽभिभविष्यतीति सोऽब्रवीत् षोडशी तेऽयं यज्ञक्रतुरस्त्विति स षोडश्यभवत्तदस्य जन्म ॥ १ ॥**

देवानां मध्ये इन्द्रश्च साम्नां मध्ये बृहत्साम च समभवतां प्रजापतेरसो बाहुभ्याञ्च सम्भूतौ सहोत्पन्नावभूताम् । (१)एवं सहोत्पत्यनन्तरं तमिन्द्रं बृहत्साम एकया तन्वा एकेन (२)शरीराङ्गेणाऽत्यरिच्यत अतिरिक्तमधिकमभूत् । ततस्स इन्द्रः तस्या बृहतस्तन्वा अतिरिक्ताया अबिभेत् भीतवान् । अनयाऽतिरिक्तया तन्वा मां बृहत्सामाऽभिभविष्यति पराभविष्यतीति । एवं (३)भीतस्सन् इन्द्रोऽब्रवीत्—हे बृहत् ते तव येयमतिरिक्ता तनूः अयं षोडशी नाम यज्ञक्रतुरस्त्विति षोडशस्तोत्राणि षोडश शस्त्राणि च यस्माऽसौ षोडशी षोडश्याख्यः सोमयागो भवत्वित्यर्थः । एवमिन्द्रेणोक्ते तदनन्तरं स षोडश्यभवत् उक्तस्तोत्रपञ्चदशकापेक्षया अतिरिक्ता या बृहतस्तनूः सा षोडशी षोडशस्तोत्रशस्त्रवान् यज्ञक्रतुरभवत् । अस्य षोडशिनस्तदेव जन्मोत्पत्तिर्बृहतः सम्बन्धिन्यतिरिक्ता तनूः विहितानां पञ्चदशानां स्तोत्राणां यत् षोडशसंख्यापूरकं स्तोत्रं तदात्मना जातेत्यर्थः ॥ १ ॥

तस्माद्बृहत्साम षोडशिस्तोत्रतया कार्य्यमित्याह—

**अति श्रिया भ्रातृव्यं रिच्यते यो गायत्रीषु द्विपदासु बृहता षोडशिना स्तुते ॥ २ ॥**

यच्छब्दश्रवणात्तच्छब्दाध्याहारः । सोऽयं श्रिया सम्पदा भ्रातृव्यं शत्रुमतिरिच्यते अधिको भवति । यो गायत्रीषु द्विपदासु बृहता षोडशिना षोडशिसाम्ना स्तुते स्तावयतीत्यर्थः ॥ २ ॥

---

१. सहोत्पन्नामिति. ग. पु.  २. शरीरेणाऽनेनेति. ग. पु.

३. भूतस्स इन्द्र इति. क. ख. पु.

काः पुनस्ताः द्विपदा इत्यत आह—

"उप नो हरिभिः सुत"मित्येता वै गायत्र्यो द्वि-
पदा एतासु स्तोतव्यम् ॥ ३ ॥

"उप नो हरिभिः सुत"मित्याद्याः उत्तराग्रन्थे समाम्नाताः। एता एव गायत्र्यो द्विपदाः। यद्यपि तास्त्रिपदा गायत्र्यः तथाप्यु'प नो हरिभिः सुत'मिति प्रथमपाद एव तृतीयपादात्मना पुनः पुनरभ्यस्यते इति तासां द्विपदात्वम्। एतासु द्विपदासु बृहता साम्ना स्तोतव्यमित्येकः पक्षः॥३॥

अथ पक्षान्तरं विधित्सुः सामान्तरस्योत्पत्तिमाह—

इन्द्रः प्रजापतिमुपाधावद्वृत्रꣳ हनानीति तस्मा एतामनुष्टुभमपहरसं प्रायच्छत्तया नाऽस्तृणुत यदस्तृता व्यनदत्तन्नानदस्य नानदत्वम् ॥ ४ ॥

इन्द्रः पुरा वृत्रं असुरं हन्तुं स्वयं(१) अशक्तस्सन् प्रजापतिं स्रष्टारं (२)स्वपितरमुपाधावदुपागच्छत्। किं कुर्वन्? वृत्रमसुरमहं हनानि हननसमर्थो भवामि यथाऽहं हन्तुं शक्ष्यामि तथा मां कुर्विति ब्रुवन्। तस्मा उपगतायेन्द्राय अपहरसं अपगतहरसं(३) तेजःप्रतिपादकेन हरश्शब्देन विधुरामेतां प्रत्यस्मा इत्यादिकमनुष्टुभमृचं प्रायच्छत् प्रादात्-अनया वृत्रं जहीति। तत इन्द्रस्तां तस्मिन् वृत्रे प्राक्षिपत्। तया स नाऽस्तृणुत नाऽहिंस्यत। स्तृ हिंसायामिति धातुः। स चाऽस्तृतो अहिंसितः सन् यत् व्यनदत् विशेषेण शब्दमकारोत् तन्नानदं सामाऽभवत्। यस्मादेवं नदनाज्जातं तत्तस्मान्नानदस्य साम्नो नानदत्वं नानदमिति नाम सम्पन्नम्॥४॥

इत्थं पक्षान्तरोपयुक्तं साम प्रदर्श्य अथ (४)तस्याऽऽधारभूताः स्तोत्रीया ऋचो विवक्षुराह—

तं पुनरुपाधावत्तस्मै सप्तानाꣳ होत्राणाꣳ हरो निर्म्माय प्रायच्छत् तमस्तृणुत ॥ ५ ॥

तं प्रजापतिमिन्द्रः पुनरुपाधावत् उपागच्छत् त्वद्दत्तयाऽनुष्टुभा नाऽसा वृत्रो हत इति ब्रुवन्। ततस्तस्मै इन्द्राय प्रजापतिः सप्तानां होत्राणां होतृमैत्रावरुणादयः सप्त वषट्कर्तारः तेषामार्त्विज्यानि होत्रशब्देनोच्यन्ते सप्तसंख्यानां होतृमैत्रावरुणादिसम्बद्धानां कर्म्मणां हरस्तेजो निर्म्मायोत्पाद्य एकीकृत्य प्रायच्छत्। ततस्तेन हरसा तं वृत्रम-

१. अपराद्धस्सन्निति. ग. पु.     २. स्वामिनमिति. क. पु.
३. कामः तेजप्रतिपादकेनेति. क. पु.     ४. तस्याधनभूता इति. क. ख. पु.

स्तृणुत अवधीत् ॥ ५ ॥

एतद्वेदनफलमाह—

**स्तृणुते तं यं तुस्तूर्षते य एवं वेद ॥ ६ ॥**

यं शत्रुं तुस्तूर्षते हिंसितुमिच्छति तं स्तृणुते हिनस्ति स पुरुषः य एवं पूर्व्वोक्तमर्थं वेद जानाति ॥ ६ ॥

किन्तत इत्याह—

**तस्माद्धारिवतीषु स्तुवन्ति हरिवतीः शंसन्ति हरिवतीषु ग्रहो गृह्यते हरो ह्यस्मै निर्म्माय प्रायच्छत् ॥ ७ ॥**

यस्मादिन्द्रो हरसा प्रजापतिदत्तेन वृत्रमवधीत् तस्मात् कारणात् हरिवतीषु हरिशब्दयुक्तासु एकदेशविकृतमनन्यवद्भवतीति न्यायेन हरिशब्देन हरशब्दः प्रत्यभिज्ञायते। अत एतासु हरिवतीषु 'असावि सोम इन्द्र' इत्याद्यासु नानदेन षोडशिसाम्ना स्तुवन्तीत्येतत्पक्षान्तरम्। तथा हरिवतीः हरिशब्दयुक्ता एव ये होतारः शंसन्ति तथा हरिवतीषु चक्षुरादिशत्रुहननमित्याद्यास्वृक्षु पठ्यमानासु अध्वर्युणा ग्रहः षोडश्याख्यो गृह्यते। तस्मादिन्द्राय हरो हि हरशब्दवाच्यं खलु तेजो निर्म्माय पुरा प्रजापतिः प्रायच्छत् दत्तवान् ॥ ७ ॥

सप्तानां होत्राणां हरो निर्म्माय प्रायच्छदिति यदुक्तं तस्योपपादकं लिङ्गं अस्मिन् षोडशिस्तोत्रे दर्शयति—

**एकविंशायतनो वा एष यत् षोडशी सप्त हि प्रातस्सवने होत्रा वषट्कुर्व्वन्ति सप्त माध्यन्दिने सवने सप्त तृतीयसवने ॥ ८ ॥**

यत् यष्षोडशी एषः एकविंशायतनो वा एकविंशस्तोमस्याऽऽयतनभूत आश्रयभूतः। तत् कुतो हेतोः? प्रातस्सवने सप्तसंख्याकाः होत्राः होतृमैत्रावरुणादयः ऋत्विजो वषट्कुर्व्वन्ति प्रस्थितयाज्याद्याभिर्वषट्कृत्य यजन्ते। तथोत्तरयोस्सवनयोरपीत्येकविंशतिसंख्या होत्रा भवन्ति। हि यस्मादेवं तस्मात् षोडशिन एकविंशायतनत्वम् ॥ ८ ॥

इत्थं बृहन्नानदाख्यं(१) सामद्वयं विकल्पेन षोडशिसाम कर्त्तव्यमित्युक्तम्, अथ स्वाभिमतं पक्षान्तरं दर्शयति—

**गौरीवितं भवति ॥ ९ ॥**

गौरीवितं साम 'इन्द्रं जुषस्व प्रवहे'ति तृचे षोडशिसाम कार्य्यम् ।९।

१. सामद्वितयमिति. क. ख. पु.

अथाऽस्य साम्नः ऋषिसम्बन्धप्रदर्शनपुरस्सरमुत्पत्तिं दर्शयन् स्तौति—

**गौरीवितिर्वा एतच्छाक्त्यो ब्रह्मणोऽतिरिक्तमप-श्यत्तद्गौरीवितमभवदतिरिक्तं वा एतदतिरिक्तेन स्तुव-न्ति यद्गौरीवितेन षोडशिनꣳ श्वस्तनवान् भवत्यपि प्र-जाया उपक्लृप्तः ॥ १० ॥**

अतिरिक्तं वा एतदित्यन्तं पूर्ववद्व्याख्येयम् । यद्गौरीवितेन साम्ना षोडशिनं षोडशिस्तोत्रं प्रणयति अतिरिक्तेनाऽधिकेनैव तेन स्तुवन्ति तस्मादाधिक्यवता साम्ना स्तवनात् श्वस्तनवान् श्वः परस्मिन् दिवसे भवं श्वस्तनं तद्वान् प्रजायाः पुत्रपौत्रादिरूपायाः उपक्लृप्तः उपक-ल्पितः उपभोग्यश्च भवति ॥ १० ॥

पूर्वं नानदं साम षोडशिस्तोत्रतया कार्य्यमिति विहितम्, पश्चात्प-क्षान्तरत्वेन गौरीवितमपि । एवं सत्यष्टदोषग्रस्तो विकल्पस्स्यादिति मन्वानः एकस्मिन्नेव प्रयोगे देशभेदेनैते सामनी व्यवस्थापयितुमाह—

**विशालं लिबुजया भूत्याऽभ्यधादिति होवाचोपो-दितिर्गोपालेयोऽनुष्टुभि नानदमकर्गौरीवितेन षोड-शिनमस्तोष्टाऽञ्जसा श्रियमुपागान्न श्रिया अवपद्यत इति ॥ ११ ॥**

लिब्जया लिप उपदेहे उपदेह उपचयः लेपेन उपचयेन जाता लिब्जा-तया (१)सम्पूर्णया विभूत्या सम्पदा विशालं विस्तृतं यथा भवति तथा अभ्यधात् अभिहितवानुक्तवानिति खलु । गोपालेयो गोपालपुत्र उपोदितिर्नाम ऋषिरुवाच पुरा प्रोक्तवान् । अभिधानप्रकार उच्यते—अ-नुष्टुभि चतुर्थेऽहनि आर्भवपवमाने पुरोजितीति योऽयं आनुष्टुभस्तृच-स्तस्मिन्नानदं साम अकः कृतवान् गौरीवितेन साम्ना च षोडशिनम स्तोष्ट षोडशिस्तोत्रं कृतवान् । एवं सामद्वयं व्यवस्थया कृत्वा अञ्जसा-आर्जवेन श्रियं सम्पदं उपागात् उपागच्छत् । उपगतया च तया श्रिया नाऽवपद्यते न कदाचिद्धीयत इति ॥ ११ ॥

कोऽसावभिदध्यादिति तमाह—

**एष वै विशालं लिबुजया भूत्याऽभिदधाति योऽनु-**

१. उपचयेन जातया सम्पूर्णयेति क. ख. पु.

**ष्टुभि नानदं कृत्वा गौरीवितेन षोडशिना स्तुतेऽश्नुते
श्रियमुपैति न श्रिया अवपद्यते ॥ १२ ॥**

एष वै एष खलु विशालं विस्तृतं लिबुजया उपाचितया भूत्वा ऐ·
श्वर्य्येण आभिद्धाति यो यजमानः अनुष्टुभि आनुष्टुभे तृचे नानदं
साम कृत्वा गौरीवितेन षोडशिना षोडशिसाम्ना स्तुते तदनन्तरमश्नु·
तेऽऽजेवन श्रियमुपगच्छति। न च तया श्रिया वियुज्यते ॥ १२ ॥

इत्थं सामद्वयं व्यवस्थाप्य षोडशिसाम्ना स्तोत्रीयाः कामना
भेदेन विभिन्नाः प्रदर्शयन्नेकं पक्षमाह—

**शाक्वरीषु षोडशिना स्तुवीत यः कामयेत वज्री
स्यामिति ॥ १३ ॥**

षट्पञ्चाशदक्षरा ऋचः शाक्वर्य्यः। शाक्वरीषु षोडशिना षोडशि·
साम्ना स्तुवीत। यो यजमानः वज्री स्याम् (१)वज्रवान् वीर्य्यवान्
भवेयमिति स शाक्वरीषु षोडशिना स्तुवीत ॥ १३ ॥

तदेतदुपपादयति—

**वज्रो वै षोडशी वज्रः शाक्वर्यो वज्रेणैवाऽस्मै वज्रं
स्पृणोति वज्री भवति ॥ १४ ॥**

षोडशिनः शाक्वरीणाञ्च वज्रवद्वृत्रहननसाधनत्वाद्वज्रत्वम्। अत्र
च शाक्वरीषु षोडशिसाम्ना स्तवनात् वज्रेण वज्रात्मकेनैव षोडशिना
शाक्वर्य्याख्यं वज्रं अस्मै यजमानाय स्पृणोति बलयति संयोजयति त·
र्पयति वा। स्पृप्रीतिबलयोरिति धातुः। स च यजमानो वज्री वज्रवान्
भवति ॥ १४ ॥

अथ फलान्तराय स्तोत्रीयान्तरं विधत्ते—

**अनुष्टुप्सु षोडशिना स्तुवीत यः कामयेत न मा
वागतिवदेत् ॥ १५ ॥**

अनुष्टुप्सु अनुष्टुप्छन्दस्कासु ऋक्षु षोडशिसाम्ना स्तुवीत मा मां
वाक् परैः प्रयुज्यमानं वाक्यं नाऽतिवदेत् आतिक्रम्य न ब्रूयादिति यो
यजमानः कामयेत, सोऽनुष्टुप्सु षोडशिना स्तुवीत ॥ १५ ॥

अथैतदुपपादयति—

**वज्रो वै षोडशी वागनुष्टुब्वज्रेणैवाऽस्मै वाचं**

---

१. वज्रवानिव भवेयमिति. क. ख. पु.

स्पृणोति नैनं वागतिवदति ॥ १६ ॥

अस्मै यजमानाय वज्रेणैव वाचं स्पृणोति प्रीणयति । अत एनं वाङ्नाऽतिवदति । शिष्टं स्पष्टम् ॥ १६ ॥

काः पुनस्ता अनुष्टुभ(१) इति तत्राऽऽह—

"असावि सोम इन्द्र त" इत्येतासु स्तोतव्यम् ॥१७॥

'असावि सोमं' इत्याद्यास्तिस्रोऽनुष्टुभ एतासु गौरीवितेन षोडशिसाम्ना स्तोतव्यम् ॥ १७ ॥

अथाऽन्नाद्यकामस्य षोडशिस्तोत्रीया दर्शयति ।

विराट्स्वन्नाद्यकामः षोडशिना स्तुवीत वज्रो वै षोडशी वैराजमन्नं वज्रेणैवाऽस्मा अन्नꣳस्पृणोत्यन्नादो भवति ॥ १८ ॥

विराट्छन्दस्कासु ऋक्षु अन्नाद्यकामः अन्नञ्च तदद्यं अन्नाद्यं तत्कामनो यजमानः षोडशिसाम्ना स्तुवीत । वज्ररूप एव षोडशी । अन्नञ्च वैराजं विराट्सम्बद्धं अस्मै यजमानाय वज्रेणैव अन्नं स्पृणोति । तदनन्तरं स यजमानोऽन्नादो भवति ॥ १८ ॥

काः पुनस्ता विराज इत्यत आह—

"प्र वो महे वृधे भरध्वमि"त्येतासु स्तोतव्यम् ॥ १९ ॥

'प्र वो मह' इत्याद्यास्तिस्रो विराज इत्येतासु गौरीवितेन स्तोतव्यम्॥१९॥

एतासु विद्यमानान्यक्षराणि विभज्य स्तौति —

त्रयस्त्रिꣳशदक्षरा वा एता विराजो यदेकविंशतिः प्रतिष्ठा सा यद्द्वादश प्रजातिः सा ॥ २० ॥

एताः 'प्रवो मह' इत्याद्या विराजः त्रयस्त्रिंशदक्षरा वै त्रयस्त्रिंशदक्षराः खलु, प्रतिपादमेकादशाक्षरत्वात् । तत्र एकविंशतिः आदितः एकविंशतिसङ्ख्याकान्यक्षराणीति यत् सा प्रतिष्ठा स्तोमानां मध्ये एकविंशः प्रतिष्ठाहेतुः । तत्स्मादस्यास्ततोऽवशिष्टानि यत् द्वादशाक्षराणि सा प्रजातिः प्रजानामुत्पत्तिः गर्भाधानादूर्ध्वं द्वादशमासात्मके सम्वत्सरे पूर्णे हि प्रजाः प्रजायन्ते ॥ २० ॥

एतद्वेदनफलमाह—

प्रतिष्ठाय प्रजायते नो वाऽन्तस्थायाऽऽर्यते य एवं वेद॥२१॥

---

१. इत्यत आहेति. क. ख पु.

प्रतिष्ठाय उत्कृष्टे स्थाने प्रतिष्ठितो भूत्वा ततः प्रजायते पुत्रादिरूपेणोत्पद्यते नो नैव च अन्तस्थायां अन्तर्मध्ये अवस्थितायां प्रजायां जीर्यते हीयते अपक्षीयते । ज्यावयोहानाविति धातुः । य एवमासु विराट्सु उक्तां प्रतिष्ठां प्रजातिञ्च वेद ॥ २१ ॥

एवं कामनाभेदेन स्तोत्रीयाणां विकल्पा उक्ताः । अथ नित्यप्रयोगे 'इन्द्र जुषस्वे'त्याद्यास्तिस्र ऋचो गौरीवितस्य षोडशिसाम्नस्स्तोत्रीयाः कार्य्या इत्यभिप्रेत्य तत्रत्यानुपसर्गान्विदधाति—

**अथ वा एता एकपदास्त्र्यक्षरा विष्णोश्छन्दो भुरिजः शाक्वर्यः ॥ २२ ॥**

'इन्द्रं जुषस्वे'त्याद्यास्तिस्र ऋचः पञ्चपदाः पादाश्च पञ्चाक्षराः । तत्र प्रथमायामृचि प्रथमपादात् ऊर्द्ध्वं प्रवहेति त्रीण्यक्षराण्याम्नातानि । द्वितीयपादात्परमपि हरिहेति अक्षरत्रयमाम्नातम् । तथा तृतीयपादात्परमपि मतिर्न्नेत्यक्षरत्रितयम् । अविशिष्टौ पञ्चाक्षरौ द्वौ पादौ । आदितः पञ्चाक्षरास्त्रयः पादा इति पञ्चाक्षरपादाः पञ्चपादाः प्रथमाः । तत्राऽऽद्येषु त्रिषु पादेषु प्रवहहरिहमतिन्न इत्येतास्त्र्यक्षरा एकपदाश्शाक्वर्य्य इति च उपसर्गा इति चाऽऽख्यायन्ते एवमुत्तरयोरपि । तथा च प्रत्यृचं त्रयस्त्रय उपसर्गा इति तृचेन भवन्ति एतास्तैर्विरहिता 'इन्द्र जुषस्वे'त्याद्याः पञ्चविंशत्यक्षरा गायत्र्यो भवन्ति । तैः सहिताश्चतुस्त्रिंशदक्षरा अनुष्टुभो भवन्ति । अत्र निदानकारः 'तस्यैता ऋचः पञ्चविंशत्यक्षरा पञ्चपदाः ।पञ्चाक्षरपादाः नवोपसर्गाक्षराणि आदितस्त्रयाणां पादानां त्रीणि त्रीण्युपसर्गाक्षराणि पादान्तेषु भवन्ति । तेऽष्टाक्षरास्सम्पद्यन्ते । पञ्चाक्षरावुत्तरौ दशाक्षरो वैकः ताश्चतुस्त्रिंशदक्षरास्सम्पद्यन्त", इत्यादिना इममेवाऽर्थं बहुधा प्रपञ्चितवान् । तत्र या एताः प्रवहाद्या (१)उपसर्गास्ते प्रदर्श्यन्ते अथे इत्यादिना । अथेति पक्षान्तरपरिग्रहे 'इन्द्रं जुषस्वे'त्यादीनां तिसृणां आदितस्त्रिभ्यः पञ्चाक्षरपादेभ्य ऊर्द्ध्वं यानि प्रवहेत्यादीनि त्रीण्यक्षराणि एतास्त्र्यक्षरा एकपदा विष्णोश्छन्दसः विष्णुसम्बन्धीनि छन्दांसि भुरिजः शाक्वर्य्यः भुरिजनामिकाः शाक्वरीविशेषाः ॥ २२ ॥

एतासां शीघ्रफलसाधनत्वमाह—

**एताभिर्वा इन्द्रो वृत्रमहन् क्षिप्रं वा एताभिः पाप्मानꣳ हन्ति क्षिप्रं वसीयान भवति ॥ २३ ॥**

१. उपसर्गा इति नाऽस्ति क. ख. पु.

एताभिः शक्वरीभिः खलु पुरा इन्द्रो वृत्रमसुरं हतवान्। आभिर्वृत्रमशकं हन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते इति निरुक्तम्। यस्मादेवं तस्मादेकपदाभिर्भुरिजशक्वरीभिः क्षिप्रं पाप्मानं हन्ति विनाशयति। क्षिप्रं शीघ्रं वसीयान् वसुमत्तरः श्रेष्ठश्च भवति ॥ २३ ॥

अथैता एकपदाः 'इन्द्र जुषस्व'त्याद्याश्च संयुज्य स्तौति—

**चतुस्त्रिꣳशदक्षराः सꣳस्तुतो भवति त्रयस्त्रिꣳशद्देवताः प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतिमेवोपयन्त्यरिष्ट्यै ॥ २४ ॥**

प्रत्यृचं प्रवह्लाद्यास्तिस्रस्तिस्र एकपदाः ताश्च संस्तुताः प्रत्यृचं नव नवाक्षराणि सम्पद्यन्ते। पञ्चाक्षरैः पञ्चभिः पादैः पञ्चविंशत्यक्षराणि सम्पद्यन्ते। ता उभयोर्मिलित्वा प्रत्यृचं चतुस्त्रिंशदक्षराः संस्तुतः सह स्तुतः स्तोत्रचतुस्त्रिंशदक्षरात्मकस्समुदायो भवति। तस्याऽऽदितः त्रयस्त्रिंशदक्षरैः त्रयस्त्रिंशत्संख्याका देवताः प्राप्नोति—अष्टौ वसवः, एकादश रुद्राः, द्वादशाऽऽदित्याः, इन्द्रश्च वषट्कारश्चेति। त्रयस्त्रिंशद्देतासां देवतानां प्रजापतिश्चतुस्त्रिंशत् संख्यापूरको भवति चतुस्त्रिंशेनाऽक्षरेण चतुस्त्रिंशं प्रजापतिमेवोपयन्ति उपगच्छन्ति अरिष्ट्यै अहिंसायै ॥ २४ ॥

अथोद्गातृणा षोडशिस्तोत्रसमये हिरण्यधारणं विधत्ते—

**हिरण्यꣳ सम्प्रदायꣳ षोडशिना स्तुवते ज्योतिष्मानस्य षोडशी भवति ॥ २५ ॥**

हिरण्यं सुवर्णं सम्प्रदायं अन्योन्यस्मै प्रदाय प्रदाय उद्गातारः षोडशिसाम्ना स्तुवते। अस्य साम्नः यां यां भक्तिं यो यो ब्रूते स स हिरण्यं धृत्वा तया भक्त्या स्तुवीतेत्यर्थः। तदुक्तं सूत्रकृता—'यो यस्सामाङ्गं ब्रूयात् स स हिरण्यं धारयेदि'ति। अत्र सम्प्रदायमिति णमुलप्रत्ययान्तस्तेन एकमेव हिरण्यं एकैकस्मै गानसमये दातव्यमिति गम्यते। 'षोडशिसाम्ना स्तोष्यमाण' इत्यादिना षोडशिस्तोत्राङ्गत्वेन यदुक्तं सूत्रकारेण तत्सर्वमत्राऽनुसन्धेयम्। स्वस्वभक्तिगानसमये उद्गातृभिर्हिरण्यस्य धारणादस्य यजमानस्य षोडशी ज्योतिष्मान् तेजस्वी भवति ॥ २५ ॥

अथैतस्मिन् षोडशिस्तुतिकाले अश्वस्य स्थापनं विधत्ते—

**अश्वः कृष्ण उपतिष्ठति साम्येक्ष्याय भ्रातृव्यलोकमेव स विषमꣳस्तिष्ठति ॥ २६ ॥**

कृष्णः कृष्णवर्णोऽश्वः सदसः पूर्वस्मिन् परस्मिन्वा द्वारे प्रत्यङ्मुखः प्राङ्मुखो वा उपतिष्ठति यथा उपस्थितो भवति तथा कुर्य्यादित्यर्थः । तदुक्तं सूत्रकारेण–'अश्वः कृष्णः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति शाण्डिल्योऽपरस्यां प्राङ्मुख इति धानञ्जय्य' इति । किमर्थमश्वस्योपस्थानं साम्येक्ष्याय साम्यमीक्षणं साम्येक्ष्यं साम्यदर्शनायेत्यर्थः । अपि च स उपस्थितोऽश्वः भ्रातृव्यलोकं शत्रुनिवासस्थानमेव विधमन् विविधमुखवायुना अपगमयंस्तिष्ठति ॥ २६ ॥

अथ द्विप्रकारोऽयं षोडशी विहृतोऽविहृतश्च । तत्र विहृतस्य 'इन्द्र जुषस्वे'त्याद्यास्तोत्रीया विहिताः । अविहृते 'त्व सावि सोम इन्द्र त, इत्याद्यास्तिस्त्रोऽनुष्टुभः स्तोत्रीयाः । अथैतासां अनुष्टुभं स्तोतुमाह—

**एकाक्षरं वै देवानामवमं छन्द आसीत्सप्ताक्षरं परमं नवाक्षरमसुराणामवमं छन्द आसीत् पञ्चदशाक्षरं परमं देवाश्च वा असुराश्चाऽस्पर्द्धन्त तान् प्रजापतिरानुष्टुभो भूत्वाऽन्तराऽतिष्ठत्तं देवासुरा व्यह्वयन्त स देवानुपावर्त्तत ततो देवा अभवन् पराऽसुराः ॥ २७ ॥**

देवानामवमं न्यूनतमञ्छन्द एकाक्षरं एकमेवाऽक्षरं यस्य तथाविधमासीत् । परमं अधिकं छन्दः सप्ताक्षरमासीत् । असुराणान्तु अवमं नवाक्षरमासीत् परमं पञ्चदशाक्षरम् । एवं सप्तभिः छन्दोभिस्सहिता देवाश्चाऽसुराश्चाऽस्पर्द्धन्त । तान् स्पर्द्धमानानुभयविधानन्तरा तेषाम्मध्ये प्रजापतिस्तेषां पिता अनुष्टुभः पादो भूत्वा अतिष्ठत् स्थितवान् । सप्ताक्षरं हि देवानां परमं छन्दः असुराणान्नवाक्षरन्न्यूनं अष्टाक्षरं तूभयसाधारण्येन मध्यऽवास्थितम । आनुष्टुभः पादश्चाष्टाक्षरः इति तद्रूपो भूत्वा प्रजापतिर्मध्यस्थोऽभवादित्यर्थः । तं मध्ये स्थितं प्रजापतिं देवाश्चाऽसुराश्च व्यह्वयन्त विविधमाह्वयन् । स च देवैरसुरैश्चाऽऽहूयमानः प्रजापतिः देवानुपावर्त्तत।पागच्छत, नाऽसुरान् । ततोऽनन्तरं देवा अभवन् (१)समृद्धा अभवन् । असुराः पराभवन् पराभूताः पराजिताः आसन् । आनुष्टुभेन प्रजापतिना सहायेन देवानामभिवृद्धिर्जातेति अनुष्टुप्समृद्धिहेतुः । अतोऽनुष्टुभस्तोत्रीयाः समृद्धिहेतव इत्यर्थः ॥ २७ ॥

एतद्वेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य भ्रातृव्यो भवति य एवं वेद ॥२८॥**

---

१. भूष्णवस्समृद्धा इति. क. ख. पु.

गतमेतत् ॥ २८ ॥

अथ देवैः केन छन्दसा आसुरं छन्दोऽपहृतमिति उभयं विविच्य दर्शयति—

**ते देवा असुराणामेकाक्षरेणैव पञ्चदशाक्षरमवृञ्जत द्व्यक्षरेण चतुर्दशाक्षरं त्र्यक्षरेण त्रयोदशाक्षरञ्चतुरक्षरेण द्वादशाक्षरं पञ्चाक्षरेणैकादशाक्षरᳪं षडक्षरेण दशाक्षरᳪं सप्ताक्षरेण नवाक्षरमष्टाभिरेवाऽष्टाववृञ्जत ॥ २९ ॥**

ते प्रजापतिसहायेन समृद्धा देवाः स्वकीयेनैकाक्षरेणैव छन्दसा असुराणां पञ्चदशाक्षरं यत्परमं छन्दस्तदवृञ्जत अपावर्जयन्। द्व्यक्षरेणात्मीयेन छन्दसा आसुरं चतुर्दशाक्षरं छन्दोऽवृञ्जत । एवमुत्तरत्रापि योज्यम् । अष्टाक्षरस्य छन्दसोऽन्तरालवर्त्तित्वेनोभयसाधारणत्वात् अष्टाभिरेवाऽक्षरैः आसुराण्यष्टाक्षराण्यवृञ्जत ॥ २९ ॥

एतद्वेदनफलमाह—

**एवमेव भ्रातृव्याद्भूतिं वृङ्क्ते य एवं वेद ॥ ३० ॥**

यथा देवाः स्वकीयैश्छन्दोभिः असुराणाञ्छन्दांसि क्रमेणाऽवर्ज्जयन् एवमेव भ्रातृव्यात् शत्रोः भूतिमैश्वर्य्यं वृङ्क्ते वर्जयति य एवमुक्तं ब्राह्मणार्थञ्जानाति ॥ ३० ॥

अथ प्रकारान्तरेण तद्वेदनस्य फलमाह—

**अपरुद्धयज्ञ इव वा एष यत् षोडशी कनीयस्विन इव वै तर्हि देवा आसन् भूयस्विनोऽसुराः कनीयस्वी भूयस्विनं भ्रातृव्यं वृङ्क्ते य एवं वेद ॥ ३१ ॥**

यत् योऽयं षोडशी नाम यज्ञक्रतुः एषः अपरुद्धयज्ञ इव वै। इवेत्यवधारणे। शत्रुभिरवरुध्यमानेन आक्रम्यमाणेन क्रियमाणो यज्ञोऽपरुद्धयज्ञः। तादृश एव खलु। तत्कस्य हेतोः ? तस्मिन् काले असुरैः सह युद्धसमये कनीयस्विनः (१)कनीयांसि एकाक्षरादीनि सप्ताक्षरान्तानि छन्दांसि आसुरेभ्यश्छन्दोभ्यो (२)न्यूनाक्षरत्वात् अल्पीयांसि तद्वन्तो देवाः अल्पा एवाऽऽसन्। नवाक्षरादीनि पञ्चदशाक्षरान्तानि छन्दांसि बह्वक्षरत्वात् भूयांसि तद्वन्तो असुरा महान्त आसन्। एवञ्च सति अधिकबलैस्तैरुपरुध्यमाना देवाः षोडशिनमाहृत्य (३)तत्रत्येनाऽऽनुष्टुभेन प्रजा-

१. अल्पीयांसीति. क. ख. पु. २. अल्पाक्षरत्वादिति. क. ख. पु.

३. मध्यवर्त्तिनेति. क. ख. पु.

पतिना तानधिकानसुरानभ्यभवन्। तस्मादेव षोडशी अवरुद्धयज्ञ इति य एवं वेद जानाति, स वेदिता कनीयस्वी अल्पीयानपि भूयस्विनं अधिकं भ्रातृव्यं शत्रुं वृङ्क्ते वर्जयति ॥ ३१॥

अथ यदुक्तं सूत्रकारेण 'हविर्द्धानं गत्वा षोडशिग्रहमवेक्षेतोद्गाता यस्मादन्य' इति तन्मन्त्रविहितमवेक्षणं विधत्ते—

"यस्मादन्यो न परो ऽस्ति जातो य आबभूव भुवनानि विश्वा। प्रजापतिः प्रजया सम्विदानस्त्रीणि ज्योतीꣳषि सचते स षोडशी"त्युद्गाता ग्रहमवेक्षते ॥३२॥

यस्मात्प्रजापतेस्सर्वकारणभूतादन्यो व्यतिरिक्तः परो जात उत्पन्नो नाऽस्ति,यश्च विश्वानि सर्व्वाणि भुवनानि भूतजातानि आबभूव (१)कारणात्मना व्याप्तोऽभूत्। भूप्राप्ताविति धातुः। स प्रजापतिः, प्रजानामीश्वरो देवः प्रजया आत्मीयया, सामान्याभिप्रायमेकवचनम्। स्वात्मनस्स्रष्टव्येन सर्व्वेण(२) कार्य्यजातेन सम्विदानः ऐकमत्यं गच्छन् त्रीणि ज्योतींषि चन्द्रसूर्य्याग्निरूपाणि, अथवा गार्हपत्यदक्षिणाग्न्याहवनीयात्मकानि तेजांसि सचते व्याप्नोति। स एव प्रजापतिः षोडशी षोडशिग्रहात्मना कार्य्यरूपेण वर्त्तत इति मन्त्रार्थः। अनेन मन्त्रेण उद्गाता खरे आसादितं षोडशिग्रहमवेक्षते ॥ ३२ ॥

एतद्वेदनं प्रशंसति—

ज्योतिष्मानस्य षोडशी भवति य एवं वेद ॥ ३३ ॥

स्पष्टमेतत् ॥ ३३ ॥

अथ पूर्ववदेतस्मिन् स्तोत्रे स्तोमक्लृप्तिं विधाय (३)स्तौति—

एकविंश एव स्तोमो भवति प्रतिष्ठायै प्रतितिष्ठति॥३४॥

पूर्वेषु स्तोत्रेषु यः स्तोमो विहितः स एवैकविंशोऽस्याऽपि स्तोत्रस्य स्तोमो भवति प्रतिष्ठायै प्रतिष्ठानार्थम्। अत एतेनैकविंशेन स्तोमेन (४)स्तुतेन यजमानः प्रतितिष्ठति ॥ ३४ ॥

---

१. कारणत्वेनेति. क. पु. २. कर्मजातेनेति क. पु.
३. प्रस्तौतीति. क. पु. ४. कृतेनेति. क. पु.

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपाल-साम्राज्यधुरन्धरेण (१) सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे ताण्ड्यमहाब्राह्मण द्वादशाध्यायस्य त्रयोदशः खण्डः ॥

द्वादशाध्यायः समाप्तिमगमत् ॥



१. सायणामात्येनेति क. पु.

सर्वविधपुस्तकप्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस सिटी।

९५ संस्कारदीपकः। म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः। सम्पूर्णः।
( कर्मकाण्ड वि० ८ ) रु० ८—

९६ वर्षकृत्यदीपकः। कालनिर्णयव्रतोद्यापनसहितः। म० म० पं० नित्यानन्दपन्त पर्वतीय विरचितः। ( कर्मकाण्ड वि० ९ ) रु० ३—

९७ श्रौतसूत्रम्। श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम्। (कर्म० वि० १०) रु० २-

९८ नलचम्पूः अथवा दमयन्तीकथा। महाकविश्रीत्रिविक्रमभट्टविरचिता। विषमपद प्रकाशाख्य [illegible] सहिता। भावबोधिनी टिप्पणी सहिता। (का० वि० १५) रु० १-

९९ श्री[illegible] श्रीमन्निम्बार्के महामुनीन्द्रविरचित वेदान्तपारिजात सौरभाख्य [illegible] तथा श्री श्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च [illegible]। ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—

१०० वाग्वल्लभः। सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छन्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागमधर्मिकेण कविपङ्क्वेन दुःखभञ्जनाभिधुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण काविचक्र[illegible] देवीप्रसाद पण्डितप्रवरेण कृतया वरवर्णिनी टीकया [illegible]। ( छन्दः शास्त्र वि० ४) रु० २—

१०१ सिद्धान्तलक्षणम्। श्रीजगदीशतर्कालङ्कारकृतम्। न्यायाचार्य श्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम्। (न्याय विभागे ४) ) रु० १—

१०२ वेदभाष्यभूमिकासंग्रहः। ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः )। [ वेद० वि० ५ ] रु० २-

१०३ माधवीयधातुवृत्तिः। श्रीमत्सायणाचार्यविरचिता। ( व्या० वि० १२) रु० ५—

१०४ बौधायनधर्मसूत्रम्। श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम्। [कर्म० वि० ११] रु० ४—

१०५ ताण्ड्यमहाब्राह्मणम्। सायणाचार्यविरचितभाष्यसहितम्। ( प्रथमोभागः ) ( वेद वि० ६ ) रु० ५—

१०६ न्यायमञ्जरी। जयन्तभट्टकृता। न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता। द्वितीयोभागः। [ न्या० वि० १५ ] रु० ३—

१०७ शारदातिलकम्। श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम्। ( तन्त्रशा० वि० १ ) रु० ५—

[illegible]का। म० म० श्रीशत्रुघ्नविरचिता। ( वेद० वि० ७ ) रु० २—

[illegible] श्रीमज्जगदीशतर्कालङ्कारविरचिता [illegible] श्रीकृष्णकान्तविद्यावागीश[illegible] [illegible]न्तीटीकया श्रीम[illegible] [illegible]विरचितया रामभद्रीटीकया च [illegible] न्यायतीर्थ पं० ढुण्ढिराजशास्त्रिकृतया छात्रोपयुक्तया [illegible] मूलकारिकार्थेन च सहिता। (न्या वि० १६) रु० ४—

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पणीयुक्त [illegible] षड्दर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया "तत्त्ववैशारदी"-व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीलोकार्पितमहत्त्वस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योतितम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम-साहित्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, एतदीयसंशोधनसम्पादनकर्तृकं च। ( योगशास्त्रविभागे ३ ) रु० [illegible]